आनन्दाश्रमसंस्कृतग्रन्थावलिः ।

ग्रन्थाङ्कः ९४

# संस्कारपद्धतिः ।

विद्वन्मुकुटहीरश्रीमदभ्यंकरोपाभिधभास्करशास्त्रि-
विरचिता ।

भट्टगोपीनाथदीक्षितविरचितोपोद्घातश्च ।

---

एतत्पुस्तकम्

वे० शा० सं० रा० महामहोपाध्यायाभ्यंकरो-
पाह्ववासुदेवशास्त्रिभिः संशोधितम् ।

तच्च

बी० ए० इत्युपपदधारिभिः

**विनायक गणेश आपटे**

इत्येतैः

पुण्याख्यपत्तने

**आनन्दाश्रममुद्रणालये**

आयसाक्षरैर्मुद्रयित्वा

प्रकाशितम् ।

---

शालिवाहनशकाब्दाः १८४६
खिस्ताब्दाः १९२४

---



मूल्यं सार्धरूपकद्वयम् ( २॥ )

# विज्ञप्तिः ।

---

प्रसिद्धमेवैतद्यत्समुद्रवलयाङ्कितेऽस्मिन्भूवलय आसेतु आहिमाचलं तत्तत्प्रदेशाद्यायामविस्तारविस्तृते परमपुरुषसंकल्पसृष्टाः स्वस्वप्रारब्धोपनतोच्चावचभावा हिरण्यगर्भप्रभृतिपिपीलिकापर्यन्ताः सर्वे प्राणिनः स्वभावत एव चतुर्विधपुरुषार्थान्तर्गतमोक्षापरपर्यायं सुखमभीप्सवो दुःखं परिजिहीर्षवश्च भवन्तीति । सुखं च यद्यपि स्रक्चन्दनवनिताप्रभृतिभिर्लौकिकैः साधनैः कैश्चित्कदाचिल्लब्धुं शक्यते तथाऽपि न तन्मोक्षशब्दभाक् । तस्य सातिशयत्वात्सदृक्षत्वाच्च । निरतिशयमेव च तद्वाञ्छन्तीत्येतद्विषये न कस्यापि विसंवादः । मोक्षश्च यावद्दुःखात्यन्ताभावरूपो ननु लोकान्तरावाप्तिजन्यवैषयिकसुखानुभवरूपः । अनुभवस्य शरीराधीनत्वेन शरीरस्य च विशरणस्वभावत्वेन भावितन्नाशजन्यदुःखसंसर्गस्य हिरण्यगर्भादावप्यवर्जनीयत्वेन लेशतोऽपि दुःखेनासंभिन्नसुखस्य क्वाप्यसंभवेन मोक्षस्य लौकिकसुखसमानाकारत्वापत्तेः । न च धर्मसाध्यनित्यनिरतिशयसुखाभिव्यक्तिरिति भट्टसर्वज्ञाद्यभिमतो मोक्षोऽस्त्विति वाच्यम् । तादृशनित्यसुखस्य प्रमाणसिद्धत्वाभावात् । न च श्रुतिरेव प्रमाणम् । योग्यानुपलब्धिबाधिते तदप्रसरात्प्रसरे च ग्रावाणः प्लवन्ते, इतिश्रुतिप्रतिपादितग्रावप्लवनेऽपि तथा कल्पनापत्तेः । तस्मात्कण्टकापसारणे सुखी संवृत्तोऽहमिति लौकिकप्रत्ययवद्दुःखनिवृत्तिरेव तत्र सुखशब्देनोपचर्यते । न पुनरस्ति सुखं नाम किंचिद्वस्त्वन्तरम् । मोक्षोपायश्च धर्म इति भगवन्निःश्वसितरूपो भगवानाम्नाय एव प्रतिपादयति । धर्मश्च वेदविधिबोधितं कर्मैव । तदुक्तं जैमिनिमुनिभिः—चोदनालक्षणोऽर्थो धर्म इति । चोदना वैदिको लिङादिवाच्यविधिर्लक्षणं प्रमाणं यस्य तादृशोऽर्थो यागादिर्धर्म इति तदर्थः । अत एवेशावास्योपनिषदि—

‘ कुर्वन्नेवेह कर्माणि जिजीविषेच्छतꣳ समाः ।
एवं त्वयि नान्यथेतोऽस्ति न कर्म लिप्यते नरे ॥

इति यावज्जीवं कर्मनिष्ठोक्ता । तथा भगवद्गीतास्वपि भगवता श्रीवासुदेवेनार्जुनं प्रति कर्मशब्देन धर्म एवोपदिष्टः श्रूयते–

कर्मणैव हि संसिद्धिमास्थिता जनकादयः ।
कुरु कर्मैव तस्मात्त्वं पूर्वैः पूर्वतरैः कृतम् ॥ इति ।

ननु कथं कर्मणो मोक्षसाधनत्वम् । उच्यते यद्यपि—तत्त्वमस्यादिवाक्योत्थं ज्ञानं मोक्षस्य साधनम् । ज्ञानादेव तु कैवल्यमित्यादिभिर्मोक्षस्य ज्ञानैकसाध्यत्वं प्रतिपाद्यते तथाऽपि विविदिषन्ति यज्ञेन, ज्ञानमुत्पद्यते पुंसां क्षयात्पापस्य कर्मणः, अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते, इत्यादिश्रुतिस्मृतिभिर्मोक्षसाधनब्रह्मात्मैक्यज्ञानस्य विविदिषानिबन्धनत्वाद्विविदिषायाश्च चित्तशुद्धिनिबन्धनत्वाच्चित्तशुद्धेश्च पापक्षयनिबन्धनत्वात्पापक्षयस्य च कर्मानुष्ठाननिबन्धनत्वान्मोक्षहेतुज्ञानोत्पत्तिप्रतिबन्धकदुरितक्षयाख्यचित्तशुद्ध्या विविदिषोत्पादनद्वारा विद्योत्पत्तौ कर्मणामुपयोगावधारणात्परम्परयाऽपि यथाकथंचित्तत्त्वाङ्गीकार इत्याशयात् । अत एव कूर्मपुराणे—

इत्येतदखिलं प्रोक्तमहन्यहनि वै द्विजाः ।
ब्राह्मणानां कृत्यजातमपवर्गफलप्रदम् ॥
नान्यो विमुक्तये पन्था मुक्त्वाऽऽश्रमविधिं स्वकम् ।
तस्मात्कर्माणि कुर्वीत तुष्टये परमेष्ठिनः ॥

इत्युक्तं संगच्छते । श्रीमदाचार्यचरणैरपि शारीरकभाष्ये—'सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत्' (३।४।२६) इति सूत्रे मोक्षसाधनज्ञानहेतुत्वमग्नीन्धनादिकर्मणां प्रतिपादितम् । एतावता मवन्धेनैहिकं संपदैश्वर्यादिरूपं पारलौकिकं स्वर्गादिरूपं तदुभयविलक्षणं जननमरणनिवृत्तिरूपं च सुखं सांपिपादयिषुभिः सर्वथा वेदविहितं धर्मैवावश्यमाचरणीयमिति सिद्धम् । ततश्चैतादृशमहामहिमशालि कर्मानुतिष्ठासूनां मङ्गलपथप्रदिदर्शयिषयाऽपगतायास तदवबोधाय तदनुष्ठानसौकर्याय च स्वत्वनिष्ठैः सदाचारनिरतैरीश्वरैकप्रवणाचित्तैर्वसिष्ठैरिवापरैर्व्याकरणन्यायमीमांसादिनिखिलशास्त्रपारदृश्वविद्वन्मुकुटहीरश्रीमद्भास्करशास्त्रिगुरुभिरस्म-

त्पितामहचरणैः संस्कारपद्धतिर्नाम ग्रन्थो निरमायि । तत्र गर्भाधानप्रभृतिसमुद्वाहान्ताश्चतुर्दश संस्कारास्तदङ्गभूतं तत्प्रसङ्गागतं च किंचिद्ब्रह्मयज्ञादिकमप्यवतारितम् । सेयं पद्धतिरनुष्ठानौपयिकं पदार्थजातं मन्त्रद्रव्यदेवतादिरूपं तत्तदङ्गभूतसुलभावबोधभाषावन्धघटितशास्त्रार्थविनिर्णयं च युक्तिसहमसंदिग्धमनुल्लङ्घितशिष्टसमुदाचारं सप्रमाणं तत्तत्प्रयोगपाठं चापि यथावत्प्रदर्शयति । तदेतस्यां न तादृशः कोऽपि विषयोऽवशेषि यदर्थमर्थीपिपुभिरनुतिष्ठासुभिश्चान्यत्रानुधाव्येत । किंच भट्टगोपीनाथदीक्षितविरचितः श्रौतस्मार्तगार्ह्यपदार्थाद्यनेकविधाचारविचारदर्शकप्रमाणभूततत्तदृषिप्रणीतपरःशतवचनपीयूषपरिप्लुतः प्रबन्ध उपोद्घातनामाऽप्यत्र ग्रन्थान्ते समग्राहीति सर्वाङ्गसौन्दर्यशालिनीयं पद्धतिरिति प्रत्यक्षं पद्धतिप्रत्यक्षभाजां शरीरभाजाम् । ननु चैतादृशा महेशभट्टाद्योऽनेके ग्रन्थाः प्राचीनैः संगृहीताः सन्तीति तैरन्यथासिद्ध्या कृतमनेन पिष्टपेषणायितवाद्विफलप्रयासेनेति चेन्न । तेषामतिप्रौढभाषागुम्फगुम्फितत्वाद्गभीरतरसुसूक्ष्मानेकन्यायमीमांसादिशास्त्रार्थसंदृब्धत्वान्नानाविधश्रुतिस्मृतिसूत्रोदितातिपुरातनानेकार्षिपरिगृहीताखिलमतप्रवचनजालजटिलत्वाच्चाकृतधियां मन्दमध्यमाधिकारिणां न ततो बोधः प्रादुर्भवतीति तेषां तदवगमाय कृतधियामपि शीघ्रं तदवगमाय च प्रयासस्य सफलत्वात् । एवं च दुरभिमानमनुजसमुत्थापितनवीनैतद्ग्रन्थवैयर्थ्यशङ्काऽपि नावतरति । नात्र संदेहावसरः । अथापि विद्वज्जनगोष्ठीनिष्ठसमयमनुसृत्य किंचिदिव प्रकृतौपयिकं लिलिखिषामः । तच्च कर्म त्रिविधम् । किंचिन्नित्यं किंचिन्नैमित्तिकं किंचित्काम्यं चेति । यथा—

'ततः पञ्च महायज्ञान्कुर्यादहरहर्गृही' ॥ इति ।

अत्राहरहरिति वीप्साश्रवणाद्वसन्ते वसन्ते ज्योतिषा यजेतेति विहितज्योतिष्टोमस्येव पञ्चमहायज्ञानां नित्यत्वं प्रतीयते । उक्तं चाऽऽश्वलायनेन—

*'महायज्ञाश्च नित्याः स्युः संध्यावच्चाग्निहोत्रवत्' ॥ इति ।*

नचाग्निहोत्रस्य यथाकालमननुष्ठाने प्रायश्चित्तस्मरणाद्युक्तं

तस्य नित्यत्वं महायज्ञविषये तु न तथा प्रायश्चित्तस्मरणमुपलभ्यत इति वाच्यम् ।

'अकृत्वाऽन्यतमं यज्ञं यज्ञानामधिकारतः ।
उपवासेन शुध्येत पाकसंस्थासु चैव हि' ॥

इति महायज्ञाकरणे प्रायश्चित्तस्मरणात् । ननु ततः पञ्च महायज्ञानित्यादिमहायज्ञकर्तव्यताप्रतिपादकं यन्मूलभूतं वचनं प्रदर्शितं तन्नोपपद्यते । यत्कारणं तेन विधीयमानस्यैव दुरधिगमत्वात् । न तावन्नित्यत्वं विधातुं शक्यम् । कामनाप्रवणस्वान्तानां विग्रहवतां फलत्वशून्ये बहुलद्रव्यव्ययशरीरायाससाध्ये नित्ये कर्मणि कथमपि प्रवृत्त्यनापत्तेः । नापि नैमित्तिकत्वम् । राहूपरागे स्नायादित्यप्रोपरागवन्निमित्ताश्रवणात् । न च मलिनं ते वपुः स्नायादित्यादौ सिद्धसाध्यसमभिव्याहारात्स्नाने मलिनवपुष्ट्वस्य निमित्तत्ववदहरहरिति कालस्यैव निमित्तत्वम् । परिगृहीतं चाऽऽग्रयणे शरत्कालस्य निमित्तत्वमिति वाच्यम् । तथा सति वसन्तस्य निमित्तत्वे ज्योतिष्टोमस्यापि नैमित्तिकत्वमापद्येत । न चापि काम्यम् । तद्विधिप्रतिपादके वाक्ये फलसंबन्धादर्शनात् । ननु अश्रुतफलसंबन्धेषु पञ्चमहायज्ञेषु विश्वजिता यजेतेत्यादौ विश्वजितीव निरतिशयसुखास्पदत्वेन सर्वाभिलषणीयत्वात्स्वभावसुन्दरः स्वर्ग एव फलत्वेन कल्पनीय इति सांप्रतम् । तदुक्तं जैमिनिना न्यायमालायां चतुर्थाध्यायस्य तृतीयपादे सप्तमे स्वर्गफलताधिकरणे—स स्वर्गः स्यात्सर्वान्प्रत्यविशिष्टत्वादिति । नैतन्मनोरमम् । पशुफलकामनाकामनाप्रयुक्तचित्रायागानुष्ठानानुष्ठानवत्स्वर्गफलकामनायां सत्यां पञ्चमहायज्ञानुष्ठानं तदकामनायां तु तदननुष्ठानापत्तेर्दण्डनिवारितत्वाभावात् । न चेष्टापत्तिः । सर्वजनपदेष्वेकान्तसमाहितमित्यादिधर्मसूत्रोपवर्णितचरितानामात्मवतां महाशयविशिष्टानां शिष्टानां तथाविधफलानपेक्षिणामपि यथाकालं निरन्तरं पञ्चमहायज्ञानुष्ठानदर्शनात् । तस्मान्महायज्ञानां काम्यत्वमङ्गीकृत्य पाक्षिकानुष्ठानं स्वीकर्तुं सर्वथाऽनुचितम् । ततश्च प्रकृते न स्वर्गः फलत्वेन कल्पनीयः । नापि वा प्रायश्चित्तरूपम् । एकादश्यामहोरात्रं

भुक्त्वा चान्द्रायणं चरेदित्यादौ पापसंयोगे तद्विधेरिवात्र विधेरदर्शनात् । तस्मात्किमनेन विधीयत इति चेदत्र ब्रूमः—अहरहः संध्यामुपासीतेति वचनविहितसंध्यावन्दनवत्पञ्चमहायज्ञविधिवाक्येन नित्यत्वं विधीयत इति नित्या एव महायज्ञा न तु चित्राबत्काम्या भवितुमर्हन्तीति सिद्धान्तः । इतरथा प्रकरणे प्रत्यवायप्रदर्शकानि—

'पञ्च यज्ञांस्तु यो मोहान्न करोति गृहाश्रमी ।
तस्य नायं न च परो लोको भवति धर्मतः' ॥

इत्यादीनि गर्गाद्युक्तवाक्यानि व्याकुप्येरन् । न च तथा सति नित्यं निष्फलमिति न्यायेन पञ्चमहायज्ञानां नित्यत्वे नैष्फल्यापत्तिरिति वक्तुं शक्यम् । तथा च फलरहितेषु तेषु न कस्यापि निसर्गत एव फलासक्तचित्तस्य प्रवृत्तिरिति शङ्कनीयम् । मीमांसकैकदेशिभिः कैश्चित्कदाचित्तथाऽङ्गीकारेऽपि नित्यकर्मणि प्रत्यवायनिवृत्तिविलक्षणस्य फलस्याखिलदर्शनकारैः स्वीकृतत्वात् । न च निराधारेयं स्वीकृतिः ।

'अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते' ।

इति श्रुतेः । अविद्यया कर्मणा मृत्युतरणोपायविद्याप्रतिबन्धकीभूतदुरितनिवृत्तौ ज्ञानोदयेन मोक्षं भजत इति तदर्थात् ।

'योगिनः कर्म कुर्वन्ति सङ्गं त्यक्त्वाऽऽत्मशुद्धये' ।

इति स्मृतेश्च । सङ्गं फलाभिसंधिं परित्यज्य मुक्तिहेतुज्ञानप्रतिबन्धकमलापकर्षणेन चित्तसंशुद्धये योगिनः कर्माऽऽचरन्तीति तदर्थाच्च । अत एव भगवच्छ्रीशंकरपादैः—'सर्वापेक्षा च' 'विहितत्वाचाऽऽश्रमकर्मापि' इत्यादिबादरायणसूत्रेषु शारीरकभाष्ये विविदिषन्तीत्यादिश्रुत्याऽनयैव रीत्या विद्यायाः स्वोत्पत्तौ कर्मापेक्षाऽवधारिता संगच्छते । नन्वेवं सति पञ्चमहायज्ञानां फलवत्त्वेन काम्यत्वात्कथं नित्यत्वमिति चेन्न । यतो न नित्यत्वकाम्यत्वयोः परस्परं विरोधः । नन्वेतयोरविरोधे नित्यं काम्यं चेति विभागो नोपपद्यते । विभागप्रयोजकोपाधीनां परस्परविरोधसहकृतत्वानियमा-

वश्यंभावादिति वाच्यम् । न ह्ययं कर्मणामुपाधेयानां विभागोऽपितु तत्प्रयोजकोपाधिभूताना नित्यत्वकाम्यत्वादीनामेवेति नोक्तानुपपत्तिः । ननु तथाऽपि विरुद्धधर्मद्वयापातादयुक्तमेतद्यदेकस्यैव कर्मणो नित्यत्वं काम्यत्वं चेति । तथाहि—ततः पञ्च महायज्ञान्कुर्यादहरहर्गृहीति पूर्वोक्तविधायकवाक्येऽहरहरिति वीप्साश्रुतेः पञ्चमहायज्ञानामवश्यानुष्ठानकत्वरूपो नित्यः संयोगः प्रतीयते। अविद्यया मृत्युं तीर्त्वा, ज्ञानमुत्पद्यते पुंसामित्यादिवचनाच्च प्रत्यवायनिवृत्तिरूपफलाभिधानात्तादृशफलानिच्छूनामप्युपलम्भात्फलेच्छाया अवश्यंभावनियमाभावात्तेषामनियतानुष्ठानकत्वरूपोऽप्यनित्यः संयोगः प्रतीयते । न चैकस्यैव नित्यानित्यसंयोगः सघटते । नियतानुष्ठानकत्वानियतानुष्ठानकत्वयोः परस्परविरोधसहकृतत्वेनैकत्र वर्तनासंभवात् । न हि वास्तवो विरोधो वचनशतेनाप्यपाकर्तुं शक्य इति चेन्न । सिद्धस्य वस्तुनो विरुद्धधर्मद्वययोगेन विकल्पोऽसंभवी । साध्यस्य तु भवत्येव विकल्पः । पोडशिन एकस्य ग्रहणाग्रहणयोरिव । ते हि ग्रहणाग्रहणे साध्यत्वाद्विकल्प्येते एव । एवं च नायं कर्मणो विकल्पः किंतु साध्यस्य कर्मधर्मसंयोगस्येति बोध्यम् । तथा चैकस्यैव कर्मणो भिन्नसयोगप्रतिपादकतुल्यबलवचनद्वयप्रामाण्यात्खादिरवद्द्वैरूप्यमविरुद्धम् । यथा–खादिरो यूपो भवतीति क्रतौ नित्यः खादिरो विहितः । खादिरं वीर्यकामस्य यूप कुर्वीतेति च तस्मिन्नेव क्रतौ काम्यत्वेनानित्यः खादिरो विहित । तत्र यथा संयोगभेदादेकस्यैव खादिरस्य क्रत्वर्थत्वं पुरुपार्थत्वं चेति द्वैरूप्यमङ्गीकृतं तद्वदत्रापि द्विविधप्रमाणसद्भावादेकस्योभयरूपत्व किं न स्यादिति विचारयेथाः । तदुक्तं जैमिनीयन्यायमालाविस्तरे चतुर्थाध्याये तृतीयपादे–एकस्य तूभयत्वे संयोगपृथक्त्वमिति । एकस्यैव कर्मणो नित्यनैमित्तिकोभयरूपत्वे नित्यकाम्योभयरूपत्वे नैमित्तिककाम्योभयरूपत्वे वा सयोगबोधकवाक्यस्य पृथक्त्व भेदः स हेतुरिति तदर्थः । तत्सिद्धं पञ्चमहायज्ञाना नित्यकाम्योभयरूपत्वमिति । नित्यकाम्ययोर्विरोधाभावादेव च जयन्त्यादिव्रताना नित्यकाम्योभयरूपत्वं धर्मशास्त्रनिबन्धकारैरुक्तं संगच्छते । नन्वेवं दुरितक्षयफलकत्वमात्रेण काम्यत्वस्वीकारे—

'केवलेनोपवासेन तस्मिञ्जन्मदिने मम ।
शतजन्मकृतात्पापान्मुच्यते नात्र संशयः' ॥

इति वचनेन पापमुक्तिरूपफलश्रवणाज्जन्माष्टमीव्रतस्यापि काम्यत्वमापद्येत । न चेष्टापत्तिः । जन्माष्टमीव्रतस्य केवलं नित्यत्वस्यैव माधवाचार्यैः सिद्धान्तितत्वात् । किं च ममोपात्तदुरितक्षयद्वारा श्रीपरमेश्वरप्रीत्यर्थं संध्यामुपासिष्ये, इत्यनुष्ठानप्रारम्भकाले फलसंकीर्तनपुरःसरं संकल्पश्रवणात्संध्यावन्दनकर्मणोऽपि काम्यत्वं प्रसज्येतेति चेन्मैवम् । यत्र पापक्षयातिरिक्तफलान्तरस्मरणं तत्रैव काम्यत्वं न त्वंहोध्वंसितफलकत्वमात्रेणेति सर्वशिष्टसंमतत्वात् । तादृशसंकल्पस्य संध्यावन्दनादौ परमेश्वरार्पणलाभाय यागादिकाम्यकर्मफलस्वर्गादिविलक्षणोपात्तदुरितक्षयरूपनित्यकर्मस्वरूपप्रदर्शनाय च महाजनैः परिगृहीतत्वाच्च । न चैवं पञ्चमहायज्ञानामपि तथात्वापत्त्या काम्यत्वसाधनप्रयासः स्थेयान्निष्फल इति वाच्यम् ।

'यज्ञेन लोकान्सकलान्प्रयान्ति
यज्ञेन देवा अमृतत्वमानशुः ।
यज्ञेन पापैर्बहुभिर्विमुक्तः
प्राप्नोति लोकान्परमस्य विष्णोः' ॥
'यत्फलं सोमयागेन प्राप्नोति धनवान्द्विजः ।
सम्यक्पञ्चमहायज्ञे दरिद्रस्तदवाप्नुयात्' ॥

इति शंभहारीतवचोभ्यां पापक्षयातिरिक्तफलान्तरस्मरणेनादोषात् । नन्वेवं फलश्रवणात्फलार्थिनां तदनुष्ठानमर्थायातम् । अफलार्थिनां तु प्रयोजनाभावात्कि तदनुष्ठानेनेति तेषां तदभाव आपतीति नित्यानित्यभेदेन प्रयोगद्वयमर्थात्सिद्धं भवति । न चैकस्य कर्मणः कालभेदेन वा कर्तृभेदेन वा विना प्रयोगद्वयं संभवति । न चात्र कालभेदः संभवति । नित्यकाम्यरूपयोर्द्वयोरपि प्रयोगयोः सायंप्रातःकालिकत्वस्यैव प्रतीयमानत्वात् । नापि कर्तृभेदः । यद्यपि काम्यं परित्यज्य नित्यः प्रयोगोऽनुष्ठातुं शक्यते तथाऽपि काम्यमनुतिष्ठासुना नित्यप्रयोगस्य परिहर्तुमशक्यत्वात् । ततश्च कालैकत्वात्कर्त्रैकत्वाच्च प्रयोगद्वयमसंभवीति

चेन्नायं दोषः । यथा श्राद्धार्थं निमन्त्रितेन ब्राह्मणेन क्रियमाणस्य भोजनस्य फलद्वयमन्यकर्तृकश्राद्धपरिनिष्पत्तिः स्वीयतृप्तिश्च । न च तेन वारद्वयं भुज्यते । तथा फलार्थं समनुष्ठितैः पञ्चमहायज्ञैः प्रयोजनद्वयं निष्पद्यत इति सकृदनुष्ठानेनैवोभयप्रयोगानुष्ठानं सिध्यतीति सौमनस्यम् । तच्चानुष्ठानमर्थाववोधपुरःसरमाचरणीयं तथा सति महत्फलं भवति नान्यथा । अत एव च्छान्दोग्ये श्रूयते—यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवतीति । विद्या सम्यगर्थाववोधः । तत्पुरःसरं यद्यथावदनुष्ठीयमानं कर्म समग्रफलदं भवतीत्यर्थः । अत्र तदेवेतिविशेष्यसंगतैवकारेणार्थानववोधपुरःसरमनुष्ठीयमानस्य न समग्रफलदत्वमिति सूचितं भवति । अत एव—

'ज्ञात्वा ज्ञात्वा च कर्माणि जनो यो योऽनुतिष्ठति ।
विदुषः कर्मसिद्धिः स्यात्तथा नाविदुषो भवेत्' ॥

इत्युक्तं संगच्छते । तथा चार्थाववोधप्रदानेनापि याज्ञिकजनानुपकुर्यादिति सर्वथा समादरणीयेयं पद्धतिरित्याशास इति शम् ।

| | |
|---|---|
| पुण्यपत्तने<br>आश्विनशुक्लपञ्चम्यां<br>शुक्रवासरे शके १८४६ | महामहोपाध्यायाभ्यंकरोपाह्व<br>वासुदेवशास्त्री |

# अथ संस्कारपद्धतिस्थविषयाणामनुक्रमणिका ।

इति संस्कारपद्धतिस्थविषयाणामनुक्रमणिका समाप्ता ।



करणे स्वस्त्ययनस्य चाभिधानात् , यजुर्वेदान्तर्गतमाध्यन्दिनीयशाखायां
सामवेदाथर्ववेदयोश्च प्रकृततत्सूत्रकारकृतसर्वानुक्रमणीषु तथैवाभि-
धानाच्च तत्तच्छाखापरमेव । तैत्तिरीयशाखायां तु सत्याषाढापस्तम्ब-
बौधायनसूत्रकारकृतसर्वानुक्रमण्यनुपलम्भेन तदुत्कीर्तनस्यानावश्यकत्व-
बोधनाद्यावत्स्वगृह्योक्तं तावदनुष्ठानमात्रेणैव फलसिद्धेश्च तदुत्कीर्तना-
भावेऽपि क्षत्यभावादत्र ऋष्यादयो न प्रदर्श्यन्ते ।

अथ गणपतिपूजनम् । तच्च सर्वकर्मस्वादौ कर्तव्यम् । निर्विघ्नार्थत्वे-
नाभिधानात् । पूजा च षोडशोपचारा । अथ स्वस्तिवाचनम् । तच्च
गर्भाधानादिसंस्कारेषु प्रतिष्ठोत्सर्गादिपूर्तेषु अग्न्याधानदर्शपूर्णमासादी-
ष्टेषु अग्निष्टोमादिक्रतुषु सर्वधर्मकर्मसु चाऽऽदौ कार्यम् । अथ मातृका-
पूजनम् । तच्च नान्दीश्राद्धस्याङ्गमिति पृथक्सङ्कल्पं कृत्वा पूर्वं कुर्यात् ।
अथाऽऽभ्युदयिकश्राद्धम् । इदमपि गर्भाधानादिपूर्वोक्तेषु कर्तव्यम् । एत-
च्छ्राद्धं मातृकापूजनं चैकस्यानेकसंस्कारेषु एककर्तृकेषु युगपदुपस्थितेषु
सर्वादौ सकृदेव कार्यम् । न तु प्रतिसंस्कारमावृत्तिः । अथैतत्कालः ।
कर्मारम्भदिनात्पूर्वस्मिन्नहनि पूर्वाह्ण एव पार्वणत्रयं तन्त्रेण कार्यम् ।
तदारम्भदिन एव वा । अयं चाशक्तिविषयः । शक्तौ तु दिनभेदेन
पूर्वाह्णादिकालभेदेन कार्यम् । यज्ञादौ क्रियमाणे नान्दीश्राद्धे समूला
दर्भा हस्तयोर्धारणीयाः । विवाहादिमङ्गलकार्यादौ क्रियमाणे दर्भस्थाने
दूर्वा एव । गर्भाधानपुंसवनसीमन्तसोमेषु दक्षक्रतू अन्यत्र सत्यवसू
इति विवेकः ।

अथाधिकारिणः—प्रथमविवाहान्तेषु पुत्रसंस्कारेषु पिता वृद्धिश्राद्धं
कुर्यात् । द्वितीयादिविवाहे तु वर एव कुर्यात् । प्रथमविवाहे यदि पित्रा-
दीनां सर्वेषां वक्ष्यमाणानामधिकारिणामभावस्तदाऽपि स्वयमेव । प्रवा-
सादिना पितुरभावे ज्येष्ठभ्राता कुर्वन्स्वपितुः पितृभ्यो दद्यात् । यदि
तु पिता न जीवति पितामहस्तु प्रवासस्थितस्तदा पितृप्रपितामहवृद्धप्र-
पितामहाननुद्दिश्य पार्वणं कुर्यात् । एवं मातृमातामहपार्वणयोरपि द्रष्ट-
व्यम् । सर्वेषां जीवने नान्दीश्राद्धलोप एव । सर्वेषां यथोक्ताधिकारिणा-
मभावे यदि माता पुत्र्या विवाहं कुर्यात्तदा स्वयं संकल्पमात्रं कृत्वा
स्वस्तिवाचनं नान्दीश्राद्धादिकं सर्वं ब्राह्मणद्वारा कारयेत् । समावर्तने
नान्दीश्राद्धं पिता स्वयमेव वा कुर्यात् । सुतसंस्कारेषु अजीवन्मातृपितृ-
मातामहः पिता स्वमात्राद्युद्देश्यकं पार्वणत्रयं कुर्यात् । मातरि जीवन्त्या

त्वपार्वणलोपः । मातामहे जीवति तत्पार्वणस्य । तदा पार्वणद्वयेनैव नान्दीश्राद्धसिद्धिः । मातृमातामहजीवने पितृपार्वणेनैव नान्दीश्राद्धसिद्धिः । पितृमातृजीवने मातामहपार्वणेनैव । पितृमातामहजीवने देवरहितेन मातृपार्वणेनैव । जीवत्पितामहः पितृपितामहवृद्धप्रपितामहानुद्दिश्य पितृपार्वणं कुर्यात् । जीवत्पितामहप्रपितामहः पितृवृद्धप्रपितामहातिवृद्धप्रपितामहानुद्दिश्य पितृपार्वणं कुर्यात् । एवं मातृमातामहपार्वणयोरपि द्रष्टव्यम् । सापत्नमातरि मृतायां तया सहैव मातृपार्वणं कार्यम् । वर्गत्रयाधानां जीवने सुतसंस्कारेषु नान्दीश्राद्धलोप एव । एवं येभ्य एवेति वचनस्य सुतसंस्कारातिरिक्तपरत्वेन स्वस्य द्वितीयादिविवाहाङ्गत्वेन नान्दीश्राद्धं कुर्वञ्जीवत्पितृकः पितुः पित्रादीनुद्दिश्य पार्वणं कुर्यात् । जीवत्पितृपितामहस्तु पितामहस्य पित्रादीनुद्दिश्य पार्वणं कुर्यात् । अत्र पितुरित्यस्य स्थाने पितामहस्य निर्देशः । एवं मातृमातामहपार्वणयोरपि । एवमेव जातकर्मनिमित्तके पुत्रपार्वे नान्दीश्राद्धे । यदा तु पितृव्यमातुलादयः कन्याविवाहं कुमारस्योपनयनमुपनीतस्य प्रथमविवाहं वा कुर्युस्तदा संस्कार्यस्याजीवत्पितृमातामहकत्वे तन्मात्रादीनुद्दिश्य पार्वणत्रयं कुर्युः । पितृव्यादिस्तु सर्वेषु पार्वणेषु संस्कार्यस्येति सविशेषणप्रयोगं कुर्यात् । अस्मिन्विषये संस्कार्यस्य तत्तद्गोत्रजीवने तत्तत्पार्वणस्य सर्वेषां जीवने पार्वणत्रयस्य च लोप एव । सर्वेषां सुतसंस्कारत्वात् । एवं च जीवत्पितृकः सुतसंस्कारव्यतिरिक्तकर्मसु येभ्य एवेति शास्त्रात्पितुः पित्रादीनुद्दिश्य स्वमातृमातामहयोरजीवतोस्तदुद्देशेन पार्वणद्वयस्य च समुच्चयेनानुष्ठानमर्धजरतीयमत्यन्तानुचितम् । परम्परविरुद्धस्य येभ्य एवेति शास्त्रस्य गृह्यपरिशिष्टस्य चैकत्र प्रवृत्त्ययोगादिति निष्कर्षः ।

अथ सकलशिष्टपरिगृहीतः पुण्याहवाचनप्रयोगः ।

सपत्नीकः कर्ता कृतनित्यक्रियः कृतमाङ्गलिकस्नानः स्वलंकृतो बद्धशिखो गोमयेनोपलिप्तायां भूमौ कंचित्प्रदेशं पुण्याहवाचनकलशस्थापनार्थं रङ्गवल्लिकाभूषितं कृत्वा तदुत्तरत उत्करीत्या सर्वान्संभारान्निधाय रङ्गवल्लिकाभूषितप्रदेशस्य पश्चाद्वस्त्राच्छादिते पीठे प्राङ्मुख उपविश्य पत्नीं स्वस्य दक्षिणतः प्राङ्मुखीमुपवेश्य तद्दक्षिणतो युग्मान्ब्राह्मणानुदङ्मुखान्स्वस्योत्तरतः प्राङ्मुखान्वोपवेशयेत् । पुत्रादिसंस्काराङ्गे पत्नीदक्षिणतः संस्कार्योऽप्युपवेशनीयः । ततः पवित्रपाणिराचम्य प्राणानायम्येष्टदेवतादिनमस्कारपूर्वकं सुमुखश्चेत्यादीन्म-

ङ्गलश्लोकान्पठित्वा देशकालौ संकीर्त्यामुकं कर्म कर्तुमादौ पुण्याह वाचनं करिष्ये। ततो मातृकापूजनं करिष्ये। ततो नान्दीश्राद्धं करिष्य इति स्वस्वारम्भकाले पृथक्संकल्पं कुर्यात्। तत्सर्वं कृत्वा प्रधानसंकल्पः कर्तव्यः। ततस्तदादौ निर्विघ्नतासिद्ध्यर्थं गणपतिपूजनं करिष्य इति संकल्प्य, ॐ गणानां त्वा गण० सीद सादनम्। ऋद्धिसिद्धिसहिताय गणपतये नमः, ऋद्धिसिद्धिसहितं गणपतिमावाहयामीत्यावाह्य, नर्थ प्रजा०प्रतिष्ठितामिति प्रतिष्ठाप्याऽऽसनादिदक्षिणादानान्तैरुपचारैः संपूज्य पुष्पाञ्जलिं दत्त्वा

मन्त्रहीनं क्रियाहीनं भक्तिहीनं गजानन।
यत्पूजितं मया देव परिपूर्णं तदस्तु मे॥
वक्रतुण्ड महाकाय कोटिसूर्यसमप्रभ।
अविघ्नं कुरु मे देव सर्वकार्येषु सर्वदा॥ इति संप्रार्थ्य

विघ्नेश्वराय वरदाय सुरप्रियाय
लम्बोदराय विकटाय गजाननाय।
विनायकाय श्रुतियज्ञविभूषिताय
गौरीसुताय गणनाथ नमो नमस्ते॥

इति नमस्कुर्यात्। विसर्जनं तु कर्मसमाप्त्यन्ते। एवं सर्वत्र।

ततः कलशस्थापनम्। ॐ मही द्यौः पृ० भरीमभिः। मन्त्रावृत्त्या दक्षिणत उत्तरतश्च भूमिं स्पृष्ट्वा, ॐ ओषधयः सं० पारयामसि। स्पृष्टप्रदेशयोः सप्तधान्यस्य द्वौ पुञ्जौ कृत्वा, आजिघ्र कलशं० शताद्रयिः। तयोः पुञ्जयोरुपरि द्वावच्छिद्रौ नूतनौ सूत्रवेष्टितकण्ठौ कलशौ निधाय, इमं मे गङ्गे यमुने० सुषोमया। कलशोदकेन तौ पूरयित्वा, गन्धद्वारां दु० श्रियम्। तयोर्गन्धं प्रक्षिप्य, या जाता ओषध० सप्त च। तयोः सर्वौषधीः प्रक्षिप्य, काण्डात्काण्डात्० शतेन च। तयोर्दूर्वाः प्रक्षिप्य, अश्वत्थे वो० पूरुषम्। तयोस्त्वचः पल्लवांश्च मन्त्रावृत्त्या प्रक्षिप्य, याः फलिनी० त्वंहसः। तयोः फलं प्रक्षिप्य, अग्ने रेतश्च० तन्त्यम्। तयोर्हिरण्यं प्रक्षिप्य, बृहस्पते जुष० दाशुषे। तयोः पञ्च रत्नानि प्रक्षिपेत्। युवा सुवासा० देवयन्तः। वस्त्राभ्यां तौ वेष्टयित्वा, पूर्णा दर्विपरा० शतक्रतो। तण्डुलपूरितपात्राभ्यां कलशयोराननेऽपिदध्यात्। सर्वत्र प्रतिकलशं मन्त्रावृत्तिरुत्तरसंस्था च ज्ञेया। ततस्तत्त्वा यामि

ब्राह्मणा० प्रयोगाः। उत्तरकलशे वरुणमावाह्य नयं प्रजामिति प्रतिष्ठाप्य पूजयेत्। तत्रस्तत्रैव देवता आवाहयेत्। कलशस्य मुखे०।

सर्वे समुद्राः सरितस्तीर्थानि जलदा नदाः।
आयान्तु मम शान्त्यर्थं दुरितक्षयकारकाः॥

इत्यावाह्य पूज्याक्षतानुत्तरकलशे प्रक्षिपेत्। मातृदेवो भव। पितृदेवो भव। आचार्यदेवो भव। अतिथिदेवो भवेति। ततोऽवनिकृतजानुमण्डलः कमलमुकुलसदृशमञ्जलिं शिरस्याधाय दक्षिणेन पाणिना सुवर्णपूर्णकलशं धारयित्वाऽऽशिषः प्रार्थयेत्। एताः सत्या आशिषः सन्तु। दीर्घा नागा नद्यो गिरयस्त्रीणि विष्णुपदानि च। तेनाऽऽयुःप्रमाणेन पुण्याहं दीर्घमायुरस्तु। विप्राः सन्तु अस्तु इति यथायोग्यं प्रत्युत्तरं दद्युः। ततः कर्ता शिवा आपः सन्तु। सौमनस्यमस्तु। अक्षतं चारिष्टं चास्तु। गन्धाः पान्तु। सौमङ्गल्यं चास्तु। अक्षताः पान्तु। आयुष्यमस्तु। पुष्पाणि पान्तु। सौश्रियमस्तु। ताम्बूलानि पान्तु। ऐश्वर्यमस्तु। दक्षिणाः पान्तु। बहु देयं चास्तु। दीर्घमायुः श्रेयः शान्तिः पुष्टिस्तुष्टिश्चास्तु। श्रीर्यशो विद्या विनयो वित्तं बहुपुत्रं चाऽऽयुष्यं चास्तु। इति वाक्यानि पठेत्। तत्राऽऽद्यवाक्यत्रयान्ते उदकं विप्रहस्तेषु दत्त्वा द्वयोर्द्वयोर्वाक्ययोरन्ते तत्तल्लिङ्गानुसारेण तं तमुपचारं दत्त्वा दीर्घमायुरिति वाक्यद्वयेन विप्रान्प्रार्थयेत्। इति संप्रदायः। विप्राः पान्तु अस्तु इति यथायोग्यं ब्रूयुः। ततः कर्ता यं कृत्वा सर्ववेदयज्ञक्रियाकरणकर्मारम्भाः शुभाः शोभनाः प्रवर्तन्ते। तमहमोंकारमादिं कृत्वा, ऋग्यजुःसामाशीर्वचनं बहुऋषिमतं संविज्ञातं भवद्भिरनुज्ञातः पुण्यं पुण्याहं वाचयिष्ये, इति वदेत्। वाच्यतामिति विप्राः। ततः कर्ता भद्रं कर्णेभिः शृ० देवहितं यदायुः। द्रविणोदा द्रविणस० रासते दीर्घमायुः। सविता पश्चाता० रासतां दीर्घमायुः। नवो नवो भव० स्तिरति दीर्घमायुः। उच्चा दिवि द० प्रतिरन्त आयुः। आप उन्दन्तु० वर्चसे। यस्त्वा हृदा की० अमृतत्वमश्याम्। यस्मै त्वम् सु० नशते स्वस्ति। सन्त्वासिञ्चामि यजुषा० धनं च। इति मन्त्रानुक्त्वा व्रतनियमतपःस्वाध्यायक्रतुदमदानविशिष्टानां ब्राह्मणानां मनः समाधीयताम्। इति विप्रान्प्रार्थयेत्। विप्राः समाहितमनसः स्म इति। कर्ता प्रसीदन्तु भवन्त इति वदेत्। विप्राः प्रसन्नाः स्म इति। ततः कर्ता शान्तिरस्तु १

पुष्टिरस्तु २ तुष्टिरस्तु ३ वृद्धिरस्तु ४ अविघ्नमस्तु ५ आयुष्यमस्तु ६ आरोग्यमस्तु ७ शिवं कर्मास्तु ८ कर्मसमृद्धिरस्तु ९ धर्मसमृद्धिरस्तु १० वेदसमृद्धिरस्तु ११ शास्त्रसमृद्धिरस्तु १२ पुत्रसमृद्धिरस्तु १३ धनधान्यसमृद्धिरस्तु १४ इष्टसंपदस्तु १५ अरिष्टनिरसनमस्तु १६ यत्पापं तत्प्रतिहतमस्तु १७ यच्छ्रेयस्तदस्तु १८ उत्तरे कर्मण्यविघ्नमस्तु १९ उत्तरोत्तरमहरहरभिवृद्धिरस्तु २० उत्तरोत्तराः क्रियाः शुभाः शोभनाः संपद्यन्ताम् २१ तिथिकरणमुहूर्तनक्षत्रसंपदस्तु २२ तिथिकरणमुहूर्तनक्षत्रग्रहलग्नाधिदेवताः प्रीयन्ताम् २३ तिथिकरणे सुमुहूर्ते सनक्षत्रे सग्रहे सदैवते प्रीयेताम् २४ दुर्गापाञ्चाल्यौ प्रीयेताम् २५ अग्निपुरोगा विश्वे देवाः प्रीयन्ताम् २६ इन्द्रपुरोगा मरुद्गणाः प्रीयन्ताम् २७ ब्रह्मपुरोगाः सर्वे वेदाः प्रीयन्ताम् २८ विष्णुपुरोगाः सर्वे देवाः प्रीयन्ताम् २९ माहेश्वरीपुरोगा उमामातरः प्रीयन्ताम् ३० वसिष्ठपुरोगा ऋषिगणाः प्रीयन्ताम् ३१ अरुन्धतीपुरोगा एकपत्न्यः प्रीयन्ताम् ३२ ऋषयश्छन्दांस्याचार्या देवा वेदा यज्ञाश्च प्रीयन्ताम् ३३ ब्रह्म च ब्राह्मणाश्च प्रीयन्ताम् ३४ श्रीसरस्वत्यौ प्रीयेताम् ३५ श्रद्धामेधे प्रीयेताम् ३६ भगवती कात्यायनी प्रीयताम् ३७ भगवती माहेश्वरी प्रीयताम् ३८ भगवती पुष्टिकरी प्रीयताम् ३९ भगवती तुष्टिकरी प्रीयताम् ४० भगवती ऋद्धिकरी प्रीयताम् ४१ भगवती वृद्धिकरी प्रीयताम् ४२ भगवन्तौ विघ्नविनायकौ प्रीयेताम् ४३ भगवान्स्वामी महासेनः सपत्नीकः ससुतः सपार्षदः सर्वस्थानगतः प्रीयताम् ४४ हरिहरहिरण्यगर्भाः प्रीयन्ताम् ४५ सर्वा ग्रामदेवताः प्रीयन्ताम् ४६ सर्वाः कुलदेवताः प्रीयन्ताम् ४७ सर्वा इष्टदेवताः प्रीयन्ताम् ४८ हता ब्रह्मद्विषः ४९ हताः परिपन्थिनः ५० हता अस्य कर्मणो विघ्नकर्तारः ५१ शत्रवः पराभवं यान्तु ५२ शाम्यन्तु घोराणि ५३ शाम्यन्तु पापानि ५४ शाम्यन्त्वीतयः ५५ शुभानि वर्धन्ताम् ५६ शिवा आपः सन्तु ५७ शिवा ऋतवः सन्तु ५८ शिवा अग्नयः सन्तु ५९ शिवा आहुतयः सन्तु ६० शिवा ओषधयः सन्तु ६१ शिवा वनस्पतयः सन्तु ६२ शिवा अतिथयः सन्तु ६३ अहोरात्रे शिवे स्याताम् ६४ निकामे निकामे नः पर्जन्यो वर्षतु ६५ फलिन्यो न ओषधयः पच्यन्ताम् ६६ योगक्षेमो नः कल्पताम् ६७ आदित्यपुरोगाः सर्वे ग्रहाः प्रीयन्ताम् ६८ भगवान्नारायणः प्रीयताम् ६९ भगवान्पर्जन्यः प्रीयताम् ७० भगवान्स्वामी महासेनः प्रीयताम् ७१

इत्येकैकशः प्रतिवाक्यानि पठेत्। प्रतिवाक्यं पात्रे जलं पातयेत्। तत्रारिष्टनिरसनमस्तु यत्पापं तत्प्रतिहतमस्तु इति द्वाभ्यां वाक्याभ्यां हता ब्रह्मद्विष इत्यादिभिः सप्तभिर्वाक्यैश्च पात्राद्बहिरुत्तरतो जलं पातनीयमिति संप्रदायः। ततः कर्ता पुण्याहकालान्वाचयिष्ये, इति वदेत्। वाच्यतामिति विप्राः। ततः कर्ता, उद्गातेव शकुने० पुण्यमावद। याज्यया यजति प्रत्तिर्वै याज्या० लक्ष्मीं संस्कुरुते। यत्पुण्यं नक्षत्रं० कुरुते। तानि वा एतानि० यान्येव दे० तेषु कु० पुण्याह० कुरुते। मह्यं सकुटुम्बाय महाजनान्नमस्कुर्वाणायाऽऽशीर्वचनमपेक्षमाणायामुककर्मणः पुण्याहं भवन्तो ब्रुवन्तु इति त्रिर्वदेत्। ओं पुण्याहमिति त्रिर्विप्राः। स्वस्तये वायु० भवन्तु नः। आदित्य उदयनीयः० स्वस्त्ययनमिति। स्वस्ति न इन्द्रो० बृहस्पतिर्दधातु। अशी देवा न० अमृतश्च स्वस्ति। मह्यं सकुटुम्बाय० माणायामुककर्मणः स्वस्ति भवन्तो ब्रुवन्तु। इति त्रिः कर्ता वदेत्। ओं स्वस्ति, इति त्रिर्विप्राः। ऋध्याम स्तोमं० काममश्याः। सर्वामृद्धिमृध्नुयामिति० ध्नोति य एवं वेद। ऋध्यास्म ह०वीराः। श्रीणि श्रीणि० प्रतितिष्ठति। मह्यं सकुटुम्बाय० माणायामुककर्मण ऋद्धिं भवन्तो ब्रुवन्तु इति त्रिः कर्ता वदेत्। ओमृध्यतामिति त्रिर्विप्राः। श्रिये जातः श्रिय आ० पशुभिर्य एवं वेद। यस्मिन्ब्रह्माऽभ्य० मानम्। अहे बुध्निय० सताम्। मह्यं सकुटुम्बाय० माणायामुककर्मणः श्रीरस्त्विति भवन्तो ब्रुवन्तु इति त्रिः कर्ता वदेत्। ओमस्तु श्रीरिति त्रिर्विप्राः। अत्र सुवासिनीभिर्नीराजनं कारयेत्सुराचारात्। ततः कर्ता वर्धमानं पूर्णमस्तु। मङ्गलानि भवन्तु। शिवं कर्मास्तु। गोत्राभिवृद्धिरस्तु इति वाक्यान्युक्त्वा विप्रैर्यथायोग्यं प्रतिवचनेषूक्तेषु कर्माङ्गदेवताः प्रीयन्तामित्युक्त्वा पात्रे जलं क्षिपेत्। ततः शुक्रेभिरङ्गैरज० रनूनाः। तदप्येष श्लो० सभासद इति पठित्वोत्तरकलशं दक्षिणहस्ते दक्षिणकलशं वामहस्ते गृहीत्वा ताभ्यां धाराद्वयं संततं पात्रे निषिञ्चेत्। तत्र मन्त्राः—वास्तोष्पते प्र० चतुष्पदे। वास्तोष्पते प्रत० जुषस्व। वास्तोष्पते श० सदा नः। अमीवहा० सखा न इति। ततः शिवमिति त्रिर्वदेत्। ततो विप्राः कर्तुर्वामतः पत्नीमुपवेश्य पात्रे पातितेन जलेन पल्लवदूर्वाभिरुदङ्मुखास्तिष्ठन्त उपविष्टा वा सपत्नीकं कर्तारमभिषिञ्चेयुः। तत्र मन्त्राः—समुद्रज्येष्ठाः सलिल० आयन्तामिह देवा० आपसि। इमा आपः शिवतमा० इन्द्राजनिर्यगजनन्। देवस्य त्वा० स्ताभ्या-

मग्नेस्तेजसा० सेऽभ्यात्राय । देवस्य त्वा० भ्याः सरस्वत्यै वाचो यन्तु-र्यन्त्रेणाग्नेस्त्वा साम्राज्येनाभिषिञ्चामि । देवस्य त्वा० भ्याः सरस्वत्यै वाचो यन्तुर्यन्त्रेणेन्द्रस्य त्वा साम्राज्येनाभिषिञ्चामि । देवस्य त्वा० भ्याः सरस्वत्यै वाचो यन्तुर्यन्त्रेण बृहस्पतेस्त्वा साम्राज्येनाभिषिञ्चामि । देवस्य त्वा सवितुः प्रसवे । अश्वि० हस्ताभ्याम् । अश्विनोर्भैषज्येन० चामि । देवस्य त्वा सवितुः प्रसवे० अश्वि० स्ताभ्या सरस्वत्यै भैष० चामि । देवस्य त्वा सवितुः प्रसवे० अश्वि० भ्यामिन्द्रस्येन्द्रि० भिषिञ्चामि ।

सुरास्त्वामभिषिञ्चन्तु ब्रह्मविष्णुमहेश्वराः ।
एते त्वामभिषिञ्चन्तु सर्वकामार्थसिद्धये ॥

ओं भूर्भुव सुवः, तच्छंयोरावृ० प्पदे, इत्यभिषिच्यामृताभिषेकोऽस्त्विति वदेयुः । तथाऽस्त्विति कर्ता प्रतिब्रूयात् । ततो द्विवारमाचमनं कुर्यात् । पत्नी दक्षिणतः सकृदाचम्योपविशेत् । ततः सुवासिन्यो नीराजनाशीःप्रयोगनूतनवस्त्रदानादि कुर्युः । आचारात् । पत्या वस्त्रे स्वीक्रियमाणे पत्नी वामतो भवेत्, इति वृद्धाः ।

इति शिष्टपरिगृहीतः पुण्याहवाचनप्रयोगः ।

---

अथ मातृकापूजनप्रयोगः ।

तत्र मात्रादित्रिरूपा मातामह्यादित्रिरूपा पितृष्वसृमातृष्वसृका च मध्ये यावत्यो जीवन्ति तावतीः कुङ्कुमादिभिर्यथायोग्यं संपूज्य गोमयेनोपलिप्ते रङ्गवल्ल्याद्यलंकृते देशे कृताग्न्युत्तारणप्राणप्रतिष्ठासु प्रतिमासु अभावेऽक्षतपुञ्जेषु वा गौर्यादिदेवता आवाहयेत् । तद्यथा— गौर्यै नमः, गौरीमावाहयामि । पद्मायै नमः । पद्मामा० । शच्यै० शचीमा० । मेधायै० मेधामा० । सावित्र्यै० सावित्रीमा० । विजयायै० विजयामा० । जयायै० जयामा० । देवसेनायै० देवसेनामा० । स्वधायै० स्वधामा० । स्वाहायै० स्वाहामा० । मातृभ्यो० मातॄः, आ० । लोकमातृभ्यो० लोकमातॄः, आ० । धृत्यै० धृतिमा० । पुष्ट्यै० पुष्टिमा० । तुष्ट्यै० तुष्टिमा० । कुलदेवतायै० कुलदेवतामा० । ब्राह्म्यै० ब्राह्मीमा० । माहेश्वर्यै० माहेश्वरीमा० । कौमार्यै० कौमारीमा० । वैष्णव्यै० वैष्णवीमा० । वाराह्यै० वाराहीमा० । इन्द्राण्यै० इन्द्राणीमा० । चामुण्डायै०

चामुण्डायै० चामुण्डाम० । गणाधिपाय० गणाधिपमा० । दुर्गायै० दुर्गामा० । क्षेत्रपालाय० क्षेत्रपालमा० । वास्तोष्पतये० वास्तोष्पतिमा० । इत्यावाहयेत् । ततो गौर्याद्यावाहितदेवताभ्यो नम इति षोडशोपचारैः पूजयेत् । ततः पाकान्तरेण वैश्वदेवं कृत्वा नान्दीश्राद्धं कुर्यात् ।

इति मातृकापूजनप्रयोगः ।

---

अथ नान्दीश्राद्धम् ।

तद्यथा—कर्ता सदूर्वाङ्कुरं साक्षतं जलमादाय—सत्यवसुसंज्ञका विश्वे देवा नान्दीमुखा भूर्भुवः सुवरिदं वः पाद्यं स्वाहा न ममेयं च वृद्धिः, इति पात्रे क्षिपेत् । एवमग्रेऽपि । मातृपितामहीप्रपितामह्यो नान्दीमुखा भूर्भुवः सुवरिदं वः पाद्यं स्वाहा न ममेयं च वृद्धिः । पितृपितामहप्रपितामहा नान्दीमुखा भूर्भुवः सुवरिदं वः पाद्यं स्वा० । मातामहमातुःपितामहमातुःप्रपितामहाः पत्नीसहिता नान्दीमुखा भू० सुवरिदं वः पाद्यं० ।

ततः सदूर्वाङ्कुरं साक्षतगन्धपुष्पजलमादाय—सत्यवसुसं० भुवरिदं व आसनगन्धाद्युपचारकल्पनं स्वाहा न ममेयं च वृद्धिः, इति पात्रे क्षिपेत् । एवमग्रेऽपि । मातृपितामहीप्रपितामह्यो नान्दीमुखा भू० सुवरिदं व आस० द्धिः । पितृपितामहप्रपितामहा नान्दीमुखा भू० सुवरिदं व आ० द्धिः । मातामहमातुःपितामहमातुःप्रपितामहाः पत्नीसहिता नान्दीमुखा भू० सुवरिदं व आ० द्धिः । ततो गौर्यादिषोडशमातरो ब्राह्म्यादिसप्तमातरो गणाधिपदुर्गाक्षेत्रपालवास्तोष्पतयश्च भू० सुवरिदं वो युग्मब्राह्मणभोजनपर्याप्तान्ननिष्क्रयीभूतं हिरण्यममृतरूपेण स्वाहा न ममेयं च वृद्धिः, इति विभवानुसारेण दद्यात् । ततः सत्यवसुसंज्ञका विश्वे देवा नान्दीमुखा भू० सुवरि० युग्मब्राह्मण० । मातृपितामहीप्रपितामह्यो नान्दीमुखा भू० सुवरि० युग्म० । पितृपितामहप्रपितामहा नान्दीमुखा भू० सुवरि० युग्म० । मातामहमातुःपितामहमातुःप्रपितामहाः पत्नीसहिताः नान्दीमुखा भू० सुवरि० युग्मब्रा० । इति क्रमेण दद्यात् ।

ततः—उपास्मै गायता नरः० वाता मधु । अक्षन्नमी० हरी इति श्रावयित्वा कृतस्य नान्दीश्राद्धस्य संपूर्णतासिद्ध्यै प्रतिविप्रं द्राक्षामलकनिष्क्रयीभूतं द्रव्यं दक्षिणां दत्त्वा प्रजापते न त्व० रयीणामिति पठित्वा कुलदेवतां नमस्कृत्य

माता पितामही चैव तथैव प्रपितामही ।
पिता पितामहश्चैव तथैव प्रपितामहः ॥
मातामहस्तत्पिता च प्रमातामहकादयः ।
एते भवन्तु सुप्रीताः प्रयच्छन्तु च मङ्गलम् ॥

इति श्लोकद्वयं पठेत् । अत्राऽऽदिशब्देन मातामह्यादयो ग्राह्याः । मातामहीसत्त्वे प्रमातामहकास्तथेत्येवं पठेत् । एवं यस्य पार्वणस्य लोपस्तस्यापि श्लोकेऽनूहः । केवलमातृपार्वणे एता भवन्तु सुप्रीता इत्येवोहो देवलोऽस्य ।

ततः–इडामग्ने० भूत्वस्मे, इति मन्त्रं पठन्पात्रान्तरेण किंचिद्द्रव्यं संघट्टयेत् । ततोऽनेन नान्दीश्राद्धेन नान्दीमुखदेवताः प्रीयन्तां वृद्धिरस्तु इति वदेत् । वरुणादिदेवताः कर्मसमाप्त्यन्ते विसर्जयेत् । एतच्चानुकल्पानुष्ठानं मुख्यकल्पासंभवे वेदितव्यम् । मुख्यकल्पश्च ब्राह्मणभोजनाग्नौकरणपिण्डदानानुष्ठानरूपः । अयं च साग्निकस्य नियमः । निरग्निकस्य तु कुलधर्मानुसारेण । पिण्डदानस्य कृताकृतत्वात् । अकरणे सांकल्पिकविधिनाऽनुष्ठानम् । स च विधिरग्रे वक्ष्यते । तत्रायं विशेषः–सर्वं पितृकर्मापि यज्ञोपवीतिनैव । तिलस्थाने यवाः । प्रदक्षिणमुपचारः । देवतीर्थमेव । प्रागग्रा एवाऽऽसनादिषु दर्भाः । रेखा अपि प्रागग्राः । न तिलोदकम् । न सव्यजानुनिपातनम् । न नामग्रहणम् । नास्मद्गोत्रवसुरूपादिशब्दाः । स्वधाशब्दस्थाने स्वाहाशब्दः । संस्काराङ्गनान्दीश्राद्धे दर्भस्थाने दूर्वाः । आधानाद्यङ्गभूते तु दर्भा एव । नात्र रक्तगन्धपुष्पादिनिषेधः । आदौ मातृवर्गः । मध्ये पितृवर्गः । अन्ते मातामहवर्गः सपत्नीकः । पूर्वाह्ण एव श्राद्धारम्भः ।

अथ प्रयोगः–निहन्मि सर्वं० यवा रक्षन्त्व० इति यवानेव विकिरेत् । ततः—अपवित्रः पवि० इति पुण्डरीकाक्षं ध्यात्वा देशकालौ संकीर्त्य सत्यवसुसंज्ञका विश्वे देवा नान्दीमुखाः, मातृपितामहीप्रपितामह्यो नान्दीमुखाः पितृपितामहप्रपितामहा नान्दीमुखाः, मातामहमातुःपितामहमातुःप्रपितामहाः पत्नीसहिता नान्दीमुखाः, करिष्यमाणामुककर्माङ्गत्वेन विहितं नान्दीश्राद्धमद्य करिष्ये इति संकल्पं कुर्यात् । अस्मिन्नान्दीश्राद्धे सत्यवसुसंज्ञकानां विश्वेषां देवानां नान्दीमुखानां स्थाने त्वां निमन्त्रये, इति निमन्त्र्य त्वया क्षणः कर-

णीय इति ब्रूयात् । इति प्रथमद्वितीयदेवार्थं प्रतिदेवं ब्राह्मणद्वयं निमन्त्रयेत् । एवं मात्रादिवर्गत्रय उक्तरीत्या क्षणः करणीय एतदन्तमुक्त्वा प्रतिवर्गं ब्राह्मणद्वयं निमन्त्र्य समस्तसंपदिति ब्राह्मणान्प्रदक्षिणीकृत्येत्याद्यग्नौकरणान्तं दर्शश्राद्धवत्कुर्यात् । तत्र विशेषः—दर्शश्राद्धशब्दस्थाने नान्दीश्राद्धशब्दः प्रयोक्तव्यः । चतुरस्रमण्डल एव पाद्यदानम् । प्राप्नुतां भवन्तौ प्राप्नवावेति प्रश्नप्रतिवचनयोरूहः । आमन ऋजव एव दर्भाः । प्रदक्षिणमेव कुशासनम् । यवोऽसि यवयेत्यनेनैव यवप्रक्षेपणम् । तत्तद्युग्मार्घ्यविप्रकरं तत्तद्द्वितीयविप्रकरे संस्थाप्य कराग्रेण पवित्राग्रं तेन तेन धारयित्वा तत्र तत्र तन्त्रेणार्घ्यं देयम् । नान्दीमुखान्पितॄनावाहयिष्ये, इत्यावाहन ऊहः । मध्यमाङ्गुल्यैव गन्धदानं द्विर्द्विरेव । पुष्पाणि मालत्यादीनि । ततश्चतुरस्रमण्डले सौवर्णानि तदभावे मधुकपलाशादीनि सर्वाणि भोजनपात्राणि संस्थाप्य सर्वपात्राणां परितो बृहत्सामेति प्रदक्षिणमेव भस्ममर्यादां कृत्वा करशुद्धिं विधाय पात्रेषूपस्तीर्य होमार्थान्नोद्धरणार्थं पात्रमुपस्तीर्य गृहीत्वा, उद्धरिष्याम्य० मि, इति ब्राह्मणानामन्त्रयते । काममु० क्रियतामिति विप्रा अनुज्ञां दद्युः ।

ततः कर्ता तूष्णीमेवामूलमेव प्रादेशमात्रांश्छिद्य तूष्णीं परिस्तरणार्थानमूलानेव दर्भानाच्छिद्योभयं बद्ध्वाऽधो निदधाति । ततो दक्षिणाग्निमौपासनाग्निं वा तदभावेऽयाश्चेत्यादिविधिनोत्पादितमग्निं प्रागुदगग्रैर्दर्भैः प्रदक्षिणमेव परिस्तीर्य तूष्णीमेव प्रदक्षिणं परिषिच्य पिण्डदानार्थं पृषदाज्यं निष्पाद्य सुरक्षितं निदध्यात् । दध्नि तदर्धमाज्यमानीय तदालोडयेत्तत्पृषदाज्यं भवति । अत्रासंस्कृतमेवाऽऽज्यम् । तत आज्येनाभिघार्योद्वास्याग्नेः पश्चान्निधाय दक्षिणं जान्वाच्य मेक्षणेनोद्धृतान्नैकदेशमुपहृत्य सोमाय पितृपीताय स्वाहेति प्रथमाहुतिं जुहोति । सोमाय पितृपीतायेदं० । पुनरुपहृत्य—यमायाङ्गिरस्वते पितृमते स्वाहेति तृतीयाहुत्यर्थं कानिचित्सिक्थान्यवशेष्य द्वितीयामाहुतिं जुहोति । यमायाङ्गिरस्वते पितृमत इदं० । अग्नये कव्यवाहनाय स्विष्टकृते स्वाहेति यानि मेक्षणे द्वितीयाहुत्यवशेषितानि सिक्थानि तैस्तृतीयामाहुतिं जुहोति । अग्नये कव्यवाहनाय स्वि० इदं० । ततस्तूष्णीं मेक्षणमनुप्रहरति । ततः पात्रेषु मधुरद्रव्यव्यञ्जनसहितमन्नं परिविष्य हुतावशिष्टं किंचित्पितृपात्रेषु परिविष्य देवेभ्यो नैवेद्यं समर्प्य सत्यं त्व० परिषिच्य पृथिवी ते पात्रमित्याद्युक्त्वा सत्यसंज्ञकेभ्यो वि० भ्यो नान्दीमुखेभ्य इदमन्नं सोपस्करं

स्वाहा हव्यं न ममेति विप्रद्वयहस्तयोरुदकं दत्त्वा वसुरुद्रादित्येभ्यो ना० स्वेभ्य इदमन्नं सो० मेति द्वितीयदैवविप्रद्वयहस्तयोरुदकं दत्त्वा ये देवा दिवीत्युपतिष्ठते। ततः सत्यं त्वा० परिषिच्य पृथिवी ते पा० त्र्यक्षितमसि मातृपिता० दीनां ना० स्वानां क्षेष्ठा अमुत्रामुष्मिँल्लोके, इति मातृवर्गीयविप्रपात्रद्वयस्थमन्नं मन्त्रावृत्त्याऽभिमृश्य, इदं विष्णु० विष्णो हव्यं रक्षस्वेति तयोरङ्गुष्ठमन्नं मन्त्रावृत्त्या तत्तदन्ने निवेश्य मातृपि० ह्रीभ्यो नान्दीमुखाभ्य इदमन्नं सोपस्करं स्वाहा हव्यं न ममेति मातृवर्गीयविप्रहस्तयोरुदकं दद्यात्। एवमूहेन पितृपार्वणे मातामहपार्वणे च। एवमन्नं निवेद्य कुलदेवतां संपूज्य यन्तु नदय इति पठित्वा नान्दीमुखाः प्रीयन्तामिति वाचयित्वा प्रीयन्तां नान्दीमुखाः पितर इति तदुक्ते नाम-मस्कृत्य ब्रह्मार्पणं कृत्वा परिविष्टान्नेषु सर्पिरासिच्यापोशा(ऽऽपोश)नोद्-कदानादि यथासुखं जुषध्वमित्युक्त्वाऽपेक्षितं याचितव्यमिति विप्रमार्थ-नान्तं कुर्यात्। विप्राः परिषेकचाल्हिदानवर्ज्यं विधिना भुञ्जीयुः। तेषु भुञ्जा-नेषु रक्षोघ्नादिमन्त्रानभिश्रावयेत्। भोजनान्ते मधु वाता इत्येतस्य स्थाने उपास्मै गायता नरः प०मधु इति पञ्चर्चः श्रावयेत्। अक्षन्नमीमदन्तेति च। ततः सत्यसंज्ञका वि० नान्दीमुखा नान्दीश्राद्धं रुचितम्। वसु-संज्ञ० नान्दीमुखा ना० रुचितम्। सुरुचितमिति देवविप्राः प्रतिब्रूयुः। मातृपितामहीप्रपितामह्यो ना० स्वा नान्दीश्रा० संपन्नम्। पितृपि० ना० स्वा नान्दी० संप० मातामहमा० ह्य: सप० ना० स्वा नान्दीश्रा० संपन्नमिति तत्तद्विप्रं प्रति वदेत्। सुसंपन्नमिति विप्राः प्रतिब्रूयुः। अथ-मेव तृप्तिप्रश्नः। तत उच्छिष्टभाग्भ्योऽन्नं दीयतामित्यादि विप्राचमनान्तं समानम्। तत उच्छिष्टं निष्काश्य भूमिं संमार्ज्य पिण्डदानं कुर्यात्। तत्रायं विशेषः—मार्जयन्तां मातरो नान्दीमु० सोम्यासः। मार्ज० पिता-मह्यो ना० सो०। मार्ज० प्रपितामह्यो ना० सो०। मार्ज० पितरो नान्दी-मुखा इत्यादिभिर्यथायथं तत्तद्रेखायां देवतीर्थेनैवोदकाञ्जलिनिनयनम्। एतत्ते मातर्नान्दीमुखेऽयं पिण्डः स्वाहा। एतत्ते पितामहि नान्दीमुखे, इत्यादिभिर्यथायथं तत्तद्रेखास्थदर्भेष्वपि देवतीर्थेनैव पृषदाज्ययवैरुद्धृतमन्नं मिश्रयित्वा तेन पिण्डान्दद्यात्। प्रतिपिण्डं तूष्णीं द्वितीयपिण्डदानम्। आङ्क्ष्व मातर्नान्दीमुखे, इत्याद्यूहेनाञ्जनं दद्यात्। अभ्यङ्क्ष्व मातर्ना-न्दीमुखे, इत्याद्यूहेनाभ्यञ्जनम्। एतानि वः पितरो नान्दीमुखा वासांस्यमुत्रा-सीत्येवमूहेन दशामूर्णास्तुकां वा छित्त्वा छित्त्वा पिण्डेषु क्षिपानि

पूर्वे वयसि । उत्तरे वयसि तु दक्षिणप्रकोष्ठस्थं हृदयस्थं वा लोम छित्त्वा छित्त्वा तेनैव मन्त्रेण प्रक्षिपेत् ।

ततः पितृभ्यो ना० भ्यो नम इति गन्धादिभिः पूजयेत् । अत्र रक्तगन्धपुष्पाद्यपि देयम् । ततो नमो वः पितरो रसायेत्यादिषु पितृशब्दोत्तरं नान्दीमुखशब्दप्रयोगः कर्तव्यः । ततः शिवा आपः सन्त्वित्यादि । अस्मिञ्श्राद्धे दक्षैरथोदकादिभिर्नान्दीमुखाः पितरः प्रीयन्तामिति भवन्तो ब्रुवन्त्वित्यक्षय्यं दत्त्वा प्रीताः सन्तु इति तैरुक्ते सर्वेभ्यो विप्रेभ्यो द्राक्षामलकनिष्क्रयं दक्षिणाः पान्त्विति दक्षिणां दद्यात्ताम्बूलं च । ततो दातारो नोऽभिवर्धन्तामिति विप्रान्प्रार्थयेत् । दातारो नोऽभिवर्धन्तामिति विप्राः प्रतिब्रूयुः । ततो नान्दीमुखाः पितरः प्रीयन्तामिति भवन्तो ब्रुवन्त्विति कर्ता वदेत् । प्रीयन्तां नान्दीमुखाः पितर इति विप्राः । मद्गृहे सततं शोभनमस्त्विति भवन्तो ब्रुवन्त्विति कर्ता वदेत् । त्वद्गृहे सततं शोभनमस्त्विति विप्राः प्रतिब्रूयुः । अत्र सर्वान्पिण्डान् 'त्यमू षु वाजिनं देवजूतं सहावानं तरुतारं रथानाम् । अरिष्टनेमिं पृतनाजमाशुं स्वस्तये तार्क्ष्यमिहाऽऽहुवेम ' इति मन्त्रेणोद्धृत्याप्सु क्षिपति । ब्राह्मणं वा भोजयतीत्यादि प्रतिपत्त्यन्तरं तु दर्शश्राद्धवत् । ततो बर्हिरग्नौ प्रहरति । पिण्डस्थाने जलमासिच्य वाजे वाजे, इत्यस्य स्थाने 'त्यमू षु वाजिन० ।' इति मन्त्रमुक्त्वा पितॄन्देवांश्च विसर्जयेत् । ततः कूर्चद्वयं विस्रस्य । आ मा वाजस्य० गन्ता पितरा नान्दीमुखा मातरा नान्दीमुखाश्चाऽऽमा सो० स्वादुष० सदः पितरो नान्दीमुखा वयोधाः० ब्राह्मणासः पितरो नान्दीमुखाः सोम्यासः शिवे इत्यूहेन मन्त्रान्वदेत् । ततो विप्रा इहैव स्तं० आयुः प्रजां० प्रीतास्तुभ्यं पितामहा नान्दीमुखा इत्याशिषो दद्युः । ततः कर्ता माता पितामही चैव० प्रमातामहकस्तथा । एते० मङ्गलमिति विप्रान्वदेत् । विप्रा मात्रादयः सुप्रीता मङ्गलं प्रयच्छन्तु, इति प्रतिब्रूयुः । तत इडामग्ने० इत्यनेन मन्त्रेणाऽऽचारात्पात्रेण किंचिद्द्रव्यं संघट्टयेत् । ततोऽद्य मे सफलमित्यादि यस्य स्मृत्येत्येतदन्तं कृत्वा, अनेन नान्दीश्राद्धाख्येन कर्मणा परमेश्वरः प्रीयतां न ममेति कर्म समर्प्य विष्णुं संस्मृत्य पवित्रे विसृज्याऽऽचम्य मातॄर्विसर्जयेत् ।

इति नान्दीश्राद्धप्रयोगः ।

---

## अथाङ्कुरारोपणप्रयोगः ।

एतच्चान्नप्राशनादिविवाहान्तापत्यसंस्कारेष्वन्येषु च नूतनागारप्रवेशादिशुभकर्मसु कर्मारम्भदिनात्पूर्वं रात्रौ कल्याणसंज्ञके प्रथममुहूर्ते कर्तव्यम् । अतित्वरायां सद्यो दिवैव । अथ प्रयोगः—कर्ताऽऽचम्य प्राणानायम्य देशकालौ संकीर्त्यामुककर्मणः साफल्यनिरन्तरशुभतासिद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थं० । अङ्कुरारोपणकर्मणः पुण्याहं भवन्तो ब्रुवन्तु । अङ्कुरारोपणकर्मणः स्वस्ति भव० । अङ्कुरारोपणकर्मण ऋद्धिं० । इति त्रिस्त्रिर्विप्रान्वाचयेत् । ॐ पुण्याहम् । ॐ स्वस्ति । ॐ ऋध्यतामिति विप्रास्त्रिस्त्रिः प्रतिब्रूयुः । ततः कर्ता ब्रह्मादयः प्रीयन्तामिति पात्रे जलं क्षिप्त्वा शुचौ देशे गोचर्मपरिमितं चतुरस्रं स्थण्डिलं गोमयेन विधाय रङ्गवल्ल्यादिभिरलंकृत्य श्वेताक्षतान्संप्रकीर्याद्भिरभ्युक्ष्य सुवर्णादिनिर्मिता अभावे मृन्मयीर्वा पञ्च पालिकाः (पात्रविशेषः) तत्र संस्थापयेत् । ततो वल्मीकमृदं ह्रदमृदं शुष्कगोमयचूर्णं चैकीकृत्य मध्यमायां पालिकायां प्रक्षिप्य प्रागादिषु क्रमेण प्रक्षिपेत् । ततस्तासामधोभागेषु दूर्वाङ्कुराश्वत्थशिरीषबिल्वपत्राणि प्रक्षिप्य श्वेतसूत्रेण पालिका आवेष्ट्य तासु क्रमेण देवता आवाहयेत् ।

ॐ भूर्ब्रह्माणमावाहयामि । ॐ भुवश्चतुर्मुखं ब्रह्माणमा० । ॐ सुवः प्रजापतिं ब्रह्माणमा० । ॐ भूर्भुवः सुवर्हिरण्यगर्भं ब्रह्माणमा० मि । इति मध्यमायां पालिकायां ब्रह्माणमावाह्य । ॐ भूर्वज्रिणमा० । ॐ भुवः शचीपतिमा० । ॐ सुवरिन्द्रमा० । ॐ भूर्भुवः सुवः शतक्रतुमा० मि । इति पूर्वस्यां पालिकायां वज्रिणम् । ॐ भूर्यममा० । ॐ भुवो वैवस्वतमा० । ॐ सुवः पितृपतिमा० । ॐ भूर्भुवः सुवः प्रेतपतिमा० मि । इति दक्षिणस्यां पालिकायां यमम् । ॐ भूर्वरुणमा० । ॐ भुवः प्रचेतसमा० । ॐ सुवः सुरूपिणमा० । ॐ भूर्भुवः सुवरपांपतिमा० मि । इति पश्चिमायां पालिकायां वरुणम् । ॐ भूः शशिनमा० । ॐ भुव इन्दुमा० । ॐ सुवर्निशाकरमा० । ॐ भूर्भुवः सुवः सोममा० मि । इत्युत्तरस्यां पालिकायां सोमम् । ततस्तत्तन्मन्त्रैर्नाममन्त्रैर्वा पूजयेत् । ॐ आपो हि ष्ठा म० ३ । हिरण्यवर्णाः शुच० ४ । पवमानः सुवर्जनः पवित्रेण विचर्षणिः० मोर्जयन्त्या पुनातु । इत्येतैः सन्निधे ब्रह्मादीन्संस्नापयेत् । पुष्पाञ्जलिसमर्पणान्ते—

दिशां पतीन्नमस्यामि सर्वकामफलप्रदान् ।
कुर्वन्तु सफलं कर्म कुर्वन्तु सततं शुभम् ॥

इति पालिकानां पश्चात्प्राङ्मुख उपतिष्ठेदिति पूजने विशेषः । तत उपविश्य व्रीहियवतिलमुद्गसर्षपानिमश्रीकृत्य क्षीरेण प्रक्षाल्य मध्यमपालिकादिक्रमेण निवपति । ॐ ब्रह्मजज्ञानं प्र०विनः । हिरण्यगर्भः समवर्त० विधेम । इति द्वाभ्यां मध्यमपालिकायां निवपति । ॐ यत इन्द्र० जहि । स्वस्तिदा विश० अभयंकरः । इति द्वाभ्यां पूर्वस्यां पालिकायां नि० । ॐ योऽस्य कौष्ठ्यज० पृथिवी दृढा । इति द्वाभ्यां दक्षिणस्यां पालिकायां नि० । ॐ इमं मे व० समोपीः । इति द्वाभ्यां पश्चिमायां पालिकायां नि० । ॐ सोमो धेनु९० शदस्मै । अपाढं युत्सु० मसोम । इति द्वाभ्यामुत्तरस्यां पालिकायां निवपति । व्रीह्यादीनां सर्वेषामलाभ एकमेव द्रव्यं पालिकासु निवपेत् । ततो यथाक्रमं शुद्धाभिः सिकताभिः पालिकाः प्रच्छाद्य पञ्चगव्येन संमोक्ष्य । ओमिति महता पात्रेणापिधाय कर्मसमाप्तिपर्यन्तं सुरक्षितं कुर्यात् ।

समाप्ते कर्मणि देवताः संपूज्य पूर्वोक्तैरों मूर्ब्रह्माणमित्याद्यैर्मन्त्रैरुद्वासयाभीत्यृग्भिर्यथाक्रमं देवता उद्वास्य कर्मेश्वरार्पणं कुर्यात् । इदं च गर्भाधानादिनामकर्मान्तसंस्कारेषु न कर्तव्यम् । निषेधात् ।

इति बौधायनसूत्रानुसारेणाङ्कुरारोपणप्रयोगः ।

---

अथाग्निमुखप्रयोगः ।

कर्ताऽऽचम्य प्राणानायम्य पञ्चप्रस्थसिकताभिः शर्करास्थ्यादिवर्जिताभिः शुक्लाभिरनार्द्राभिर्होमानुसारेण हस्तमात्रं बाहुमात्रमधिकं वा समचतुरश्रं प्राक्प्रवणं प्रागुदक्प्रवणं समं वा स्थण्डिलं विधायाक्षतरङ्गवल्ल्यादिभिः परितोऽलंकृत्य गोमयेनोपलिप्य ताम्रकल्पसुवमेकं पर्ण कुशादि गृहीत्वा तेन स्थण्डिलमध्यप्रदेशे तिस्रः प्राचीरुदगपवर्गास्तथैव तिस्रश्चोदीचीः प्रागपवर्गा रेखा लिखित्वा कृत्स्नं स्थण्डिलं न्युब्जेन विरलमुष्टिना जलेन सिञ्चति । तदेवावोक्षणम् । ततोऽभ्यापायन्यतमेन खनित्रेण सकृदुद्धृत्यावोक्षति । ततस्तैजसादिपात्रयुग्मेन(ण) संपुटीकृत्य सुवासिन्या श्रोत्रियागारादभावे स्वगृहाद्वा प्रदीप्तमङ्गारमयं निर्धूममग्निमाहृत्य स्थण्डिलादाग्नेय्यां निधाय भूर्भुवः सुवः, इत्यात्माभिमुखमुल्लिखितदेशे तत्तत्कर्मप्रयुक्तनामोच्चारणपूर्वकमग्निं प्रतिष्ठापयामीति प्रतिष्ठापयेत् ।

ततः प्रोक्षितेन्धनानि प्रक्षिप्य वेणुयमन्या प्रबोधयोत्थाय । ॐ जुष्टो दमूना० रेणे । इमं० भोजनानि। इत्यग्निमुपस्थायोपविश्य । ॐ चत्वारि शृङ्गा० आविवेश । सप्तहस्तश्चतुःशृ० तोमरं व्यजनं वामेघृतपात्रं च धारयन् । आत्मा०यो हुताशनः । इति ध्यायेत् । यत्राग्निमुपसमाधायेति सूत्रकृद्वदति तत्रोद्धननादिना संस्कृते देशेऽग्निमाहृत्य स्थापयित्वा होमः कार्यः । यत्र न वदति तत्र स्वस्थानेऽवस्थिते परिस्तरणादिविधिनैव कार्यः ।

अथाऽऽचारप्राप्तमन्वाधानम् । तद्यथा—स्थूलसमिधमादाय श्रद्ध एहि सत्येन त्वाऽऽह्वयामीति त्रिरुक्त्वा, याः पुरस्तात्स० श्रद्धां यज्ञमारभे । आकूत्यै त्वा० निविष्टमिति पठित्वा हृदयालम्भमुदकस्पर्शं प्राणायामं च विधायामुकहोमे या वक्ष्यमाणा देवतास्ताः सर्वाः परिगृहीष्यामि जातवेदसमग्निमिध्मेन यक्ष्ये । आघारहोमे—प्रजापतिं मनुमिन्द्रं चैकैकयाऽऽज्याहुत्या यक्ष्ये । आज्यभागहोमे—अग्निं सोमं चैकैकयाऽऽज्याहुत्या यक्ष्ये । सामान्यप्रधानहोमे—जातवेदसमग्निं सप्तवतीं सप्तवतीं देवीं प्रसाधनीं देवीमग्निं वायुं सूर्यं प्रजापतिं चैकैकयाऽऽज्याहुत्या यक्ष्ये, इत्युक्त्वा यथोक्ताः प्रधानदेवता उल्लिख्यामुकद्रव्येण यक्ष्ये, इति वदेत् । अङ्गहोमे–अयासमग्निं प्रजापतिं चैकैकयाऽऽज्याहुत्या यक्ष्ये । जयहोमे चित्तं चित्तिमाकूतमाकूतिं विज्ञातं विज्ञानं मनः शक्करीर्दर्शं पूर्णमासं बृहद्रथंतरं प्रजापतिं चैकैकयाऽऽज्याहुत्या यक्ष्ये । अभ्यातानहोमे—अग्निं भूतानामधिपतिम् । इन्द्रं ज्येष्ठानामधिपतिम् । यमं पृथिव्या अधिपतिम् । वायुमन्तरिक्षस्याधिपतिम् । सूर्यं दिवोऽधिपतिम् । चन्द्रमसं नक्षत्राणामधिपतिम् । बृहस्पतिं ब्रह्मणोऽधिपतिम् मित्रं सत्यानामधिपतिम् । वरुणमपामधिपतिम् । समुद्रं स्रोत्यानामधिपतिम् । अन्नं साम्राज्यानामधिपतिं । सोममोषधीनामधिपतिम् । सवितारं प्रसवानामधिपतिम् । रुद्रं पशूनामधिपतिम् । उदकस्पर्शः । त्वष्टारं रूपाणामधिपतिम् । विष्णुं पर्वतानामधिपतिम् । मरुतो गणानामधिपतींश्चैकैकयाऽऽज्याहुत्या यक्ष्य इत्युक्त्वा प्राचीनावीती । पितॄन्पितामहान्परानवरांस्ततांस्ततामहानेकयाऽऽज्याहुत्या यक्ष्य इत्युक्त्वा यज्ञोपवीत्यप उपस्पृशेत् । उपस्थानपक्षे पितॄन्पितामहानित्येतस्य वाक्यस्य नोल्लेखः । राष्ट्रभृद्धोमे—ऋताषाडृतधामानमग्निं गन्धर्वम् । ओषधीरप्सरस ऊर्जः । संहितं विश्वसामानं सूर्यं गन्धर्वम् । मरीचीरप्सरस आयुः । सुषुम्नं सूर्यरश्मिं चन्द्र-

मसं गन्धर्वम् । नक्षत्राण्यप्सरसो बेकुरीः । भुज्युं सुपर्णं यज्ञं गन्धर्वम् । दक्षिणा अप्सरसः स्तवाः । प्रजापतिं विश्वकर्माणं मनो गन्धर्वम् । ऋक्सामान्यप्सरसो वह्नीः । इषिरं विश्वव्यचसं वातं गन्धर्वम् । अपोऽप्सरसो मुदाः । भुवनस्य पतिं परमेष्ठिनमधिपतिं मृत्युं गन्धर्वम् । विश्वमप्सरसो भूः । सुक्षितिं सुभूतिं भद्रकृतं सुवर्वन्तं पर्जन्यं गन्धर्वम् । विद्युतोऽप्सरसो रुचः । दूरेहेतिममृडयं मृत्युं गन्धर्वम् । प्रजा अप्सरसो भीरुः । चारुं कृपणकाशिनं कामं गन्धर्वम् । आधीरप्सरसः शोचयन्तीः । भुवनस्य पतिं चैकैकयाऽऽज्याहुत्या यक्ष्य इत्युल्लिखेत् । अथवा जयदेवता अभ्यातानदेवता राष्ट्रभृद्देवता एकैकयाऽऽज्याहुत्या यक्ष्य इति समुदितरूपेणोल्लेखः । स्विष्टकृद्धोमे—अग्निं स्विष्टकृतमेकया हुतशेषाहुत्या यक्ष्ये । प्रायश्चित्तहोमे—अग्निं तिसृभिराज्याहुतिभिः, अग्निं वरुणं चेन्द्रं मघवन्तमिन्द्रं वृत्रहणं त्र्यम्बकं विष्णुमग्निं वायुं सूर्यं बृहस्पतिं वरुणमिन्द्रं विश्वान्देवांश्चैकैकयाऽऽज्याहुत्या यक्ष्ये । संस्रावहोमे—वसून्रुद्रानादित्यान्संस्रावाज्येन यक्ष्ये । एता देवताः सद्यो यक्ष्ये । ततो भूर्भुवः सुवः स्वाहेत्यन्वाधानसमिधोऽग्नावादध्यात् । प्रजापतय इदं न ममेति त्यागः । ततः स्थण्डिलाद्द्व्यङ्गुलमितं पञ्चाङ्गुलमितं वा स्थलं त्यक्त्वा प्रागादिदिक्षु प्रागग्रैर्दर्भैः परिस्तृणाति प्राग्दक्षिणतः पश्चादुत्तरतः । परिस्तरणे चत्वारस्त्रयो वा दर्भाः । ततो दक्षिणेनाग्निं ब्रह्मायतने दर्भान्प्रागग्रान्स्तृणाति । ॐ मयि गृह्णाम्यग्रे अग्निं० परागादिति द्वाभ्यामात्मनि अग्निर्गृहीत इति विभाव्य जपति । ततोऽग्रेरुत्तरत उदगग्रान्दर्भान्संस्तीर्य तेषु यथाप्रयोजनं दर्वीमाज्यस्थालीं प्रणीताप्रात्रं प्रोक्षणीपात्रमिध्मं बर्हिः उपवेषः संमार्गदर्भानवज्वलनदर्भानाज्यं प्रादेशमात्राः समिधश्चेति साधारणानि वैशेषिकाणि च पात्राणि द्रव्याणि च सकृदेव यथोपपादं वाऽऽसादयेत् । ततोऽन्वायतनादीशान्याममुकप्रवरान्वितामुकगोत्रोत्पन्नामुकशाखाध्यायिनममुकशर्माणममुककर्मणि ब्रह्माणं त्वामहं वृण इति ब्रह्माणं यजमानो वृणुयात् । ब्रह्मा वृतोऽस्मि कर्म करिष्यामीत्युक्त्वा द्विराचम्योत्तरेण पात्राणि अपरेणाग्निं पूर्वेणाऽऽचार्यं दक्षिणाऽतिक्रम्याऽऽसनात्तृणं निरस्याप उपस्पृश्याग्निमभिमुख उपविशति । ब्रह्माऽलाभे यज्ञोपवीतं दण्डं कमण्डलुं कूर्चं वा स्थापयेत् । ततो द्वौ दर्भौ समौ साग्रावन्तर्गर्भरहितौ प्रादेशमात्रौ पवित्रे कृत्वा प्रणीतापात्रं गृहीत्वा त्रिः प्रक्षाल्य प्रागग्रे पवित्रे तस्मिन्निधायोपबिलं पूरयि-

त्वाऽङ्गुष्ठोपकनिष्ठिकाभ्यामुदगग्रे सग्रन्थिके पवित्रे धृत्वोत्तानाभ्यां प्रागग्राभ्यां पाणिभ्यां प्रणीतापात्रस्था अपस्त्रिरुत्पूय सव्यपाणिना प्रणीतापात्रं धृत्वा दक्षिणेन तत्पात्रमपिधाय नासिकासमं धारयन्नस्कन्दयन्नुत्तरेणैव हृत्वोत्तरेणाग्निं दर्भेषु सादयित्वोदगग्रैर्दर्भैरपिदधाति । ततस्ते पवित्रे अप्रक्षालिते एव प्रोक्षणीपात्र उदगग्रे निधाय तत्पात्रमद्भिः पूरयेत् । ततस्ता अपः पूर्ववदुत्पूय बिलवन्ति पात्राण्युत्तानानि कृत्वेध्मं विस्रस्य प्राक्संस्थं त्रिः सर्वाभिरद्भिः सपवित्रेण हस्तेन सर्वाणि पात्राणि प्रोक्षति । अमुष्टीकृतेनोत्तानेन हस्तेन जलसेचनं प्रोक्षणम् । ततः दर्भमासादितान्संमार्गदर्भांश्च गृहीत्वाऽग्नौ दक्षिणहस्तेन निष्टप्य प्राक्संस्थं दर्भाग्रैरन्तरतोऽभ्याकारं प्रत्यक्संस्थं मध्यैर्बाह्यतो मूलैर्दण्डं च संमृज्य पुनर्निष्टप्य दर्भेषु निधाय संमार्गदर्भानभ्युक्ष्याग्नावनुप्रहरति । मुष्टीकृतेनावाचीनेन हस्तेन जलसेचनमभ्युक्षणम् । ततो गव्यमाज्यं बहिरेव द्रवीकृत्य पवित्रान्तर्हितायामपरेणाग्न्यायतनं दर्भेषु स्थापितायामाज्यस्थाल्यामाज्यं निरूप्योपवेषेणोत्तरपरिस्तरणाद्बहिरङ्गारान्निरूह्य त्यन्तान्कृत्वा तेष्वाधिश्रित्याऽऽयतनस्याग्नौ प्रदीपितैर्दर्भैरवाचीनज्वालैरुपरि ज्वलयित्वा तान्सव्ये गृहीत्वा दक्षिणहस्तेनाङ्गुष्ठपर्वमात्रं दर्भाग्रद्वयमाज्ये प्रत्यस्य तैरेव दर्भैः प्रज्वालितैस्त्रिः पर्यग्नि कृत्वा तान्दर्भानुत्तरतो निरस्याप उपस्पृशेत् । तत आज्यं कर्पन्निवोदगुद्वास्योपवेषेणाङ्गारानायतनस्थाग्नौ प्रक्षिप्योदगग्रे पवित्रे धृत्वा ताभ्यामाज्ये पश्चाद्भागमारभ्य प्राग्भागं नीत्वा पुनः पश्चाद्भागमानीयोत्पुनीयादित्येवं त्रिरुत्पूय पवित्रयोर्ग्रन्थिं विस्रस्य पवित्रे अग्नावभ्याधाय शम्याकृतिभिः परिधिभिरग्निं परिदधाति । अपरेणाग्निमुदीचीनकुम्बं * मध्यमम् । दक्षिणेनाग्निं प्राचीनकुम्बं दक्षिणम् । उत्तरेणाग्निं प्राचीनकुम्बमुत्तरम् । तत्र दक्षिणस्य परिधेर्मध्यमपरिधिमूलस्योपरि मूलं कर्तव्यम् । उत्तरस्य मध्यमपरिध्यग्रस्याधो मूलम् । परिस्तरणानामुपर्येव परिधिपरिधानं कर्तव्यम् । ततोऽग्नेः पश्चाद्भूमिं प्रोक्ष्योदगग्रं बर्हिःसंनहनशुल्वं तत्राऽऽस्तीर्य तदुपरि प्रागग्रमुदगपवर्गं बर्हिरास्तीर्य तत्र दर्वीमाज्यस्थालीं च क्रमेणोदक्संस्थं निदधाति । चरुहोमश्चेत्तमभिघार्याऽऽज्यस्थाल्या उत्तरतो बर्हिष्यासादयति । ततोऽग्न्यायतनसमन्तादङ्गुलत्रयपरिमितं स्थलं त्यक्त्वा परिषिञ्चति । अदितेऽनुमन्यस्वेति दक्षिणतः प्राचीनं परिषि-

---

* कुम्बः स्थूलप्रदेशः ।

ञ्चति। अनुमतेऽनुमन्यस्वेति पश्चादुदीचीनम्। सरस्वतेऽनुमन्यस्वेत्युत्तरतः प्राचीनम्। देव सवितः प्रसुवेत्यैशानीमारभ्य सर्वतः प्रदक्षिणं परिषिञ्चति। ततो दक्षिणेन पाणिना दर्व्याऽऽज्यस्थाल्या आज्यमादाय भूमिष्ठमिध्मं मूलमध्याग्रप्रदेशेष्वङ्क्त्वा दर्वीं स्वस्थाने निधाय दक्षिणहस्तेनेध्ममादाय—अयं त इध्म आत्मा जातवेदस्तेनेध्यस्व वर्धस्व चेन्धि वर्धय चास्मान्प्रजया पशुभिर्ब्रह्मवर्चसेनान्नाद्येन समेधय स्वाहा। सव्यान्वारब्धेन दक्षिणहस्तेन प्रागग्रमभ्यादधाति। जातवेदसेऽग्नय इदं०। ततो दर्व्याऽऽज्यं गृहीत्वोत्तरं परिधिसंधिमनुलक्ष्य तेन दर्वीं प्रवेश्य प्रजापतये मनवे स्वाहेति प्रजापतिं मनसा ध्यायन्मनसैव मन्त्रमुच्चारयन्वायव्यकोणमारभ्याऽऽग्नेयकोणपर्यन्तं संततमृजुं दीर्घं जुहोति। प्रजापतये मनव इदं०। पुनर्दर्व्याऽऽज्यं गृहीत्वा दक्षिणं परिधिसंधिमनुलक्ष्य तेन दर्वीं प्रवेश्य इन्द्राय स्वाहेति मन्त्रं पठन्नैर्ऋतकोणमारभ्यैशानकोणपर्यन्तं संततमृजुं दीर्घमासीन एव जुहोति। इन्द्रायेदं०। उभयत्र सर्वेषामिध्मकाष्ठानामाघाराज्यसंस्पर्शः। इत्याघारावाघार्य। अग्नये स्वाहा। अग्नावुत्तरार्धपूर्वार्धे जुहोति। अग्नय इदं०। सोमाय स्वाहा। अग्नौ दक्षिणार्धपूर्वार्धे जुहोति। सोमायेदं०। इत्याज्यभागौ हुत्वा तयोर्मध्ये वक्ष्यमाणाहुतीर्जुहोति। अथ सामान्यप्रधानहोमः। युक्तो वह जातवेदः पुरस्तादग्ने विद्धि कर्म क्रियमाणं यथेदम्। त्वं भिषग्भेषजस्यासि कर्ता त्वया गामश्वान्पुरुषान्सनेम स्वाहा। जातवेदसेऽग्नय इदं०। या तिरश्चीनि पद्यसेऽहं विधरणीति। तां त्वा घृतस्य धारयाऽग्नौ संराधनीं यजे स्वाहा। संराधन्या इदं०। संराधन्यै देव्यै स्वाहा। संराधन्यै देव्या इदं०। प्रसाधन्यै देव्यै स्वाहा। प्रसाधन्यै देव्या इदं०। भूः स्वाहा। अग्नय इदं०। भुवः स्वाहा। वायव इदं०। सुवः स्वाहा। सूर्यायेदं०। भूर्भुवः सुवः स्वाहा। प्रजापतय इदं०। इति सामान्यप्रधानहोमः।

ततस्तत्तत्कर्मणो वैशेषिकप्रधानहोमं कुर्यात्। तत उत्तराण्यङ्गानि। इमं मे वरुण० चके स्वाहा। वरुणायेदं०। तत्त्वा यामि० मोषीः स्वाहा। वरुणायेदं०। त्वं नो अग्ने० स्मत्स्वाहा। अग्नये वरुणाय चेदं०। स त्वं नो० न एधि स्वाहा। अग्नये वरुणाय चेदं०। त्वमग्ने अ० पजरं स्वाहा। अयसेऽग्नय इदं०। प्रजापते०यीणाम् स्वाहा। प्रजापतय इदं०। इत्यङ्गहोमः।

अथ जयाख्यहोमाः । ॐ चित्तं च स्वाहा । चित्तायेदं० । चित्तिश्च स्वाहा । चित्तय इदं० । आकूतं च स्वाहा । आकूतायेदं० । आकूतिश्च स्वाहा । आकूतय इदं० । विज्ञातं च स्वाहा । विज्ञातायेदं० । विज्ञानं च स्वाहा । विज्ञानायेदं० । मनश्च स्वाहा । मनस इदं० । शक्वरीश्च स्वाहा । शक्वरीभ्य इदं० । दर्शश्च स्वाहा । दर्शायेदं० । पूर्णमासश्च स्वाहा । पूर्णमासायेदं० । बृहच्च स्वाहा । बृहत इदं० । रथन्तरं च स्वाहा । रथन्तरायेदं० । प्रजापतिर्जयानिन्द्राय वृष्णे प्रायच्छदुग्रः पृतनाज्येषु तस्मै विशः समनमन्त सर्वाः स उग्रः स हि हव्यो बभूव स्वाहा । प्रजापतय इदं० । इति त्रयोदश जयहोमाः ।

अथाभ्यातानाः । ॐ अग्निर्भूतानामधिपतिः स माऽवत्वस्मिन्ब्रह्मन्नस्मिन्क्षत्रेऽस्यामाशिष्यस्यां पुरोधायामस्मिन्कर्मन्नस्यां देवहूत्याᳪं स्वाहा । अग्नये भूतानामधिपतय इदं० । इन्द्रो ज्येष्ठानामधिपतिः स मा० इन्द्राय ज्येष्ठानामधिपतय इदं० । यमः पृथिव्या अधिपतिः स मा० यमाय पृथिव्या अधिपतय इदं० । वायुरन्तरिक्षस्याधिपतिः स मा० वायवेऽन्तरिक्षस्याधिपतय इदं० । सूर्यो दिवोऽधिपतिः स मा० सूर्याय दिवोऽधिपतय इदं० । चन्द्रमा नक्षत्राणामधि० चन्द्रमसे नक्षत्राणामधिपतय इदं० । बृहस्पतिर्ब्रह्मणोऽधि० बृहस्पतये ब्रह्मणोऽधिपतय इदं० । मित्रः सत्यानामधि० मित्राय सत्यानामधिपतय इदं० । वरुणोऽपामधि० वरुणायापामधिपतय इदं० । समुद्रः स्रोत्यानामधि० समुद्राय स्रोत्यानामधिपतय इदं० । अन्नᳪं साम्राज्यानामधिपति तन्माऽव० अन्नाय साम्राज्यानामधिपतये इदं० । सोम ओषधीनामधि० सोमायौषधीनामधिपतय इदं० । सविता प्रसवानामधि० सवित्रे प्रसवानामधिपतय इदं० । रुद्रः पशूनामधि० रुद्राय पशूनामधिपतय इदं० । अत्रोदकस्पर्शः । त्वष्टा रूपाणामधिपतिः० त्वष्ट्रे रूपाणामधिपतय इदं० । विष्णुः पर्वतानामधि० विष्णवे पर्वतानामधिपतय इदं० । मरुतो गणानामधिपतयस्ते माऽवन्तु० मरुद्भ्यो गणानामधिपतिभ्य इदं० । ततः प्राचीनावीती भूत्वा । पितरः पितामहाः परेऽवरे ततास्ततामहा इह माऽवत । अस्मिन्ब्रह्मन्नस्मिन्क्षत्रेऽस्यामाशि० पितृभ्यः पितामहेभ्यः परेभ्योऽवरेभ्यस्ततेभ्यस्ततामहेभ्य इदं० । ततो यज्ञोपवीती । अत्र उपस्पृशेत् । पितॄणामुपस्थानपक्षेऽपि प्राचीनावीतं न स्वाहाकारत्यागौ ।

अथ राष्ट्रभृतः—ऋताषाडृतधामाऽग्निर्गन्धर्वः स इदं ब्रह्मक्षत्रं पातु तस्मै स्वाहा । अग्नये गन्धर्वायेदं० । तस्यौषधयोऽप्सरस ऊर्जो नाम ता इदं ब्रह्मक्षत्रं पान्तु ताभ्यः स्वाहा । ओषधीभ्योऽप्सरोभ्य ऊर्ग्भ्य इदं० । सꣳहितो विश्वसामा सूर्यो गन्धर्वः स०पातु तस्मै स्वाहा । सूर्याय गन्धर्वायेदं० । तस्य मरीचयोऽप्सरस आयुवो नाम ता इदं ब्रह्मक्षत्रं पान्तु ताभ्यः स्वाहा । मरीचिभ्योऽप्सरोभ्य आयुभ्य इदं० । सुषुम्नः सूर्यरश्मिश्चन्द्रमा गन्धर्वः स इदं० तस्मै स्वाहा । चन्द्रमसे गन्धर्वायेदं० । तस्य नक्षत्राण्यप्सरसो वेकुरयो नाम ता इदं ब्रह्मक्षत्रं पान्तु ताभ्यः स्वाहा । नक्षत्रेभ्योऽप्सरोभ्यो वेकुरिभ्य इदं० । भुज्युः सुपर्णो यज्ञो गन्धर्वः स इदं ब्रह्म० तस्मै स्वाहा । भु०सु० यज्ञाय गन्धर्वायेदं० । तस्य दक्षिणा अप्सरसः स्तवा नाम ता इदं० ताभ्यः स्वाहा । दक्षिणाभ्योऽप्सरोभ्यः स्तवाभ्य इदं० । प्रजापतिर्विश्वकर्मा मनो गन्धर्वः स०तस्मै स्वाहा । प्रजापतये विश्वकर्मणे मनसे गन्धर्वायेदं० । तस्यर्क्सामान्यप्सरसो वह्नयो नाम ता इदं ब्र०ताभ्यः स्वाहा । ऋक्सामेभ्योऽप्सरोभ्यो वह्निभ्यो इ० । ॐ इषिरो विश्व०र्वः स० । इषिराय विश्व० व्यचसे वाताय गन्धर्वायेदं० । तस्यापोऽप्सरसो मुदा नाम ता इदं० ताभ्यः स्वाहा । अद्भ्योऽप्सरोभ्यो मुदाभ्य इदं० । भुवनस्य पते यस्य त उपरि गृहा इह च । स नो रास्वाज्यानिꣳ रायस्पोषꣳ सुवीर्यꣳ संवत्सरीणाꣳ स्वस्तिꣳ स्वाहा । भुवनस्य पतय इदं० । परमेष्ठ्यधिपतिर्मृत्युर्गन्धर्वः स इदं० तस्मै स्वाहा । मृत्यवे गन्धर्वायेदं० । तस्य विश्वमप्सरसो भुवो नाम ता इदं० ताभ्यः स्वाहा । विश्वस्मा अप्सरोभ्यो भूभ्य इदं० । सुक्षितिः सुभूतिर्भद्रकृत्सुवर्वा०तस्मै स्वाहा । पर्जन्याय गन्धर्वायेदं० । तस्य विद्युतोऽप्सरसो रुचो नाम ता इदं० ताभ्यः स्वाहा । विद्युद्भ्योऽप्सरोभ्यो रुग्भ्य इदं० । दूरेहेतिरमृडयो मृत्युर्गन्धर्वः स इदं० तस्मै स्वाहा । अदृडाय मृत्यवे गन्धर्वायेदं० । तस्य प्रजा अप्सरसो भीरुवो नाम ता इदं० ताभ्यः स्वाहा । प्रजाभ्योऽप्सरोभ्यो भीरुभ्य इदं० । चारुः कृपणकाशी कामो गन्धर्वः स इदं० कामाय गन्धर्वायेदं० । तस्याऽऽधयोऽप्सरसः शोचयन्तीर्नाम ता इदं० ताभ्यः स्वाहा । आधिभ्योऽप्सरोभ्यः शोचयन्तीभ्य इदं० । स नो भुवनस्य पते० इह च । उरुब्रह्मणेऽस्मै क्षत्राय महि शर्म यच्छ स्वाहा । भुवनस्य पतय इदं० । एते जयाद्युपहोमा वैकल्पिकाः ।

यदस्य कर्मणोऽत्यरीरिचं यद्वा न्यूनमिहाकरम् । अग्निष्टत्स्विष्टकृद्-

द्यान्सर्वं स्विष्टं सुहुतं करोतु मे । अग्नये स्विष्टकृते सुहुतहुते सर्वहुत आहुतीनां कामानां समर्धयित्रे स्वाहा । इत्युत्तरार्धपूर्वार्धे पूर्वाहुतितः किंचिद्भूयसीमाहुतिं जुहोति । अग्नये स्विष्टकृत इदं० । तत इध्मसंनहन-शुल्वं विस्रस्याद्भिरभ्युक्ष्याग्नौ प्रहृत्य दर्व्या परिधीन्परिधानक्रमेणा-भ्यक्त्वा बर्हिभ्यः परिस्तरणेभ्यश्च कांश्चिद्दर्भानादाय दर्व्यामग्राण्यनक्ति मध्यानि मूलानि चाऽऽज्यस्थाल्याम् । एवं द्वितीयम् । तृतीयं तु मूलानि मध्यानि चाऽऽज्यस्थाल्यामग्राणि दर्व्यामिति । एवमक्त्वा ततश्चैकं तृणमवस्थाप्यान्यानि दक्षिणोत्तराभ्यां पाणिभ्यामुत्तरपरिधिसंधिमनुप्रवे-श्यान्तत आयतने पर्यावर्तयति । ततस्त्रिरूर्ध्वमायतन एवाञ्जलिना नीत्वाऽग्नौ क्षिपति । ततः स्थापिततृणं प्रहृत्य त्रिरद्भुरस्याऽन्ववदिश्य घ्राणे युगपत्संस्पृश्याप उपस्पृश्य तथैव चक्षुषी संस्पृश्याप उपस्पृश्य पृथिवीं संस्पृशेत् । ततो मध्यमं परिधिमग्नौ प्रहृत्येतरौ परिधी द्वाभ्यां हस्ताभ्यां सहैव प्रहरति ।

ततः प्रायश्चित्तहोमः—कृतस्य कर्मणो न्यूनातिरिक्तदोषपरिहारार्थं प्राय-श्चित्तहोमं करिष्य इति संकल्प्य जुहुयात् । ॐ अनाज्ञातं यदाज्ञात यज्ञस्य क्रियते मिथु । अग्ने तदस्य कल्पय त्वꣳ हि वेत्थ यथातथꣳ स्वाहा । अग्नय इदं० । पुरुषसंमितो यज्ञो यज्ञः पुरुषसंमितः । अग्ने तदस्य कल्पय त्वꣳ हि वेत्थ यथातथꣳ स्वाहा । अग्नय इदं० । यत्पाकत्रा मनसा दीनदक्षा न यज्ञस्य मन्वते मर्तासः । अग्निष्टद्धोता क्रतुविद्विजानन्यजिष्ठो देवाꣳ ऋतुशो यजाति स्वाहा । अग्नय इदं० । त्वं नो अग्ने वरुणस्य० स्मत्स्वाहा । अग्नये वरु-णाय चेदं० । स त्वं नो अ० एधि स्वाहा । अग्नये वरुणाय चेदं० । यत इन्द्र भ० जहि स्वाहा । इन्द्राय मघवत इदं० । स्वस्तिदा वि०करः स्वाहा । इन्द्राय वृत्रघ्न इदं० त्र्यम्बकं य०तात्स्वाहा । त्र्यम्बकायेदं० । इदं विष्णु० सुरे स्वाहा । विष्णव इदं० । भूः स्वाहा । अग्नय इदं० । भुवः स्वाहा । वायव इदं० । सुवः स्वा० । सूर्यायेदं० । महः स्वा० । बृह-स्पतय इदं० । जनः स्वा० वरुणायेदं० । तपः स्वा० इन्द्रायेदं० । सत्यꣳ स्वा० विश्वेभ्यो देवेभ्य इदं० । वसुभ्यो रुद्रेभ्य आदित्येभ्यः स्वा० वसुभ्यो रुद्रेभ्य० त्येभ्यः सꣳस्रावभागेभ्य इदं० । इति परिधिषु संस्रावाज्यं जुहोति ।

तत उत्तरपरिषेकः—अदितेऽन्वमꣳस्थाः । अनुमतेऽन्वमꣳस्थाः । सरस्वतेऽन्वमꣳस्थाः । देव सवितः प्रासावीरिति पूर्ववत्परिषेकं कृत्वा

ततोऽग्रेणाग्निं प्रणीताः पर्याहृत्यापरेणाग्निं निधाय प्रागादिक्रमेण दिक्-चतुष्टय ऊर्ध्वमधश्च जलमुत्सिच्य भूमावशिष्टं जलं निनीयाऽऽत्मानं पत्नीं च मार्जयित्वा मुखं संमृजीत । ततो ब्रह्मणे हिरण्यं गां वा पूर्ण-पात्रं वा दक्षिणां दद्यात् । ब्रह्मा स्वस्तीत्युक्त्वा यथेतं प्रतिनिष्क्रामति । एते चेध्मसंनहनादयो धर्मा आघारवत्सु दर्विहोमेषु गृह्यान्तरे दृष्टाः कृताकृताः । केचिद्वास्तुबलिकर्मानन्तरमेतान्धर्माननुतिष्ठन्ति । ततः संस्थाजपेनोपतिष्ठते—

यज्ञ नमस्ते यज्ञ नमो नमश्च ते यज्ञ । शिवेन मे संतिष्ठस्व स्योनेन मे संतिष्ठस्व सुभूतेन मे संतिष्ठस्व ब्रह्मवर्चसेन मे संतिष्ठस्व यज्ञस्यर्धि-मनु संतिष्ठस्वोप ते यज्ञ नम उप ते नम उप ते नमः । अग्ने नय० विधेम ।

इत्यग्न्यायतनात्पदङ्गुलं स्थलं विहायाग्निं तत्रानुलक्षीकृत्य वायव्यां दिशि पूजयेत् । अग्निपूजन आरक्तगन्धपुष्पाक्षतान्वर्जयेत् । मा नस्तोके त०मते । इत्यग्नेर्विभूतिं ललाटे धृत्वा—

श्रद्धां मेधां यशः प्रज्ञां विद्यां बुद्धिं श्रियं बलम् ।
आयुष्यं तेज आरोग्यं देहि मे हव्यवाहन ॥
इत्यग्निं संप्रार्थ्य नमस्कुर्यादिति ।

अमुमुपनयनोपदिष्टहोमविधिमन्यत्राप्यतिदिशति—सर्वदर्विहोमाणामेष कल्प इति । जुहोतिचोदितेषु दर्विहोमेषु सर्वेषु एष उद्धननादिः प्रसाध-नीदेवीहोमान्तोऽनुक्रान्तः कल्पो विधिर्भवतीत्यर्थः । तथा चाऽऽघारवत्सु दर्विहोमेष्वेवायं विधिः फलति । आपूर्विकेषु तु यावदर्थं द्रव्यसंस्कारः परिस्तरणपरिषेकौ यावदुक्ता आहुतयोऽन्यानि च वैशेषिकाणि कर्मा-णीति बौधायनोक्तविधिरस्वेति तात्पर्यम् । दृष्टं च तन्त्रद्वयं तत्तत्कर्म-विशेषे तत्तत्सूत्रोक्त्या शास्त्रान्तरोक्त्याऽऽचाराच्च व्यवस्थितं ज्ञेयम् ।

इत्यग्निमुखप्रयोगः ।

---

अथाऽऽपूर्विकतन्त्रेण त्रिवृदन्नहोमप्रयोगः ।

कर्ताऽमुककर्माङ्गं त्रिवृदन्नहोमं पुण्याहवाचनं च करिष्य इति संकल्प्य समिद्द्वयमादाय श्रद्ध एहीत्यादि प्राणायामान्तं कृत्वा त्रिवृदन्नहोमस-

## अथ ग्रहमखः ।

स च नित्यनैमित्तिककाम्यभेदेन त्रिविधः । शुभवारत्रिजन्मनक्षत्रायनविषुवोपरागादिषु नित्यः । उपनयनादिकर्मारम्भेषु नैमित्तिकः । विपदपगमसंपदादिकामनासु काम्यः । तत्र काम्ये मण्डपकुण्डा(कुण्डमण्डपा)दिकं नित्यम् । नित्यनैमित्तिकयोरनित्यम् । यदा स्थण्डिलं तदा वेदिरेव न मण्डपः । कुण्डाभावे स्थण्डिले होमः कार्यः ।

अथ प्रयोगः—कर्ता स्नात्वा नित्यकर्म निर्वर्त्य मौहूर्तिकोक्ते काल आचम्य प्राणानायम्य देशकालौ संकीर्त्य करिष्यमाणामुककर्मणि ग्रहानुकूल्यसिद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थं ग्रहयज्ञं करिष्य इति नैमित्तिके संकल्पः । नित्ये ग्रहयज्ञं करिष्य इति, काम्ये तत्तत्कामनया ग्रहयज्ञं करिष्य इति संकल्पः । संभारसंभरणं संकल्पात्पूर्वं कर्तव्यम् । काम्ये यथोक्तवस्तून्येव । अन्यत्र प्रतिनिधिरपि । ततो गणपतिपूजनादि नान्दीश्राद्धान्तं कृत्वाऽऽचार्यादिवरणं कुर्यात् । अमुकप्रवरान्वितामुकगोत्रोत्पन्नामुकशाखाध्यायी, अमुकप्रवरान्वितामुकगोत्रोत्पन्नममुकशाखाध्यायिनममुकशर्माणमस्मिन्ग्रहयज्ञ आचार्यत्वेन त्वां वृण इति विधिज्ञं ब्राह्मणं पाणिं संस्पृश्य वृणुयात् तद्धस्ते फलादि दद्यादित्याचारः । ततस्तं संपूज्य प्रार्थयेत्—

आचार्यस्तु यथा स्वर्गे शक्रादीनां बृहस्पतिः ।
तथा त्वं मम यज्ञेऽस्मिन्नाचार्यो भव सुव्रत ॥ इति ॥

ततो ब्रह्माणं वृत्वा संपूज्य

यथा चतुर्मुखो ब्रह्मा स्वर्गे लोके पितामहः ।
तथा त्वं मम यज्ञेऽस्मिन्ब्रह्मा भव द्विजोत्तम ॥

इति तं प्रार्थयेत् ।

ततः सदस्यं वृत्वा संपूज्य

भगवन्सर्वधर्मज्ञ सर्वधर्मभृतां वर ।
वितते मम यज्ञेऽस्मिन्सदस्यो भव सुव्रत ॥

इति तं प्रार्थयेत् ।

ततो होमानुसारेणर्त्विजो वृत्वा संपूज्य

अस्य यागस्य निष्पत्तौ भवन्तोऽभ्यर्थिता मया ।

सुप्रसन्नैः प्रकर्तव्यं कर्मेदं विधिपूर्वकम् ॥

इति तान्प्रार्थयेत् ।

अथाऽऽचार्योऽग्न्यायतनस्य पश्चादुपविश्याऽऽचम्य प्राणानायम्य

यदत्र संस्थितं भूत स्थानमाश्रित्य सर्वदा ।
स्थानं त्यक्त्वा तु तत्सर्वं यत्रस्थं तत्र गच्छतु ॥
अपक्रामन्तु भूतानि पिशाचाः सर्वतोदिशम् ।
सर्वेषामविरोधेन ब्रह्मकर्म समारभे ॥

इति प्राग दिक्रमण सर्वत. सर्षपान्विकीर्य, ॐ शु पीवो हव्या मरुतः शु० पावका. । ३० ॥. इन्द्रमरुतौ इत्यनेन । इति पञ्चगव्येन सर्वतो भूमिं प्रोक्ष्य ॐ आपो हि ष्ठा मयो० यथा च न । इति शुद्धोदकेन सर्वतो भूमिं प्रोक्ष्य । ॐ स्वस्ति न इन्द्रो वृद्ध० दधातु । इति जपित्वा, देवा आयान्तु यातुधाना अपयान्तु विष्णो देवयजनं रक्षस्वेत्यग्न्यायतनात्पश्चाद्भूमिमभिमृशेत् ।

तत आयतन कुम्भमुष्टिना समजय यथोक्तलक्षणकुण्डसत्त्वे ब्रह्मविष्णु रुद्राख्या मेखलादेवता आवाह्य गौरीं योनिदेवतामावाह्य सम्पूज्याऽऽय तन समन्ताद्रङ्गवल्लिकया भूषयित्वा गोमयेन परिलिप्योद्धननादि कृत्वा वरदनामानं मथितं श्रोत्रियागाराद्वाहृतं वाऽग्निं प्रतिष्ठाप्य चत्वारि शृङ्गेति ध्यायेत् । पुष्टिकामनायां तु बलवर्धननामानमग्निं । ततो यथोक्त लक्षणं ग्रहपीठं विधाय तत्र सति सम्भवे सर्वतोभद्रं विरच्य तत्र ब्रह्मा दिदेवतास्थापन पूजनं च कुर्यात् । सर्वतोभद्रासम्भवे तु सूर्यादिदेवताना मेव स्थापनं कुर्यात् । मण्डलदेवतास्थापनपक्षे सूर्यादिदेवतान्वाधानो त्तरमन्वाधानं कृत्वा प्रत्येकमेकैकाहुतिं जुहुयात् । मेषांन्तीनां नमःशब्दर हितं प्रणवादिस्वाहाकारान्तैर्नामभिर्होमः ।

तत्र मन्त्रा —ॐ ब्रह्म जज्ञान० विव । ब्रह्मणे नमो ब्रह्माणमावाह यामि, इति पीठमध्ये ब्रह्माणम् । ॐ आप्यायस्व० गथे । सोमाय० सोममा० इत्युत्तरे सोमम् । ॐ अभि त्वा० महे । ईशानाय० ईशा नमा० इत्यैशान्यामीशानम् । ॐ इन्द्र वो० वल० । इन्द्राय० इन्द्रमा० पूर्व इन्द्रम् । ॐ अग्निं दूतं० क्रतुम् । अग्नय० आग्नमा० इत्याग्नेय्याम ग्निम् । ॐ यमाय मा क्रन । यमाय० यममा० इति दक्षिणे यमम् ।

ॐ देवीम० चष्टे । निर्ऋतये० निर्ऋतिमा० इति नैर्ऋत्यां निर्ऋतिम् ।
ॐ तत्त्वा या० मोषीः । वरुणाय० वरुणमा० इति पश्चिमे वरुणम् ।
ॐ वायो शु० जसा । वायवे० वायुमा० इति वायव्यां वायुम् ।
ॐ अष्टौ देवा० स्वाति । अष्टवसुभ्यो० अष्टवसूना० इति वायु-
सोममध्येऽष्टौ वसून् ।ॐ नीलग्री० श्रिताः। तेषा४० न्मसि । एकादश-
रुद्रेभ्यो० एकादश रुद्राना० इति सोमेशानयोर्मध्य एकादश रुद्रान् ।
ॐ स्याम्र क्ष० पृथे। द्वादशादित्येभ्यो० द्वादशाऽऽदित्याना०इतीशानेन्द्र-
योर्मध्ये द्वादशाऽऽदित्यान्। ॐ या वां० सतम्। अश्विभ्यां० अश्विना०
इतीन्द्राग्न्योर्मध्येऽश्विनौ । ॐ ओमास० सुतम् । विश्वेभ्यो देवेभ्यो०
विश्वान्देवाना० इत्यग्नियमयोर्मध्ये विश्वान्देवान् । ॐ अभि त्यं देव५०
सुवः । सप्तयक्षेभ्यो० सप्त यक्षाना० इति यमनिर्ऋत्योर्मध्ये सप्त यक्षान्।
ॐ आऽयं गौः० न्सुवः । सर्पेभ्यो० सर्पाना० इति निर्ऋतिवरुणयो-
र्मध्ये सर्पान् । ॐ ऋताषाडृत० पान्तु। गन्धर्वाप्सरोभ्यो० गन्धर्वा-
प्सरस आ० इति वरुणवाय्वोर्मध्ये गन्धर्वाप्सरसः । ॐ यदक्र०
जातं तेऽर्वन् । स्कन्दाय० स्कन्दमा० इति ब्रह्मसोममध्ये स्कन्दम् ।
ॐ तत्पुरु० हे रुद्र० नन्दिः प्रचोदयात्। नन्दीश्वराय० नन्दीश्व-
रमा० इति स्कन्दस्योत्तरतो नन्दीश्वरम्। ॐ यत्ते गा० मस्तु। शूलाय०
शूलमा० इति नन्दीश्वरस्योत्तरतः शूलम् । ॐ कार्षिर० पां भृम्रम् ।
महाकालाय० महाकालमा० इति शूलस्योत्तरतो महाकालम्। ॐ
द्रुविभी० यद्वपः । दक्षाय० दक्षमा० इति ब्रह्मेशानयोर्मध्ये दक्षम् ।
ॐ तामग्नि० से नमः । दुर्गायै० दुर्गामा० इति ब्रह्मेन्द्रयोर्मध्ये दुर्गाम् ।
ॐ इदं विष्णु० सुरे। विष्णवे न० विष्णुमा० इति दुर्गायाः पुरतो
विष्णुम् । ॐ उशीरक्षा० थेपु । स्वधायै० स्वधामा० इति ब्रह्माग्न्यो-
र्मध्ये स्वधाम् । ॐ परं मृ० वीरान् । मृत्युरोगेभ्यो० मृत्युरोगाना०
इति ब्रह्मयमयोर्मध्ये मृत्युरोगान्।ॐ गणाना त्वा० सादनम्। गणपतये०
गणपतिमा० इति ब्रह्मनिर्ऋत्योर्मध्ये गणपतिम् । ॐ शं नो देवी० तु
नः। अद्भ्यो० आ आ० इति ब्रह्मवरुणयोर्मध्येऽपः।ॐ मरुतो० जनः।
मरुद्भ्यो० मरुत आ० इति ब्रह्मवाय्वोर्मध्ये मरुतः । ॐ स्योना पृ०
प्रथाः । पृथिव्यै० पृथिवीमा० इति ब्रह्मणः पादमूले कर्णिकायाः पृथि-
वीम् । ॐ इमं मे ग० मया। गङ्गादिनदीभ्यो० गङ्गादिनदी० इति तत्रैव

गङ्गादिनदी.। ॐ धाम्नो धाम्नो० अग्नि १७० पुरु। सप्तसागरेभ्यो नमः सप्त सागराना० इति तत्रैव सप्त सागरान्। ॐ मेरवे मेरुमा इति तदुपरि मेरुम्।

तत्र आयुधानि—ॐ गदायै० गदामा० सोमस्योत्तरे गदाम्। ॐ त्रिशूलाय० त्रिशूलमा० ईशानस्यैशान्यां त्रिशूलम्। ॐ वज्राय० वज्रमा० इन्द्रस्य पूर्वे वज्रम्। ॐ शक्तये० शक्तिमा० अग्नेराग्नेय्यां शक्तिम्। ॐ दण्डाय० दण्डमा० यमस्य दक्षिणे दण्डम्। ॐ खड्गाय० खड्गमा० निर्ऋतेर्नैर्ऋत्यां खड्गम्। ॐ पाशाय० पाशमा० वरुणस्य पश्चिमे पाशम्। ॐ अङ्कुशाय० अङ्कुशमा० वायोर्वायव्यामङ्कुशम्। इत्यायुधानि।

ॐ गौतमाय० गौतममा० गदाया उत्तरे गौतमम्। ॐ भरद्वाजाय० भरद्वाजमा० त्रिशूलस्यैशान्यां भर०। ॐ विश्वामित्राय० विश्वामित्रमा० वज्रस्य पूर्वे विश्वा०। ॐ कश्यपाय० कश्यपमा० शक्तेराग्नेय्यां क०। ॐ जमदग्नये० जमदग्निमा० दण्डस्य दक्षिणे जम०। ॐ वसिष्ठाय० वसिष्ठमा० खड्गस्य नैर्ऋत्यां व०। ॐ अत्रये० अत्रिमा० पाशस्य पश्चिमेऽ०। ॐ अरुन्धत्यै० अरुन्धतीमा० अङ्कुशस्य वायव्यामरु०। इत्यृषीन्

ॐ ऐन्द्र्यै० ऐन्द्रीमा० विश्वामित्रस्य पूर्वे ऐ०। ॐ कौमार्यै० कौमारीमा० कश्यपस्याऽऽग्नेय्यां कौ०। ॐ ब्राह्म्यै० ब्राह्मीमा० जमदग्नेर्दक्षिणे ब्रा०। ॐ वाराह्यै० वाराहीमा० वसिष्ठस्य नैर्ऋत्यां वा०। ॐ चामुण्डायै० चामुण्डामा० अत्रेः पश्चिमे चामु०। ॐ वैष्णव्यै० वैष्णवीमा० अरुन्धत्या वायव्यां वैष्ण०। ॐ माहेश्वर्यै० माहेश्वरीमा० गौतमस्योत्तरे माहे०। ॐ वैनायक्यै० वैनायकीमा० भरद्वाजस्यैशान्यां वैना०। इत्यष्ट शक्तीः।

एता देवता आवाह्य। ॐ मनो ज० इति प्रतिष्ठाप्य नाम्दानुक्रमेण पदार्थानुक्रमेण वा सर्वा देवताः पूजयेत्। ततस्तदुपरि वेदिपरिमितं श्लक्ष्णं क्षौमं वस्त्रं प्रसार्य वस्त्रस्य समन्तादवधर्यं रेखा लिखित्वा तत्र पञ्चाङ्गुला-तरालान्तः समन्ताद्रेखा लिखित्वाऽवशिष्टं चतुरश्रं प्रत्युदग्रं नव। विभज्य तेषु न [व]कोष्ठेषु मध्ये रक्तवर्णचूर्णेन सूर्यस्य वृत्तं पौरस्त्येऽग्नेय्यां श्वेतचूर्णेन चतुरश्रं सोमस्य पीठं दक्षिणस्यां रक्तवर्णं

चूर्णेन त्रिकोणं भौमस्य पीठमैशान्यां पीतचूर्णेन बाणाकारं बुधस्य पीठमुत्तरस्यां पीतचूर्णेन दीर्घचतुरस्रं गुरोः पीठं पूर्वस्यां श्वेतचूर्णेन पञ्चकोणं शुक्रस्य पीठं पश्चिमायां कृष्णचूर्णेन द्व्यङ्गुलक्षेत्रफलं षडङ्गुलक्षेत्रफलं वा शनेः पीठं नैर्ऋत्यां नीलचूर्णेन शूर्पाकारं राहोः पीठं वायव्यां नानावर्णेन चूर्णेन ध्वजाकारं केतोः पीठमेवं पीठानि विधायाग्न्युत्तारणं कुर्यात्।

ॐ अश्मन्नू० स्वाहेति। इत्यनुवाकेन प्रतिमानामग्न्युत्तारणं कृत्वा पञ्चामृतैः शुद्धोदकेन च प्रक्षाल्य नत्वाद्विगाननया ग्रहप्रतिमाः स्थापयित्वा सूर्यप्रतिमायाः कपोलौ स्पृष्ट्वा प्राणप्रतिष्ठां विदध्यात्।

अस्य श्रीप्राणप्रतिष्ठामन्त्रस्य ब्रह्माविष्णुमहेश्वरा ऋषयः। ऋग्यजुःसामानि छन्दांसि। चिद्रूपा परा प्राणशक्तिर्देवता। आं बीजम्। ह्रीं शक्तिः। क्रों कीलकम्। सूर्यप्रतिमायां प्राणप्रतिष्ठापने वि०। ॐ आं ह्रीं क्रों यं रं लं वं शं षं सं हों हंसः सोऽहं सूर्यप्रतिमायाः प्राणा इह प्राणाः। ॐ आं ह्रीं क्रों यं रं लं वं शं षं सं हों हंसः सोऽहं सूर्यप्रतिमाया जीव इह स्थितः। ॐ आं ह्रीं क्रों यं० सर्वेन्द्रियाणि वाङ्मनश्चक्षुःश्रोत्रत्वग्जिह्वाघ्राणपाणिपादपायूपस्था इहैवाऽऽगत्य स्वस्तये सुखं चिरं तिष्ठन्तु स्वाहा, इति जपेत्।

अस्यै प्राणाः प्रतिष्ठन्तु अस्यै प्राणाः क्षरन्तु च।
अस्यै जीवत्वमर्चायै स्वाहा।

इति मन्त्रमुक्त्वा प्रतिमां सजीवां ध्यायेत्। एवं प्राणप्रतिष्ठां विधाय प्रतिमां पञ्चामृतैः संस्थाप्य शुद्धोदकेन स्नापयेत्।

तत ॐ उदु त्यं० सूर्यमिति मन्त्रेण सुवर्णशलाकया दर्भशलाकया वा गोघृतेन प्रतिमाया दक्षवामनेत्रे मन्त्रावृत्त्या क्रमेणोन्मील्य, ॐ अञ्जन्ति त्वाम० पश्ये। इति मन्त्रावृत्त्या क्रमेण मधुना नेत्रे अभ्यज्योपहारं निवेदयेत्। नेत्रोन्मीलनमारभ्य प्रतिमायाः पुरतो न तिष्ठेत्। एवं सोमादिप्रतिमास्वपि। अथवा सहैव सर्वासां सूर्यादिप्रतिमानामृहन कुर्यात्। ततो ग्रहानावाहयेत्।

ॐ आ सत्येन० श्यन्। भूर्भुवः सुवः, भगवन्ग्रहाधिपते किरीटिन्सप्ताश्वरथारूढ कलिङ्गदेशोद्भव काश्यपसगोत्र सूर्येहाऽऽगच्छेति मध्ये प्राङ्मुख्यां ताम्रप्रतिमायां रक्ताक्षतैः सूर्यमावाहयामीति स्थापयेत्।

ॐ आप्यायस्व० गथे । भूर्भुवः स्वः, भगवन्नक्षत्राधिपते किरीटिन्दशाश्वरथारूढ यमुनातीरोद्भवा ऽत्रयसगोत्र सोमेहाऽऽगच्छेत्याग्नेय्यां प्रत्यङ्मुख्यां रजतस्य वा स्फटिकस्य प्रतिमायां श्वेताक्षतैः सोममावाहयेहाधितिष्ठेति स्थापयेत् ।

ॐ अग्निर्मूर्धा० न्यात । भूर्भुवः स्वः, भगवन्नग्न्याकृते किरीटिन्रक्तमेषरथारूढावन्तिकासमुद्भव भारद्वाजसगोत्राङ्गारकेहाऽऽगच्छेति दक्षिणे दक्षिणामुख्यां रक्तचन्दनप्रतिमायां रक्ताक्षतैरङ्गारकमावाहयेहाधितिष्ठेति स्थाप० ।

ॐ उद्बुध्यस्वा० मेनम् । भूर्भुवः स्वः, भगवन्सौम्याकृते किरीटिन्पीतसिंहरथारूढ मगधदेशोद्भवाऽऽत्रेयसगोत्र बुधेहाऽऽगच्छेत्यैशान्यामुदङ्मुख्यां सुवर्णप्रतिमायां पीताक्षतैर्बुधमावाहयेहाधितिष्ठेति स्थापयेत् ।

ॐ बृहस्पते अति० चित्रम् । भूर्भुवः स्वः, भगवन्सर्वदेवताचार्य किरीटिन्पीताश्वरथारूढ सिन्धुदेशोद्भवाऽऽङ्गिरसगोत्र बृहस्पत इहाऽऽगच्छोत्तर उदङ्मुख्यां सुवर्णप्रतिमायां पीताक्षतैर्बृहस्पतिमावाहयेहाधितिष्ठेति स्थाप० ।

ॐ शुक्र ते अ० रस्तु । भूर्भुवः स्वः, भगवन्सर्वदैत्याचार्य किरीटिञ्शुक्लाश्वरथारूढ भोजकटदेशोद्भव भार्गवसगोत्र शुक्रेहाऽऽगच्छेति पूर्वे प्राङ्मुख्यां रजतप्रतिमायां शुक्लाक्षतैः शुक्रमावाहयेहाधितिष्ठेति स्थाप० ।

ॐ शं नो देवीर० न० । भूर्भुवः स्वः, भगवन्क्रूराकृते किरीटिन्नीलगृध्ररथारूढ सौराष्ट्रदेशोद्भव काश्यपसगोत्र शनैश्चरेहाऽऽगच्छेति पश्चिमे प्रत्यङ्मुख्यां लोहप्रतिमायां नीलाक्षतैः शनैश्चरमावाहयेहाधितिष्ठेति स्था० ।

ॐ कया न० वृता । भूर्भुवः स्वः, भगवन्क्रूराकृते किरीटिन्कृष्णसिंहरथारूढ राठिनापुरोद्भव पैठीनसिगोत्र राहो इहाऽऽगच्छेति दक्षिणामुख्यां सीसप्रतिमायां कृष्णाक्षतै राहुमावाहयेहाधितिष्ठेति स्थाप० ।

ॐ केतुं कृण्व० र्यथाः । भूर्भुवः स्वः, भगवन्क्रूराकृते किरीटिञ्चित्रकपोतरथारूढान्तर्वेदिसमुद्भव जैमिनिसगोत्र केतो इहाऽऽगच्छेति दक्षिणामुख्यां कांस्यप्रतिमायां चित्राक्षतैः केतुमावाहयेहाधितिष्ठेति स्थाप० ।

यथोक्तप्रतिमालाभे सर्वाः सुवर्णमय्यः । तदभावे तण्डुलपुञ्जादौ । यथोक्ताक्षतालाभे सर्वाः श्वेता एव । सर्वे ग्रहा आदित्याभिमुखा एव वा स्थापनीयाः ।

अथाधिदेवताः । ॐ त्र्यम्बकं यजा० ता० । भू० ईश्वराय० ईश्वरमावाहयामीति सूर्यदक्षिणपार्श्वे ईश्वरम् । ॐ गौरीर्मिमा० व्योमन् । भू० उमायै० उमामा० इति सोमदक्षिणपार्श्वे उमाम् । ॐ यदक्रन्दः० महि जातं तेऽर्वन् । भू० स्कन्दाय० स्कन्दमा० इत्यङ्गारकदक्षिणपार्श्वे स्कन्दम् । ॐ विष्णोरराट० स्वा । विष्णवे० विष्णुमा० इति बुधदक्षिणपार्श्वे विष्णुम् । ॐ ब्रह्म यज्ञा० वन् । भू० ब्रह्मणे० ब्रह्माणमा० इति बृहस्पतिदक्षिणपार्श्वे ब्रह्माणम् ॐ सजोषा इ०न्द्रो नः । भू० इन्द्राय० इन्द्रमा० इति शुक्रदक्षिणपार्श्वे इन्द्रम् । ॐ इमं यम० यस्व । भू० यमाय० यममा० इति शनिपार्श्वे यमम् । ॐ कार्षिरस्य० दृभ्रम् । भू० कालाय० कालमा० इति राहुदक्षिणपार्श्वे कालम् । ॐ चित्रावसो स्व० शीय । भू० चित्रगुप्ताय० चित्रगुप्तमा० इति केतुदक्षिणपार्श्वे चित्रगुप्तम् । इत्यधिदेवताः सुवर्णप्रतिमास्वक्षतपुञ्जेषु वाऽऽवाहयेत् ।

ततः प्रत्यधिदेवताः । ॐ अग्निं दूतं वृ० क्रतुम् । भू० अग्नये० अग्निमा० इति सूर्योत्तरपार्श्वेऽग्निम् । ॐ अप्सु मे सो० पजीः । भू० अद्भ्यो० अप आवा० इति सोमोत्तरपार्श्वेऽपः । ॐ स्योना पृ० प्रथाः । भू० भूम्यै० भूमिमा० इत्यङ्गारकोत्तरपार्श्वे भूमिम् । ॐ इदं वि० सुरे । भू० विष्णवे० विष्णुमा० इति बुधोत्तरपार्श्वे विष्णुम् । ॐ इन्द्र वो वि० पलः । भू० इन्द्राय० इन्द्रमा० इति बृहस्पत्युत्तरपार्श्वे इन्द्रम् । ॐ इन्द्राणी० पतिः । भू० इन्द्राण्यै० इन्द्राणीमा० इति शुक्रोत्तरपार्श्वे इन्द्राणीम् । ॐ प्रजापते न० यीणाम् । भू० प्रजापतये० प्रजापतिमा० इति शनैश्चरोत्तरपार्श्वे प्रजापतिम् । ॐ आऽयं गौ० न्सुवः । भू० सर्पेभ्यो० सर्पाना० इति राहूत्तरपार्श्वे सर्पान् । ॐ ब्रह्म जज्ञा० विवः । भू० ब्रह्मणे० ब्रह्माणमा० इति केतूत्तरपार्श्वे ब्रह्माणम् । इति प्रत्यधिदेवताः सुवर्णप्रतिमास्वक्षतपुञ्जेषु वाऽऽवाहयेत् ।

अथ क्रतुसंरक्षणदेवताः । ॐ गणानां० दनम् । भू० महागणपतये महागणपतिमा० इति राहोरुत्तरतो गजाननम् । ॐ जातवेदसे सु० त्यग्निः । भू० दुर्गायै० दुर्गामा० इति शनेरुत्तरतो दुर्गाम् । ॐ वायो शतं० जसा ।

मू० वायवे० वायुमा० इति सूर्यस्योत्तरतो वायुम्। ॐ घृतं घृतपा० रिक्षाय। मू० आका० य० आकाशमा० इति राहोर्दक्षिणत आकाशम्। ॐ या वां कशा० क्षतम्। मू० अश्वि०भ्या० अश्विनावा० इति केतोर्दक्षिणतोऽश्विनौ। ॐ वास्तोष्पते० ष्पदे। मू० वास्तोष्पतये० वास्तोष्पतिमा० इति बृहस्पतेरुत्तरतो वास्तोष्पतिम्। ॐ क्षेत्रस्य ०प० दृशे। मू० क्षेत्रपालाय० क्षेत्रपालमा० इत्यङ्गारकस्योत्तरतः क्षेत्रपालम्।

अथ लोकपालाः। ॐ त्रातार मिन्द्रः। मू० इन्द्राय० इन्द्रमा० इति शुक्रमण्डलात्पुरत इन्द्रम्। ॐ अग्ने नय० येम। मू० अग्नये० अग्निमा० इति सोममण्डलादाग्नेय्यामग्निम्। ॐ इमं यम० यस्व। मू० यमाय० यममा० इत्यङ्गारकमण्डलाद्दक्षिणतो यमम्। ॐ असुन्वन्त० मस्तु। मू० निर्ऋतये० निर्ऋतिमा० इति राहुमण्डलान्नैर्ऋत्यां निर्ऋतिम्। ॐ तत्त्वा यामि० धीः। मू० वरुणाय० वरुणमा० इति शनिमण्डलात्पश्चिमतो वरुणम्। ॐ आ नो नियु० दा नः। मू० वायवे० वायुमा० इति केतुमण्डलाद्वायव्यां वायुम्। ॐ सं ते पयां० सि च। मू० सोमाय० सोममा० इति बृहस्पतिमण्डलादुत्तरतः सोमम्। ॐ अभि त्वा० महे। मू० ईशानाय० ई०नमा० इति बुधमण्डलादैशान्यामीशानम्। इति प्रतिमास्वक्षतपुञ्जेषु वा लोकपालानावाहयेत्।

ततो नये मनो० ताम्। इति सर्वा देवताः प्रतिष्ठाप्य काण्डानुसमयेन पदार्थानुसमयेन वा पूजयेत्। ग्रहाणां पूजने त्वयं विशेषः—दिवाकराय रक्तवस्त्ररक्तचन्दनरक्तकरवीरमल्लकीनिर्यासधूपघृतदीपगुडौदनद्राक्षाफलानि। चन्द्राय श्वेतवस्त्रश्वेतचन्दनश्वेतकरवीरघृतयुक्ताक्षतधूपघृतदीपघृतयुक्तपायसेक्षवः। भौमाय रक्तवस्त्ररक्तचन्दनरक्तोत्पल* सर्जरसधूपघृतदीपहविष्यारुपूपफलानि। बुधाय रक्तवस्त्रकुङ्कुमयुक्तचन्दनचम्पकपुष्पागुरुधूपघृतदीपक्षीरपायसनारिङ्गाणि। गुरवे रक्तवस्त्रकुङ्कुमयुक्तचन्दनागस्त्यपुष्प × लोबाणधूपघृतदीपदध्योदनजम्बीराणि। शुक्राय श्वेतवस्त्रश्वेतचन्दनातसीपुष्पबिल्वफलनिर्याससहितागुरुधूपघृतदीपघृतौदनबीजपूराणि। शनये कृष्णवस्त्रागुरुचन्दननीलाञ्जनीपुष्पगुग्गुलधूपघृतदीपतिलमाषमिश्रितान्नखर्जूरफलानि। राहवे कृष्णवस्त्रागुरुचन्दनसर्षपपुष्पलाक्षाधूपघृतदीपलवणमिश्रक्षीरयुक्तौदननारिकेराणि। केतवे

* आरक्तनी। × लोहनरी।

कृष्णवस्त्रागरुचन्दनशङ्खिनीपुष्पलाक्षाधूपघृतदीपारक्तपिष्टयुतलवणमि-
श्राजाक्षीरयुततिलतण्डुलमिश्रितौदनदाडिमफलानि । एतेषां यथोक्तप-
दार्थानामलाभे तु यथासंभवमुपचाराः कल्पनीयाः । अधिदेवताप्रत्य-
धिदेवतानां चैत एवोपचाराः । गणपत्यादिषु तु श्वेतमेव चन्दनं शतप-
त्रादीनि पुष्पाणि, तदभावे श्वेतपुष्पम् । धूपः स एव । गोघृतदीपो घृतौद-
ननैवेद्यमिति ।

ततः पीठादीशान्यामुदीच्यां वा मही द्यौरिति भूमिं स्पृष्ट्वा तत्र रङ्गव-
ल्लीपद्मं विधायौषधयः संवदन्त इति प्रस्थपरिमितधान्यपुञ्जं तत्र कृत्वा
तत्राऽऽजिघ्रेत्यनेन नवमव्रणं तैजसं मृन्मयं वा चन्दनेनानुलिप्तं दध्यक्षत-
पुष्पमालाद्यलंकृतं कुम्भं संस्थाप्येमं म इत्युदकेन पूरयित्वा, ॐ आप्या-
यस्व० गमे । इति कलशे क्षीरं प्रक्षिप्य, ॐ दधि० पत् । इति दधि ।
ॐ शुक्रम० जोऽसि । इत्याज्यम् । ॐ मधु वाता० तु नः । इति मधु । ॐ
स्वे क्रतुम० षोऽश्वि । इति शर्कराम् । ॐ तत्त० यात् । इति गोमूत्रम् ।
ॐ गन्धद्वारां० श्रियम् । इति गोमयम् । पुनराप्यायस्वेत्यादि-
भिस्त्रिभिः क्षीरदधिघृतानि कलशे प्रक्षिप्य नूतनाहृतचित्रपर्वतधातूंस्तूर्णीं
प्रक्षिप्य, उद्धृताऽसि० कृतम् । इति कलशेऽश्वशालागजशालावल्मी-
कनदीसंगमह्रदराजद्वारगोष्ठप्रदेशाहृताः सप्त मृत्तिकाः प्रक्षिप्य गन्धद्वारा-
मित्यादिभिर्गन्धादीन्रत्नान्तानुपचारान्प्रक्षिप्य, ॐ या जाता० सप्त च ।
इति कुष्ठमांसीहरिद्राद्वयमुराशैलेयचन्दनसटीचम्पकमुस्तात्मिका दशौ-
षधीः कलशे निक्षिपेत् । कुष्ठं कोष्ठम् । मांसी जटामांसी । मुरा मोरवेल
इ० म० । शैलेयं शिलारसः । सटी कचोरः । चम्पकस्त्वद्वृक्षत्वक् । मुस्ता
नागरमोथा, इति प्र० । एतासामभावे सुवर्णं कलशे प्रक्षिपेत् । ततो दूर्वा-
ऽऽम्रपल्लवैः कलशस्य मुखमाच्छाद्य, ॐ युवं वस्त्रा० चेथे । इति कलशं
वस्त्रयुग्मेन वेष्टयित्वा पूर्णा दर्वीति तण्डुलपूर्णेन पात्रेण कलशा-
ननं पिधाय तत्र कलशस्य मु० रुद्रे सप्त० रकाः । गङ्गे च यमुने०
जलेऽस्मिन्संनिधिं कुर्विति देवता आवाह्य संपूज्य वरुणं तत्त्वा यामी-
त्यावाह्य संपूजयेत् । ततः—

देवदानवसंवादे मथ्यमाने महोदधौ ।
उत्पन्नोऽसि तदा कुम्भ विधृतो विष्णुना स्वयम् ॥
त्वत्तोये सर्वतीर्थानि देवाः सर्वे त्वयि स्थिताः ।

त्वयि तिष्ठन्ति भूतानि त्वयि प्राणाः प्रतिष्ठिताः ॥
शिवः स्वयं त्वमेवासि विष्णुस्त्वं च प्रजापतिः ।
आदित्या वसवो रुद्रा विश्वे देवाः सपैतृकाः ॥
त्वयि तिष्ठन्ति सर्वेऽपि यतः कामफलप्रदाः ।
त्वत्प्रसादादिमं यज्ञं कर्तुमीहे जलोद्भव ॥
सान्निध्यं कुरु देवेश प्रसन्नो भव सर्वदा ॥ इति संप्रार्थयेत् ।

ततः—आपो हि ष्ठा० ३ हिरण्यवर्णाः० ४ पवमानः सु० १७ इति कुम्भमभिमृश्य जपेत् ।

अथान्वाधानम्—आचार्यः समित्त्रयमादाय श्रद्ध एहीत्यादि प्राणायामान्तं कृत्वा ग्रहयज्ञहोमकर्मणि या यक्ष्यमाणा देवतास्ता इत्यादि व्याहृत्यन्तमुक्त्वा गणपतिमेकया चर्वाहुत्याऽऽज्याहुत्या वा यक्ष्य इति वदेत् । वैशेषिकप्रधानहोमे—सूर्यं सोममङ्गारकं बुधं बृहस्पतिं शुक्रं शनैश्चरं राहुं केतुम्, अमुकसंख्याकाभिर्यथायथमर्कादिसमिद्भिश्चर्वाहुतिभिराज्याहुतिभिश्च, ईश्वरम्, उमां स्कन्दं नारायणं ब्रह्माणम्, इन्द्रं यमं कालं चित्रगुप्तम्, अग्निम्, अपः, भूमिं विष्णुम्, इन्द्रम्, इन्द्राणीं प्रजापतिं सर्पान्ब्रह्माणम्, अमुकसंख्याकाभिर्यथायथमर्कादिसमिद्भिश्चर्वाहुतिभिराज्याहुतिभिश्च, गणपतिं दुर्गां वायुम्, आकाशम्, अश्विनौ वास्तोष्पतिं क्षेत्रपालम्, इन्द्रम्, अग्निं यमं निर्ऋतिं वरुणं वायुं सोमम्, ईशानम्, अमुकसंख्याकाभिः पलाशसमिद्भिश्चर्वाहुतिभिराज्याहुतिभिश्च, मण्डलदेवतापक्षे मण्डलदेवताः प्रत्येकमेकैकाहुत्या यक्ष्ये । अधिप्रत्यधिदेवतानां प्रधानदशांशेनेतरदेवतानां विंशांशेन वा होमः कार्यः । पात्रासादनकाले दर्व्यासादनोत्तरं बहूनां चरूद्धरणपात्राणां स्रुवाणामाज्यस्थालीनां च बर्हीनामासादनं प्रोक्षणं च कार्यम् । स्थालीपाकधर्मेण चरुं श्रपयित्वा युगपदनेककर्तृकचर्वाज्यहोमनिर्वाहाय सर्वेषां स्रुवाणां संमार्गः कार्यः । स्रुवस्थाने दर्व्यो वा । तासामपि संमार्गः । पर्यग्निकरणकाले सर्वैर्होमद्रव्यैः सहाऽऽज्यस्य पर्यग्निकरणम् । ततः शृतं चरुमभिघार्योत्तरत उद्वास्य बर्हिष्यासाद्य तत्रैवाऽऽसादितेषु चरूद्धरणपात्रेषूद्धृत्य यथादैवतं विभज्य परिषेकादि व्याहृतिहोमान्तं कृत्वा गणानां त्वेति मन्त्रेण पलाशसमिच्चर्वाज्यानामेकैकाहुतिमाचार्य एव जुहुयात् । गणपतय इदं न ममेति यजमानस्त्यागं कुर्यात् ।

ततः—ऋत्विज उदङ्मुखाः प्राङ्मुखा वोपविश्य द्विराचम्य सावधानमनसो भवेयुः । ततो यजमान इमान्युपकल्पितानि हवनीयद्रव्याणि अन्वाधानोद्दिष्टसंख्यापर्याप्तानि या या यक्ष्यमाणा देवतास्ताभ्यस्ताभ्यो मया परित्यक्तानि न ममेति द्रव्यत्यागं कुर्यात् । तत ऋत्विज आवाहनोक्ततत्तन्मन्त्रैरन्वाधानोद्दिष्टैर्द्रव्यैरन्वाधानोक्तसंख्यं होमं कुर्युः । तत्र चरुसमिद्धोमकर्तारः स्वस्वदक्षिणहस्तं निधाय वामहस्तेन संमृज्य पुनर्निधाय दक्षिणहस्तेनैव स्वस्वसंमार्गदर्भप्रहरणं कुर्युः । अत्र चरुश्रपणासंभवे गृहसिद्धान्नेन देवपवित्रसंस्कारसंस्कृतेन होम इति संप्रदायः । अर्कः पलाशः खदिरोऽपामार्गः पिप्पल उदुम्बरः शमी दूर्वाः कुशा इति क्रमेण ग्रहसमिधः । एतासामलाभे पलाशसमिधः । तत्र समिदेकैका होतव्या । दूर्वाणां दर्भाणां च त्रिकं त्रिकम् । आज्यं दर्व्यैव होतव्यम् । अङ्गुष्ठाग्रेण चरुं ग्रासमात्रं निष्पीड्य संहताङ्गुलिनोत्तानेन दक्षिणेन हस्तेन होतव्यः । समाप्ते प्रधानहोम आचार्यो मण्डलदेवतापक्षे मण्डलदेवताहोमं कृत्वा स्थापितदेवतानामुत्तरपूजनं विधाय प्रसीदन्तु भवन्त इति तान्संप्रार्थयेत् । ततः सपत्नीको यजमानोऽग्नेः पश्चादुपविश्याग्न्यायतनस्य समन्ताद्दिक्षु सदीपमाषभक्तबलीन्दिक्पालेभ्यो दद्यात् । प्रतिबलिसमर्पणं साक्षतं जलं क्षिपेत् । ॐ त्रातार० त्विन्द्रः । इन्द्राय साङ्गाय सपरिवाराय सायुधाय सशक्तिकायामुं सदीपं माषभक्तबलिं समर्पयामीति साक्षतं जलं त्यक्त्वा भो इन्द्र बलिं भक्ष दिशं रक्ष मम सकुटुम्बस्याऽऽयुष्कर्ता क्षेमकर्ता शान्तिकर्ता पुष्टिकर्ता तुष्टिकर्ता निर्विघ्नकर्ता वरदो भव इति प्रार्थयेत् । ॐ अग्ने नय सु० प । अग्नये सा० यामि । भो अग्ने ब० भक्ष । ॐ इमं यम० स्व० यमाय सा० मि । भो यम ब० भक्ष । असुन्वत० मस्तु । निर्ऋतये सा० यामि । भो निर्ऋ० ब० । तत्त्वा या० मीः । वरुणाय सा० मि । भो वरुण० ब । आ नो० नः । वायवे सा० भो वायो० ब । सं ते० ष्व । सोमाय सा० मि । भोः सोम० ब० । अभि० हे । ईशानाय सा० भो ईशान० ब ।

ततो ग्रहादिबलयो ग्रहपीठसमीपे ॐ आस० न् । सूर्याय सा० सन्निकायेश्वराग्निरूपाधिदेवतापत्यधिदेवतासहितायेमं सदीपं माष० मि । भोः सूर्य, इमं बलिं गृहाण मम सकु० भवेति प्रार्थयेत् । ॐ आप्याय०

ये। सोमाय० काय, उमारूपाधिदे० व। ॐ अग्निर्मू० ति। अङ्गारकाय० काय स्कन्दभूमिरूपाधिदेवता० व। ॐ इद्बुध्य० मेतम्। बुधाय० नारायणविष्णुरूपाधिदे० व। ॐ बृहस्पते० त्रम्। बृहस्पतये० ब्रह्मेन्द्ररूपा० व। ॐ शुक्रं० रस्तु। शुक्राय० इन्द्रेन्द्राणीरूपा० व। ॐ शं नो० नः। शनै० यमप्रजापति रू० य। ॐ कया० ता। राहवे० कालसर्परूपा० य। ॐ केतुं० याः। केतवे० चित्रगुप्तब्रह्मरू० य।

ॐ गणानां० दनम्। गणपतये० सिद्धिबुद्धिसहितायेमं० भोः सिद्धिबुद्धिसहित गणपते०। ॐ जातवे० दुर्गायै० साङ्गायै स० यायै, इ० भो दुर्गे, इमं व० स्याऽऽयुष्कर्त्री क्षे० कर्त्री शा० त्री पु०त्री तु०त्री नि० त्री वरदा भव। ॐ वायो० सा। वायवे सा० मि। भो वायो० व। ॐ घृतं घृतपावा० क्षाय। आकाशाय सा० मि। भो आकाश, इमं०। ॐ या वा क० तम्। अश्विभ्यां साङ्गाभ्या स० भ्यां सा० भ्यां स० काभ्यामिमं स० मि। भो अश्विनाविमं बलिं गृहीतं मम स० युष्कर्तारौ क्षे० र्तारौ शा० रौ पु० रौ तु० रौ नि० र्तारौ वरदौ भवतम्। ॐ वास्तोष्पते० प्पदे। वास्तोष्पतये सा० मि। भो वा० ते, इमं० भवेति।

ततः क्षेत्रपालाय कुङ्कुमरक्तपुष्पादियुतं सदीपं सताम्बूलं सदक्षिणं माषभक्तबलिं दद्यात्। ॐ क्षेत्रस्य पति० दशे। क्षेत्रपालाय सा० काय भूतप्रेतडाकिनीशाकिनीब्रह्मराक्षसवेतालादिपरिवारयुतायेमं कुङ्कुमादियुतं माषभक्तबलिं सम० मि। भो भोः क्षेत्रपाल सपरिवारमं बलिं० भवेति।

ततः शूद्रेण बलिं बहिर्देशे प्रापयेत्। तस्य पृष्ठतः शान्तिपाठपूर्वकं स्वयं जलं सिञ्चन्नाचार्यः सपत्नीको गृहाद्बहिर्गत्वा प्रत्येत्य हस्तौ पादौ प्रक्षाल्याऽऽचम्याग्निसमीपमागत्य पुनराचम्य स्वायतन उपविशेत्। तत आचार्यो द्रव्यां स्रुवेण चतुर्गृहीतमाज्यं गृहीत्वा तदुपरि वस्त्रयुतं चन्दनादिभूषितं फलं निधाय, इदमाज्यमग्निरित्यनुसंधाय यजमानान्वारब्धस्तिष्ठन्पूर्णाहुतिं जुहुयात्।

ॐ समुद्रा० वयं नाम० २। ॐ चत्वारि शृ० वेश ३। ॐ मूर्धानं दि० याः। ॐ पुनस्त्वा० याः। ॐ पूर्णा द०। ॐ सप्त ते अ० घृतेन स्वाहेति यजमानोऽग्नये वैश्वानराय वसुरुद्रादित्येभ्यः शतक्रतवे सप्तवतेऽग्नये चेद-

मिति त्यजेत् । तत आचार्यः पूर्णाहुतिमुत्त० इति । पूर्णा० सप्तवाये-त्याचारात्पठेत् । ततः स्रुवस्राव्होमादि संस्थाजपान्तं कुर्यात् । तत ऋत्विक्सहित आचार्यः प्रागुक्तस्थण्डिलदेशादैशान्यां शुचौ देशे संमृष्टे रङ्गवल्ल्याद्यलंकृते चतुष्पदं दीर्घचतुरश्रं सोत्तरच्छदं पीठं निधाय तस्योदगग्रांस्त्रीन्हरितान्दर्भानास्तीर्य तत्रोपविष्टं पत्नीसहितं प्राङ्मुखं यजमानं पात्रान्तरे गृहीतेन कलशोदकेन पञ्चपल्लवैः कुशदूर्वासहितैरभिषिञ्चेत् ।

तत्र मन्त्राः—आपो हि ष्ठा० ३ हिरण्यवर्णा० ४ पवमानः सुवर्जनः पवित्रेण वि० १७ ।

सुरास्त्वामभिषिञ्चन्तु ब्रह्मविष्णुमहेश्वराः ।
वासुदेवो जगन्नाथस्तथा संकर्षणो विभुः ॥ १ ॥
प्रद्युम्नश्चानिरुद्धश्च भवन्तु विजयाय ते ।
आखण्डलोऽग्निर्भगवान्यमो वै निर्ऋतिस्तथा ॥ २ ॥
वरुणः पवनश्चैव धनाध्यक्षस्तथा शिवः ।
ब्रह्मणा सहिताः सर्वे दिक्पालाः पान्तु ते सदा ॥ ३ ॥
कीर्तिर्लक्ष्मीर्धृतिर्मेधा पुष्टिः श्रद्धा क्रिया मतिः ।
बुद्धिर्लज्जा वपुः शान्तिः कान्तिस्तुष्टिश्च मातरः ॥ ४ ॥
एतास्त्वामभिषिञ्चन्तु देवपत्न्यः समागताः ।
आदित्यश्चन्द्रमा भौमो बुधजीवसितार्कजाः ॥ ५ ॥
ग्रहास्त्वामभिषिञ्चन्तु राहुः केतुश्च पूजिताः ।
देवदानवगन्धर्वा यक्षराक्षसपन्नगाः ॥ ६ ॥
ऋषयो मुनयो गावो देवमातर एव च ।
देवपत्न्यो द्रुमा नागा दैत्याश्चाप्सरसां गणाः ॥ ७ ॥
अस्त्राणि सर्वशस्त्राणि राजानो वाहनानि च ।
औषधानि च रत्नानि कालस्यावयवाश्च ये ॥ ८ ॥
सरितः सागराः शैलास्तीर्थानि जलदा नदाः ।
एते त्वामभिषिञ्चन्तु सर्वकामार्थसिद्धये ॥ ९ ॥
ग्रहाणामादिरादित्यो लोकरक्षणकारकः ।
विषमस्थानसंभूतां पीडां हरतु ते रविः ॥ १ ॥
रोहिणीशः सुधामूर्तिः सुधागात्रः सुधाशनः ।

ये । सोमाय० काय, उमारूपाधिदे० य । ॐ अग्निर्मू० ति । अङ्गार-
काय० काय स्कन्दभूमिरूपाधिदेवता० य । ॐ उद्बुध्य० मेतम् ।
बुधाय० नारायणविष्णुरूपाधिदे० य । ॐ बृहस्पते० न्नम् । बृहस्पतये०
ब्रह्मेन्द्ररूपा० य । ॐ शुक्र० स्तु । शुक्राय० इन्द्रेन्द्राणीरूपा० य । ॐ
शं नो० नः । शनै० यमप्रजापतिरू० य । ॐ कया० ता । राहवे०
कालसर्परूपा० य । ॐ केतुं० याः । केतवे० चित्रगुप्तब्रह्मरू० य ।

ॐ गणाना० दनम् । गणपतये० सिद्धिबुद्धिसहितायेमं० भोः सिद्धि-
बुद्धिसहित गणपते० । ॐ जातवे० दुर्गायै० साङ्गायै स० वायै, इ०
भो दुर्गे, इमं व० स्वायुधपुष्पवाहिनी क्षे० कर्त्री आ० त्री पु० त्री तु० त्री नि०
त्री वरदा भव । ॐ वायो० सा । वायवे सा० मि । भो वायो० व ।
ॐ घृतं घृतपावा० स्वाय । आकाशाय सा० मि । भो आकाश, इमं० ।
ॐ या वां क० तम् । अश्विभ्यां साङ्गाभ्यां स० भ्यां सा० भ्यां स०
काभ्यामिमं स० मि । भो अश्विनाविमं बलिं गृहीतं मम स० युष्मत्कर्तारौ
क्षे० तारौ आ० रौ पु० रौ तु० रौ नि० तारौ वरदौ भवतम् । ॐ
वास्तोष्पते० प्यदे । वास्तोष्पतये सा० मि । भो वा० ते, इमं० भवेति ।

ततः क्षेत्रपालाय कुङ्कुमरक्तपुष्पादियुतं सदीपं सताम्बूलं सदक्षिणं
माषभक्तबलिं दद्यात् । ॐ क्षेत्रस्य पति० हसे । क्षेत्रपालाय सा० काय
भूतप्रेतडाकिनीशाकिनीब्रह्मराक्षसवेतालादिपरिवारयुतायेमं कुङ्कुमादि-
युतं माषभक्तबलिं सम० मि । भो भोः क्षेत्रपाल सपरिवारेमं बलिं०
भवेति ।

ततः शूद्रेण बलिं बहिर्देशे प्रापयेत् । तस्य पृष्ठतः शान्तिपा
ठपूर्वकं स्वयं जलं सिञ्चन्नाचार्यः सपत्नीको गृहाद्बहिर्गत्वा प्रत्येत्य
हस्तौ पादौ प्रक्षाल्याऽऽचम्याग्निसमीपमागत्य पुनराचम्य स्वासने उप-
विशेत् । तत आचार्यो दर्व्या स्रुवेण चतुर्गृहीतमाज्यं गृहीत्वा तदुपरि
वस्त्रयुतं चन्दनादिभूषितं फलं निधाय, इडनामाऽयमग्निरित्यनुसंधाय
यजमानान्वारब्धस्तिष्ठन्पूर्णाहुतिं जुहुयात् ।

ॐ समुद्रा० वयं नाम० २ । ॐ चत्वारि श्रृं० वेश ३ । ॐ मूर्धानं दि०
धाः । ॐ पुनस्त्वा० माः । ॐ पूर्णा द० । ॐ सप्त ते अ० घृतेन स्वाहेति
यजमानोऽग्नये वैश्वानराय वसुरुद्रादित्येभ्यः शतक्रतवे सप्तवतेऽग्नये चेद-

मिति त्यजेत् । तत आचार्यः पूर्णाहुतिमुत्त० इति । पूर्णा० समस्त्वाये-त्याचारात्पठेत् । ततः संस्रावहोमादि संस्थाजपान्तं कुर्यात् । तत ऋत्विक्सहित आचार्यः प्रागुदक्प्रदेशे ऐशान्यां शुचौ देशे संमृष्टे रङ्गवल्ल्याद्यलंकृते चतुष्पदं दीर्घचतुरस्रं सोत्तरच्छदं पीठं निधाय तत्रोदगग्रांस्त्रीन्हरितान्दर्भानास्तीर्य तत्रोपविष्टं पत्नीसहितं प्राङ्मुखं यजमानं पात्रान्तरे गृहीतेन कलशोदकेन पञ्चपल्लवैः कुशदूर्वासहितैरभिषिञ्चेत् ।

तत्र मन्त्राः—आपो हि ष्ठा० ३ हिरण्यवर्णा० ४ पवमानः सुवर्जनः पवित्रेण वि० १७ ।

सुरास्त्वामभिषिञ्चन्तु ब्रह्मविष्णुमहेश्वराः ।
वासुदेवो जगन्नाथस्तथा संकर्षणो विभुः ॥ १ ॥
प्रद्युम्नश्चानिरुद्धश्च भवन्तु विजयाय ते ।
आखण्डलोऽग्निर्भगवान्यमो वै निर्ऋतिस्तथा ॥ २ ॥
वरुणः पवनश्चैव धनाध्यक्षस्तथा शिवः ।
ब्रह्मणा सहिताः सर्वे दिक्पालाः पान्तु ते सदा ॥ ३ ॥
कीर्तिर्लक्ष्मीर्धृतिर्मेधा पुष्टिः श्रद्धा क्रिया मतिः ।
बुद्धिर्लज्जा वपुः शान्तिः कान्तिस्तुष्टिश्च मातरः ॥ ४ ॥
एतास्त्वामभिषिञ्चन्तु देवपत्न्यः समागताः ।
आदित्यश्चन्द्रमा भौमो बुधजीवसितार्कजाः ॥ ५ ॥
ग्रहास्त्वामभिषिञ्चन्तु राहुः केतुश्च पूजिताः ।
देवदानवगन्धर्वा यक्षराक्षसपन्नगाः ॥ ६ ॥
ऋषयो मुनयो गावो देवमातर एव च ।
देवपत्न्यो द्रुमा नागा दैत्याश्चाप्सरसां गणाः ॥ ७ ॥
अस्त्राणि सर्वशस्त्राणि राजानो वाहनानि च ।
औषधानि च रत्नानि कालस्यावयवाश्च ये ॥ ८ ॥
सरितः सागराः शैलास्तीर्थानि जलदा नदाः ।
एते त्वामभिषिञ्चन्तु सर्वकामार्थसिद्धये ॥ ९ ॥
ग्रहाणामादिरादित्यो लोकरक्षणकारकः ।
विषमस्थानसंभूतां पीडां दहतु ते रविः ॥ १ ॥
रोहिणीशः सुधामूर्तिः सुधागात्रः सुधाशनः ।

विषमस्थानसंभूतां पीडां दहतु ते विधुः ॥ २ ॥
भूमिपुत्रो महातेजा जगतां भयकृत्सदा ।
वृष्टिकृद्वृष्टिहर्ता च पीडां दहतु ते कुजः ॥ ३ ॥
उत्पातरूपो जगतां चन्द्रपुत्रो महाद्युतिः ।
सूर्यप्रियकरो विद्वान्पीडां दहतु ते बुधः ॥ ४ ॥
देवमन्त्री विशालाक्षः सदा लोकहिते रतः ।
अनेकशिष्यसंपूर्णः पीडां दहतु ते गुरुः ॥ ५ ॥
दैत्यमन्त्री गुरुस्तेषां प्राणदश्च महामतिः ।
प्रभुस्ताराग्रहाणां च पीडां दहतु ते भृगुः ॥ ६ ॥
सूर्यपुत्रो दीर्घदेहो विशालाक्षः शिवप्रियः ।
मन्दचारः प्रसन्नात्मा पीडां दहतु ते शनिः ॥ ७ ॥
महाशिरा महावक्त्रो दीर्घदंष्ट्रो महाबलः ।
अतनुश्चोर्ध्वकेशश्च पीडां दहतु ते तमः ॥ ८ ॥
अनेकरूपवर्णैश्च शतशोऽथ सहस्रशः ।
उत्पातरूपो जगतः पीडां दहतु ते शिखी ॥ ९ ॥

इति मन्त्रैर्देवस्य त्वेत्यादिभिर्मन्त्रैश्चाभिषिञ्चेत् ।

अभिषेकानन्तरं तैलाभ्यङ्गादिपूर्वकं सुस्नातौ दम्पती अभिषेकवासांसि परित्यज्याहतवासांसि परिधाय चन्दनाद्यलंकारांश्च धृत्वाऽग्नेः पश्चादुपविशतः । तत आचार्येण सह यजमानो मा नस्तोक इति विभूतिधारणं कृत्वाऽऽचार्यादीन्संपूज्य दक्षिणां दद्यात् । तत्राऽऽचार्याय गौः । ब्रह्मणेऽनड्वान् । सदस्याय'श्व' । सूर्यप्रीत्यर्थं कपिला गौः १ । सोमप्रीत्यर्थं शङ्खः २ । अङ्गारकप्रीत्यर्थं रक्तोऽनड्वान् ३ । बुधप्रीत्यर्थं सुवर्णम् ४ । बृहस्पतिप्रीत्यर्थं पीतं वासः ५ । शुक्रप्रीत्यर्थं श्वेतोऽश्वः ६ । शनिप्रीत्यर्थं कृष्णा गौः ७ । राहुप्रीत्यर्थं कालायसम् ८ । केतुप्रीत्यर्थं हस्ती छागो वा ९ इति तत्तद्धोमकर्त्रे व्यवस्थया तां तां दक्षिणां दद्यात् । यदि नवभ्योऽधिका ऋत्विजस्तदा तेभ्यः प्रत्येकमेकैका गौर्देया । न्यूनत्वे तु गोशङ्खादयो नव दक्षिणा यथासंभवं तेभ्य एव देयाः ।

*अथ गवादीनां मन्त्राः—*

कपिले सर्वदेवानां पूजनीयाऽसि सर्वदा ।
सर्वदेवमयी यस्मादतः शान्तिं प्रयच्छ मे ॥ १ ॥

त्वं पुरा सागरोत्पन्नो विष्णुना विधृतः करे ।
पाञ्चजन्य प्रदास्यामि ह्यतः शान्तिं प्रयच्छ मे ॥ २ ॥
धर्मस्त्वं वृषरूपेण जगदानन्दकारकः ।
अष्टमूर्तेरधिष्ठानमतः शान्तिं प्रयच्छ मे ॥ ३ ॥
हिरण्यगर्भगर्भस्थं हेमबीजं विभावसोः ।
अनन्तपुण्यफलदमतः शान्तिं प्रयच्छ मे ॥ ४ ॥
पीतवस्त्रद्वयं यस्माद्वासुदेवस्य वल्लभम् ।
प्रदानात्तस्य मे विष्णुः सदा शान्तिं प्रयच्छतु ॥ ५ ॥
विष्णुस्त्वमश्वरूपेण यस्मादमृतसंभवः ।
चन्द्रार्कवाहनं नित्यमतः शान्तिं प्रयच्छ मे ॥ ६ ॥
यस्मात्त्वं पृथिवी सर्वा धेनो वै कृष्णसंनिभे ।
सर्वपापहरा नित्यमतः शान्तिं प्रयच्छ मे ॥ ७ ॥
यस्मादायस कार्याणि त्वदधीनानि सर्वदा ।
लाङ्गलाद्यायुधादीनि तस्माच्छान्तिं प्रयच्छ मे ॥ ८ ॥
सुमताक गजेन्द्र त्वं देवेन्द्रस्य च वाहनम् ।
दानेनानेन दत्तेन सदा शान्तिं प्रयच्छ मे ॥ ९ ॥

छागपक्षे—

यस्मात्त्वं छाग यज्ञानामङ्गत्वेन व्यवस्थितः ।
यानं विभावसोर्नित्यमतः शान्तिं प्रयच्छ मे ॥ १० ॥

उक्तदक्षिणानामभावे सर्वेभ्यो ब्राह्मणेभ्यो हिरण्यं दद्यात्। सर्वेषु पक्षेष्वाचार्याय द्विगुणं दद्यात्। कर्मणः साद्गुण्यार्थमन्येभ्यो ब्राह्मणेभ्यो भूयसीं दद्यात्।

ततो ग्रहपीठदेवतानां यजमानः पञ्चोपचारैरुत्तरपूजनं विधाय समणदैस्तत्तन्नाममन्त्रैरादित्यादिदेवताभ्यो नम इति समुदितरूपेण वा पुष्पाञ्जलिं समर्पयेत्। तत आचार्यो ग्रहपीठदेवतानामुद्वासनमुत्तिष्ठेति मन्त्रेण कुर्यात्। ततो यजमानः, इदं ग्रहपीठं सप्रतिमं सकलशं सोपस्करमाचार्याय तुभ्यमहं संप्रदद इत्याचार्याय समर्पयेत्। तत आचार्योऽपि संपूज्य

गच्छ गच्छ सुरश्रेष्ठ स्वस्थाने परमेश्वर ।
यत्र ब्रह्मादयो देवास्तत्र गच्छ हुताशन ॥

इति विसृजेत् । अथ यजमानः कांस्यपात्रगताज्ये सकुटुम्बः स्वप्रतिरूपमवेक्ष्य—

आज्यं तेजः समुद्दिष्टमाज्यं पापहरं स्मृतम् ।
आज्यं सुराणामाहार आज्ये लोकाः प्रतिष्ठिताः ॥
अलक्ष्मीर्या यच्च दौःस्थ्यं मम गात्रेष्ववस्थितम् ।
तत्सर्वं क्षपयाऽऽज्य त्वं लक्ष्मीं पुष्टिं च वर्धय ॥

इति पठित्वा तदाज्यं सदक्षिणं ब्राह्मणाय दद्यात् । ततो यावन्त्यः प्रधानाहुतयस्तावतो ब्राह्मणान्भोजयेत् । यावन्ति तदाहुतिशतानि तावतो वा यथासंभवं वा । ततो यस्य स्मृत्येति विष्णुं स्मरेत् । ततो भुक्तवद्भ्यो यथाविभवं दक्षिणां दत्त्वा क्षमाप्य तदाशिषो गृहीत्वा प्रणिपत्यानेन ग्रहमखाख्येन कर्मणाऽऽदित्यादयो ग्रहाः प्रीयन्तां न ममेतीश्वरार्पणं कृत्वा हृष्टमनाः सुहृद्युक्तो भुञ्जीत ।

इति ग्रहमखप्रयोगः ।

---

अथ गर्भाधानप्रयोगः ।

तत्र रजोदर्शने सति त्रिरात्रं रजस्वला स्त्री, अञ्जनाभ्यञ्जननित्यस्नानादीनि वर्जयेत् । त्रिरात्रमस्पृश्या तिष्ठेत् । प्रथमर्तौ तु हरिद्रागन्धमाल्यादिधारणे ताम्बूलभक्षणे च न दोष इति विशेषः । अन्यत्समानम् । स्मार्तगार्ह्ययोः कर्मणोः चतुर्थेऽहनि स्नाताऽधिकारिणी भवति । श्रौते कर्मणि चतुर्थेऽह्न्यपि स्नानादनधिकारिणी । ततो रजोनिवृत्तौ सत्यां चतुर्थ्याद्युक्तानिन्द्यरात्रादिषु गर्भाधानं कुर्यात् । कर्ता ज्योतिर्विदुक्ते शुभमुहूर्ते प्रातः कृतनित्यक्रियः सभार्य आचम्य प्राणानायम्य देशकालौ संकीर्त्य मम अस्यां भार्यायामुत्पत्स्यमानसर्वगर्भसंस्कारातिशयसिद्धिबीजगर्भसमुद्भवैनोनिबर्हणक्षेत्रसंस्कारसिद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थमस्यां गर्भाधानं करिष्य इति संकल्प्य तदङ्गं गणपतिपूजनं पुण्याहवाचनं मातृकापूजनं नान्दीश्राद्धं चोक्तरीत्या कुर्यात् । अत्र ब्रह्मा प्रीयतामिति विशेषः । ततो रात्रौ यथोक्तशय्यां परिकल्प्य वस्त्रादिनानाभूषणैरलं-

कृतां सुगन्धां शिराभ्यङ्गेनाल्पभोजनेन वा कृशां शिष्टब्राह्मणसंभाषां हृदयाधारकां स्वयमपि तथैव भूत्वाऽऽचम्य निवीती भूत्वा स्त्रियं विमृश्य

विष्णुर्योनिं कल्पयतु त्वष्टा रूपाणि पिंशतु ।
आसिञ्चतु प्रजापतिर्धाता गर्भं दधातु ते ॥
गर्भं धेहि सिनीवालि गर्भं धेहि सरस्वति ।
गर्भं तेऽश्विनावुभावाधत्तां पुष्करस्रजा ॥
हिरण्ययी अरणी यं निर्मन्थतोऽश्विना ।
तं ते गर्भꣳ हवामहे दशमे मासि सूतवे ॥
यथाऽग्निगर्भा पृथिवी द्यौर्यथेन्द्रगर्भिणी ।
वायुर्यथा दिशां गर्भ एवं गर्भं दधामि ते ॥
यस्य योनिं प्रति रेतो गृहाण पुमान्पुत्रो जायतां गर्भो अन्तः ।
तं माता दशमासो बिभर्ति स जायतां वीरतमः स्वानाम् ॥
आ ते गर्भो योनिमेतु पुमान्बाण इवेषुधिम् ।
आ वीरोऽत्र जायतां पुत्रस्ते दशमास्यः ॥
करोमि ते प्राजापत्यमा गर्भो योनिमेतु ते ।
अनूनः पूर्णो जायतामनन्धोऽश्रोणोऽपिशाचधीरः ॥
यानि प्रभूणि वीर्याण्यृषभा जनयन्तु नः ।
तैस्त्वं गर्भिणी भव स जायतां वीरतमः स्वानाम् ॥
सा प्रसूर्धेनुगा भव ।

इत्येतैः पुरस्तात्समीपमाक्रमेत् । ततस्तां दीपसमीप एव वामभागे शय्यायां शाययित्वा,

ॐ सं नाभ्यः सꣳ हृदयानि सं नाभिः सं त्वचः ।
सं त्वा कामस्य योक्त्रेण युञ्ज्म्यविमोचनाय ॥

इति सुरतं करोति ।

ॐ याकवाकꣳ संवननं यन्नदीभ्य उदाहृतम् ।
यथुन्ती देवगन्धर्वैस्तेन संवननौ स्वके ॥

इति मुखमीक्षते । ॐ भूः प्रजापतिनाऽऽत्मृषभेण स्कन्दयामि वीर्यं धत्स्वामुकदे । ॐ भुवः प्रजा० धत्स्वामुकदे । ॐ स्वः प्रजाप० धत्स्वामुकदे ।

इत्येतैः प्रतिमन्त्रं रेतोऽवस्कन्दयेत् । ततो यज्ञोपवीति आशिरस्कं स्नानं कृत्वा शिखां बद्ध्वा पौराणाचमनप्राणायामौ कृत्वा विष्णुं संस्मरेत् । ऋतुव्यतिरिक्तकाले गमने तु पादप्रक्षालनम् । ततः पृथक्शयनौ भवतः । भार्यायास्तत्सुचिता नैवास्ति । ततः श्वोभूते नित्यनिर्वर्तनानन्तरं ब्राह्मणेभ्यो भूयसीं दत्त्वा ब्राह्मणान्भोजयेत् । एतयोः प्रधानोत्तराङ्गत्वस्यैव दृष्टत्वात् । दुष्टमासादौ प्रथमरजोदर्शने तु शान्तिं कृत्वा गर्भाधानं कुर्यात् ।

इति गर्भाधानप्रयोगः ।

---

## अथ नारायणबलिप्रयोगः ।

एवं कृतेऽपि गर्भाधाने यदा गर्भो नोत्पद्यते तदा प्रतिबन्धकीभूतप्रेतनिवृत्त्यर्थं नारायणबलिः कार्यः ।

कर्ता शुक्लैकादश्यां नदीतीरादिशुचौ देशे स्नानादिनित्यक्रियान्त आचम्य प्राणानायम्य देशकालौ संकीर्त्य मदीयकुलाभिवृद्धिप्रतिबन्धकप्रेतस्य प्रेतत्वनिवृत्त्यर्थं नारायणबलिं करिष्य इति संकल्प्य कलशस्थापनविधिना स्थापितकलशद्वये सुवर्णनिर्मितप्रतिमयोर्विष्णुमावाहयामि वैवस्वतं यममावाहयामीति क्रमेणाऽऽवाह्य पुरुषसूक्तेन यमाय सोममिति च क्रमेण षोडशोपचारैः संपूज्य तत्पूर्वभागे रेखायां दक्षिणाग्रकुशास्तरणान्ते शुन्धतां विष्णुरूपी प्रेत इति दशसु स्थानेषु दक्षिणसंस्थमपो निनीय तत्र मधुघृततिलप्लुतान्दश पिण्डान्सतिलान्काश्यपगोत्रामुकप्रेत विष्णुदैवतायं ते पिण्ड इति दक्षिणामुखः प्राचीनावीती दक्षिणाग्रेषु कुशेषु पराचीनेन पाणिना सव्यं जान्वाच्य विष्णुरूपं प्रेतं ध्यायन्दद्यात् । ततो गन्धादिभिरभ्यर्च्य प्रवाहणान्तं कृत्वा नद्यादौ क्षिपेत् । तस्यामेव रात्रौ श्वः करिष्यमाणश्राद्धे क्षणः क्रियतामित्येवं पञ्च त्रीनेकं वेत्येवमयुग्मान्ब्राह्मणाञ्श्राद्धोद्देशेन निमन्त्र्योपोषणं कुर्यात् । श्वोभूते मध्याह्ने विष्णुमभ्यर्च्य प्रेतं विष्णुरूपिणमुद्दिश्यैकोद्दिष्टविधिना पादप्रक्षालनादितृप्तिप्रश्नान्तं कृत्वा ब्राह्मणसमीपे पिण्डपितृयज्ञवदुल्लेखनाद्युदकनिनयनान्तं

तूष्णीं कृत्वा विष्णवे ब्रह्मणे शिवाय सपरिवाराय यमाय च नाममन्त्रै-श्चतुरः पिण्डान्दत्त्वा विष्णोऽयं ते पिण्ड इति विष्णुरूपं प्रेतं ध्यायन्पञ्चमं पिण्डं दत्त्वाऽर्चनादिप्रवाहणान्तं तूष्णीं कृत्वाऽऽचान्तान्ब्राह्मणान्दक्षि-णया संतोष्य तेष्वेकस्मै गुणवते प्रेतबुद्ध्या वस्त्राभरणगोहिरण्यादि दत्त्वैकपक्षे तस्मा एव दत्त्वा भवन्तः प्रेताय तिलोदकाञ्जलिदानं कुर्व-न्त्विति वदेत् । ते च पवित्रपाणयः सकुशतुलसीपत्रतोयाञ्जलिं प्रेताय काश्यपगोत्रायामुकशर्मणे विष्णुरूपिणेऽयं तिलतोयाञ्जलिरिति दद्युः । ततो ब्राह्मणान्वाचयेत्, अनेन नारायणबलिकर्मणा भगवान्विष्णुरिमं प्रेतं शुद्धमपापमर्हं करोत्विति । ततो विप्रास्तथाऽस्त्विति प्रत्यूचुः (प्रति-ब्रूयुः) । ततः कर्ता स्नात्वा भुञ्जीत ।

इति नारायणबलिप्रयोगः ।

---

## अथ नागबलिप्रयोगः ।

गुरुशुक्रास्तादिरहिते कालेऽयनद्वयेऽपि पौर्णमास्याममावास्यायां पञ्चम्यामाश्लेषायुक्तदिने वा कुर्यात् । तत्राधिकारार्थं चतुर्द-शकृच्छ्रात्मकं प्रायश्चित्तं चरेत् । तस्य प्रयोगः उक्तदिनात्पूर्वेद्युस्त-द्दिने वा समस्तसंपदिति पर्षदं प्रदक्षिणीकृत्य नत्वा तदग्रे निष्कं तदर्धं वा निधायामुकशर्मणा मयेह जन्मनि जन्मान्तरे वा ज्ञानादज्ञानाद्वा कृतेन सर्पवधेन जनितस्य दोषस्य परिहारार्थमनुग्रहं कृत्वा प्रायश्चित्त-मुपदिशन्तु भवन्त इति प्रार्थयेत् । ते चोपदिशाम इति प्रतिब्रूयुः ।

ततः कर्ता—

सर्वे धर्मविवेक्तारो गोप्तारः सकला द्विजाः ।
मम देहस्य संशुद्धिं कुर्वन्तु द्विजसत्तमाः ॥
मया कृतं महाघोरं ज्ञातमज्ञातकिल्बिषम् ।
प्रसादः क्रियतां मह्यं शुभानुज्ञां प्रयच्छथ ॥
पूज्यैः कृतः पवित्रोऽहं भवेयं द्विजसत्तमैः ।

इति श्लोकान्पठित्वा मामनुगृह्णन्तु भवन्त इति पर्षदं प्रणमेत् ।

ततः कर्ता निषण्णपूजनं पर्षत्पूजनमनुवादकपूजनं च कुर्यात् । अनुवाद-काय भूनिष्कं यथाशक्ति दक्षिणां दद्यात् ।

ततोऽनुवादकोऽमुकशर्मणा त्वयेह जन्मनि जन्मान्तरे वा ज्ञानादज्ञानाद्वा कृतेन सर्पवधेन जनितस्य दोषस्य परिहारार्थं पर्षदुपदिष्टचतुर्दशकृच्छ्रचरणपूर्वकं यथाविधि सर्पसंस्कारं कृत्वा त्वं शुद्धो निरुपद्रवो भविष्यसीत्युपदेक्ष्ये (दिशेच्छ.)। ततः कर्ता, ओमित्यङ्गीकृत्य पर्षदं नमस्कृत्य विसर्जयेत्। अनुवादकं च। तत आचम्य प्राणानायम्य देशकालौ संकीर्त्यामुकशर्मणा मयेह जन्मनि जन्मान्तरे वा ज्ञानादज्ञानाद्वा कृतेन सर्पवधेन जनितस्य दोषस्य परिहारार्थं पर्षदुपदिष्टचतुर्दशकृच्छ्रात्मकं प्रायश्चित्तममुकप्रत्याम्नायद्वारा करिष्य इति संकल्प्य

यानि कानि च पापानि ब्रह्महत्यासमानि च ।
केशानाश्रित्य तिष्ठन्ति तस्मात्केशान्वपाम्यहम् ॥

इति शिखाकक्षोपस्थवर्जं केशनखरोमाणि वापयित्वा

आयुर्बलं यशो वर्चः प्रजाः पशुवसूनि च ।
ब्रह्म प्रज्ञां च मेधां च त्वं नो देहि वनस्पते ॥

इति वनस्पतिं प्रार्थ्य तस्मात्प्रदेशमात्रं काष्ठं गृहीत्वा

मुखदुर्गन्धिनाशाय दन्तानां च विशुद्धये ।
ष्ठीवनाय च गात्राणां कुर्वेऽहं दन्तधावनम् ॥

इति तेन काष्ठेन दन्तान्संशोध्य द्वादश गण्डूषान्कृत्वा वक्ष्यमाणोत्सर्जनरीत्या भस्मगोमयमृत्तिकास्नानानि विधाय पञ्चगव्यैः कुशोदकेन च तत्तन्मन्त्रैः स्नानं कृत्वाऽऽपो हि ष्ठेति त्रिभिर्मन्त्रैः शुद्धोदकेन स्नात्वा स्नानविधिना स्नानं कुर्यात्। कर्ता जीवत्पित्रादिकश्चेत्तदा केशसंरक्षणार्थं पूर्वोक्तं प्रायश्चित्तं द्विगुणं कुर्यात्। ततो विष्णुपूजनविष्णुश्राद्धगोदानव्याहृतिहोमपञ्चगव्यहोमान्कुर्यात्।

तत्र विष्णुपूजनमिदं विष्णुरिति मन्त्रेण। विष्णुश्राद्धसिद्ध्यर्थं विप्रानाहूय संपूज्य तेभ्यश्चत्वार्यामान्नानि दद्यात्। जीवत्पितृकस्य तु न विष्णुश्राद्धम्। ततो विप्रं गां च संपूज्य तस्मै यथाविभवकल्पितोपस्कारसहितां गां दद्यात्। गोरभावे तन्मूल्यं वा।

ततो व्याहृतिहोमः—कर्ताऽऽचम्योल्लेखनादिसंस्कृत आयतने लौकिकमग्निं प्रतिष्ठाप्य प्रज्वाल्य ध्यात्वा समिद्द्वयमादाय अद्य एहीत्यादि प्राणायामान्कृत्वा सर्पसंस्काराधिकारार्थं प्रायश्चित्ताङ्गभूतहोमकर्मणि

था यक्ष्यमाणा देवतास्ताः सर्वाः परिग्रहीष्यामि । प्रथमया व्याहृत्याऽग्निं सप्तभिराज्याहुतिभिः, द्वितीयया व्याहृत्या वायुं सप्तभिराज्याहुतिभिः, तृतीयया व्याहृत्या सूर्यं सप्तभिराज्याहुतिभिः, समस्तव्याहृतिभिः प्रजापतिं सप्तभिराज्याहुतिभिर्यक्ष्ये । पञ्चगव्यहोमे—अग्निमेकया पञ्चगव्याहुत्या सोममेकया पञ्चग० विष्णुं तिसृभिः पञ्चग० रुद्रमेक० । अत्रोदकस्पर्शः । सवितारमे० ब्रह्मैक० परमात्मानं प्रणवेन चतुर्थभागेन यावत्य आहुतयो भवन्ति तावतीभिराहुतिभिर्यक्ष्ये । एता देवताः सद्यो यक्ष्य इत्युक्त्वा समिधोऽभ्याधायाग्निं परिस्तीर्योत्तरेणाग्निं दर्भान्संस्तीर्य तेषु दर्वीं सप्तपत्रात्मकान्हरितान्कुशानाज्यस्थालीं पञ्चगव्यार्थं ताम्रपात्रं प्रोक्षणीपात्रमुपवेषं संमार्गदर्भानवज्वलनदर्भान्बर्हिरेकां समिधमाज्यं पञ्चगव्यानीत्यासाद्य पवित्रे कृत्वा प्रोक्षणीः संस्कृत्य पात्राणि पञ्चगव्यानि च प्रोक्ष्य दर्वीं सप्तपत्रात्मकान्कुशांश्च संमृज्य तत्तन्मन्त्रैः पञ्चगव्यानि पवित्रान्तर्हिते ताम्रपात्र एकीकृत्य देवस्य त्वेति सप्तसंख्यैः कुशैरुदकं तस्मिन्स्रावयित्वाऽऽपो हि ष्ठेति त्रिभिर्मन्त्रैरालोडयेत् ।

तत आज्यधिश्रयणादि । आज्यपर्यग्निकरणकाले पञ्चगव्यस्यापि पर्यग्निकरणम् । पवित्राभ्यां धानान्तेऽग्नेः पश्चाद्बर्हिरास्तीर्य तत्राऽऽज्यस्थालीं पञ्चगव्यपात्रं च निधाय दक्षिणतो दर्वीं सप्तपत्रात्मकान्कुशांश्च निधायाग्निहोऽमु० इति परिषिच्याऽऽसादितां समिधं तूष्णीमभ्याधाय दर्व्या सप्तधारमाघृभाभिर्व्यस्ताभिः समस्ताभिर्व्याहृतिभिराज्याहुतीर्जुहुयात् ।

ततः सप्तपत्रात्मकान्कुशानादाय तैस्तद्गव्येोद्धृत्य जुहोति । ॐ अग्नये स्वाहा अग्नय इ० । ॐ सोमाय स्वाहा सोमाये० । ॐ इरावती० स्वः स्वा० विष्णव इ० । ॐ इदं विष्णु० रे स्वा० विष्णव इ० । ॐ विष्णोर्नुकं० गाय स्वा० विष्णव इ० । ॐ मा नस्तोके० ते स्वा० रुद्रायेदं० । अप उपस्पृश्य । ॐ तत्सवि० यात्स्वा० सवित्र इ० । ॐ ब्रह्म ज० वः स्वा० ब्रह्मण इ० । ॐ स्वाहा, इति प्रणवेन यावतीभिराहुतिभिश्चतुर्थभागहोमो भवति तावतीराहुतीस्तैः कुशैरेव जुहुयात् । परमात्मन इ० ।

ततोऽवशिष्टपञ्चगव्यं प्रणवेनाऽऽलोड्य प्रणवेनाभिमन्त्र्य प्रत्यग्रहणं करिष्य इति द्विजान्पृष्ट्वा कुरुष्वेति तैरनुज्ञात आसनाद्बहिरुपविश्य प्रणवेन सर्वं पिबेत् ।

ततो मुखहस्तपादान्प्रक्षाल्य द्विराचम्याऽऽसन उपविश्य पर्षदुपदिष्टचतुर्दशकृच्छ्रात्मकप्रायश्चित्तमाचरेत् । द्रव्यदानस्य प्रत्याम्नायत्वपक्षे कृच्छ्रसंख्याकगोनिष्क्रयद्रव्यमग्रे निधाय तत्संपूज्य विप्रान्संपूज्य पर्षदुपदिष्टचतुर्दशकृच्छ्रसंख्याकगोनिष्क्रयद्रव्यं नानानामगोत्रेभ्यो ब्राह्मणेभ्यो दातुमहमुत्सृज्य इति दद्यात् । ततः पूर्ववद्व्याहृतिहोमविष्णुपूजनविष्णुश्राद्धगोदानानि कुर्यात् । नात्र पञ्चगव्यहोमः । ततो गवे ग्रासं दत्त्वा शक्तौ सत्यां गोभूतिलहिरण्याज्यवस्त्रधान्यगुडरौप्यलवणात्मकानि दश दानानि सदक्षिणानि पूजनपूर्वकं विप्रेभ्यो दत्त्वा मया यत्कृतं प्रायश्चित्तं तदच्छिद्रमस्त्विति भवन्तो ब्रुवन्त्विति विप्रान्प्रार्थयेत् । ततस्तैरच्छिद्रमस्त्विति प्रत्युक्ते कर्मसाद्गुण्याय विष्णुं संस्मरेत् ।

इह जन्मनि चेत्साक्षाद्वधे विप्राय लोहदण्डं दद्यात् । तस्य प्रयोगः— देशकालौ संकीर्त्य ममैतज्जन्मकृतप्रत्यक्षवधजनितदोषपरिहारार्थमिमं लोहदण्डं निष्क्रयद्रव्यं वाऽमुकशर्मणे ब्राह्मणाय तुभ्यमहं संप्रददे न ममेति विप्रहस्ते जलसहितं दत्त्वा कृतस्य लोहदण्डदानस्य संपूर्णतासिद्धय इमां दक्षिणां संप्रददे इति दक्षिणां दत्त्वाऽनेन लोहदण्डदानेनानन्तः प्रीयतां न ममेति वदेत् ।

अथ दशदानमन्त्राः ।

गवामङ्गेषु तिष्ठन्ति भुवनानि चतुर्दश ।
यस्मात्तस्माच्छिवं मे स्यादिह लोके परत्र च ॥ इति गोः ।
सर्वसस्या च या भूमिर्वराहेण समुद्धृता ।
अनन्तसस्यफलदा मम शान्तिं प्रयच्छतु ॥ इति भूमेः ।
तिलाः पापहरा नित्यं विष्णुदेहसमुद्भवाः ।
तिलदानेन सर्वं मे पापं नाशय केशव ॥ इति तिलानाम् ।
हिरण्यगर्भगर्भ॰ मम शान्तिं प्रयच्छतु । इति हिरण्यस्य ।
कामधेनोः समुद्भूतं देवानामुत्तमं हविः ॥
आयुर्विवर्धनकरमाज्यं पातु सदैव माम् । इति आज्यस्य ।
शरण्यं सर्वलोकानां लज्जाया रक्षणं परम् ।
सुवेषधारि वस्त्र त्वं सदा शान्तिं प्रयच्छ मे ॥ इति वस्त्रस्य ।
धन्यं करोति दातारमिह लोके परत्र च ।

तस्मात्प्रदीयते धान्यमतः शान्तिं प्रयच्छ मे ॥ इति धान्यस्य ।
प्रणवः सर्वमन्त्राणां नारीणां पार्वती यथा ।
तथा रसानां प्रवरः सदैवेक्षुरसो मतः ॥
मम तस्मात्परां शान्तिं ददस्व गुड सर्वदा । इति गुडस्य ।
शिवनेत्रोद्भवं रूप्यं पितृणामतिवल्लभम् ।
मम तस्य प्रदानेन शान्तिरस्तु सदैव हि । इति रौप्यस्य ।
यस्मादन्नरसाः सर्वे नोत्कृष्टा लवणं विना ।
तस्मात्तस्य प्रदानेन शान्तिरस्तु सदा मम ॥ इति लवणस्य ।

इति दानमन्त्राः ।

इत्थं पूर्वं विधायोक्तदिने सर्पसंस्कारं कुर्यात् । कर्ता प्रातः कृतनित्यक्रियः संभृतसंभारः पुण्यतीर्थादिप्रशस्तदेशं गत्वा सपत्नीकः परिहितधौतवासाः प्राणानायम्य मिश्रितैः प्रियङ्गुव्रीहिगोधूमतिलपिष्टैरेतदन्यतमेन पिष्टेन वा सर्पाकृतिं कृत्वा शूर्पे निधाय सर्पं प्रार्थयेत् ।

एहि पूर्वं मृतः सर्प अस्मिन्पिष्टे समाविश ।
संस्कारार्थमहं भक्त्या प्रार्थयामि समासतः ॥ इति ।

नतो भुजंगेशाय विद्महे सर्पराजाय धीमहि । तन्नो नागः प्रचोदयादिति भुजंगगायत्र्याऽऽवाहनादिषोडशोपचारैः पूजां कृत्वा पुष्पाञ्जलिं दत्त्वा प्रणिपत्य भोः सर्पेमं बलिं गृहाण ममाभ्युदयं कुर्विति बलिं समर्प्य हस्तौ पादौ प्रक्षाल्याऽऽचामेत् ।

ततः प्राणानायम्य संकल्पं कुर्यात् । ममेह जन्मनि जन्मान्तरे वा ज्ञानादज्ञानाद्वा कृतेन सर्पवधेन जनितस्य दोषस्य परिहारार्थं सर्पसंस्कारकर्म करिष्य इति संकल्प्योल्लेखनादिना संस्कृते देशे लौकिकाग्निं प्रतिष्ठाप्य मञ्वालय सभिन्नयमादाय श्रद्ध एहीत्यादि प्राणायामान्तं कृत्वा सर्पसंस्कारहोमकर्मणि या वक्ष्यमाणा इत्यादि व्याहृत्यन्तमुक्त्वा प्रधानहोमे—अग्निमग्निं वायुं सूर्यं चैकैकयाऽऽज्याहुत्या यक्ष्ये । सर्पमुखे समस्तव्याहृतिभिः प्रजापतिमेकयाऽऽज्याहुत्या यक्ष्य इत्युक्त्वा समिधोऽभ्याधायाग्नेराग्नेय्यां दिशि भूमिं जलेन प्रोक्ष्य तत्र चितिं कृत्वाऽग्निं चितिं च तूष्णीं परिषिच्याऽऽग्नेय्यग्रैर्दर्भैः पिण्डपितृयज्ञवत्परिस्तीर्याग्नेरुत्तरतो दर्भानास्तीर्य तत्र पात्राण्यासादयेत् । दर्भाज्यस्थालीं प्रोक्षणीपात्रमुपयमनिध्मं बर्हिः संमार्गदर्भानवज्वलनदर्भानाज्य-

मित्यासाद्य पवित्रे कृत्वा प्रोक्षणीः संस्कृत्य पात्राणि प्रोक्ष्य दर्वीं संमृ ज्याऽऽज्यं संस्कृत्य परिधीन्परिधायादित इति परिधिपर्यन्तं मन्त्रेणाऽऽघा-धायाऽऽघारादि व्याहृतिहोमान्तं कुर्यात् ।

ततः सर्पं गृहीत्वा चितायामारोप्यापः स्पृष्ट्वा श्रोत्रे स्पृष्ट्वाऽप उपस्पृ-श्याग्निसमीपमेत्य प्रधानहोमं कुर्यात् । ॐ भूः स्वा० अग्नय इ० । ॐ भुवः स्वा० वायव इ० । ॐ सुवः स्वा० सूर्याय० । इति दर्व्याऽग्नौ व्याहृतिभि-राज्येनाऽऽहुतित्रयं जुहुयात् । ॐ भूर्भुवः सुवः स्वाहेति चतुर्थीं सर्पमुखे जुहुयात् । प्रजापतय इ० आज्यशेषं दर्व्यैव सर्पदेहे निषेचयेत् । ततो हस्त-गृहीतैश्चन्दनसजलैः समस्तव्याहृतिभिः पाणिनाऽभ्युक्ष्य, ॐ अग्नेरक्षाणो० रोद० । इत्याद्यनन्तरमग्नौ सर्पं चितौ प्रक्षिपेत् । ततो दर्वीं परिधीन्पा-त्राणि बर्हिश्चाग्नौ प्रहृत्य तमग्निं प्रदक्षिणीकृत्य सर्पं नमस्कृत्य सर्प क्षमस्वेति क्षमाप्य (पवित्रो)त्थानं कुर्यात् । नमो अस्तु सर्पेभ्यो० इति त्रिभिर्मन्त्रैरुपतिष्ठेत ।

ज्ञानतोऽज्ञानतो वाऽपि कृतः सर्पवधो मया ।
पूर्वजन्मनि वा सर्प तत्सर्वं त्वं क्षमस्व मे ॥ इति प्रार्थयेत् ।
कर्कोटक नमस्तेऽस्तु शङ्खपाल नमोऽस्तु ते ।
नागराज महादेव तव रूपाणि ते नमः ।
अफणाः फणिनो ये च सविषा निर्विषाश्च ये ।
सर्वे सर्पा वंशजाः पुण्यमूर्ते नमोऽस्तु ते ॥
त्वयेयं जगती स्वामिंस्त्वत्फणामण्डलोपरि ।
धृतैकदेशे ह्यणुवत्सर्वे तुभ्यं नमोऽस्तु ते ॥
त्वया भगवते श्रीमद्वासुदेवाय निर्विषम् ।
स्वभोगेनैव पर्यङ्कमायस्तं भोगिनां वर ॥
त्राहि त्राहि महाभोगिन्सर्वोपद्रवदुःखतः ।
संततिं देहि मे पुण्यां निर्दुष्टां दीर्घदेहिनीम् ॥
प्रपन्नं पाहि मां भक्त्या कृपालो दीनवत्सल ।
ज्ञानतोऽज्ञानतो वाऽपि कृतः सर्पवधो मया ॥
जन्मान्तरेऽथ वैतस्मिन्न्यपूर्वेऽथ वा विभो ।
तत्पापं नाशय क्षिप्रमपराधं क्षमस्व मे ॥

इति पुराणमन्त्रैश्च प्रार्थयेत् । ततः सचैलं स्नानं कृत्वाऽग्निसमीपमा-गत्य भूर्भुवः सुवरिति शीघ्रग्न्येन नमस्य प्रोक्ष्य सर्पे हुते जलेन तमुपस्पृ-

मध्य जले मज्जयेत् । नास्थिसंचयनम् । ततः स्नात्वाऽऽगम्य गृहं व्रजेत् । त्रिरात्रमाशौचं कर्तुर्ब्रह्मचर्यादिकं च । मतान्तरे त्वेकाहम् ।

प्रातः सचैलं स्नातः कृतनित्यक्रियः सुस्नातानष्टौ ब्राह्मणानाहूय सर्पस्थाने क्षणः क्रियताम् । ॐ तथा प्राप्नोतु भवान्प्राप्नवानीति । एवमग्रेऽपि । अनन्तस्थाने० शेषस्था० कपिलस्था० नागस्था० कालिकस्था० शङ्खपालस्था० भूधरस्था० इति क्षणं दत्त्वा चतुरस्रमण्डलोपरि गन्धाक्षतयुतजलेनैतैरेव नामभिः पाद्यं दद्यात् । सर्पेदं पाद्यमित्यादि ।

ततस्तेष्वाचान्तेषु स्वयमाचम्य यथाक्रमं प्राङ्मुखानुदक्संस्थानुपवेश्य भूर्भुवः सुवः सर्पेदमासनमास्यतामित्यादि, सर्वत्र दर्भद्वयरूपमेवाऽऽसनं दत्त्वा दर्भद्वयान्तर्हितेष्वष्टसु पात्रेष्वप आसिच्य गायत्र्या युगपदभिमन्त्र्य तूष्णीं यवान्गन्धं पुष्पं च प्रक्षिप्य स्वाहाऽर्घ्या इति निवेद्य सर्पेदं तेऽर्घ्यमित्यर्घ्योदकं देवतीर्थेन दद्यात् । एवमनन्तेदं तेऽर्घ्यमित्यादि । सर्पेष ते गन्धः, अनन्तैष ते गन्ध इत्यादि । सर्पेमानि पु० सर्पेष धूपः सर्पेष दीपः सर्पेदं वस्त्रमित्यादि ।

ततः पात्रेष्वन्नादि परिवेष्य गायत्र्या प्रोक्ष्य कुशयवजलं गृहीत्वा सर्पायेदमन्नं परिविष्टं परिवेक्ष्यमाणं चाऽऽतृप्तेर्दास्यमानं स्वाहा संपद्यतां न मम । एवमनन्तादिभ्यः । ब्रह्मार्पणं० येषामन्नमुद्दिष्टं तेषामक्षय्या तृप्तिरस्तु । अनेन ब्राह्मणभोजनेन सर्पादयः प्रीयन्तां न ममेति सकुशयवजलमुत्सृजेत् । ततो ब्राह्मणा भुञ्जीरन् । नात्र पलिदाननिषेधः ।

ततः कर्ताऽऽचान्तेषु विप्रेषु प्रागग्रान्दर्भान्संस्तीर्य तेषु दुग्धमिश्रोदनेन सर्पायेमं बलिं समर्पयामि । अनन्तायेमं बलिमित्यादि । ततो पश्चाद्गन्धपुष्पवस्त्रादिभिः पूजयेत् । ततो ब्राह्मणेभ्यस्ताम्बूलसुवर्णादिदक्षिणादानम् । ततस्तान्क्षमापयित्वा प्रणम्य सुवर्णनागदानं कुर्यात् ।

आचार्यं संपूज्य स्वर्णनागमावाहनादिषोडशोपचारैः संपूज्य प्रार्थयेत् । तत्र मन्त्राः—

ब्रह्मलोके च ये सर्पाः शेषनागपुरोगमाः ।
नमोऽस्तु तेभ्यः सुप्रीताः प्रसन्नाः सन्तु मे सदा ॥ १ ॥
विष्णुलोके च ये सर्पा वासुकिप्रमुखाश्च ये ।
नमोऽस्तु तेभ्यः सु० ॥ २ ॥
रुद्रलोके च ये सर्पास्तक्षकप्रमुखास्तथा ।
नमोऽस्तु तेभ्यः सु० ॥ ३ ॥
खाण्डवस्य तथा दाहे स्वर्गं ये च समाश्रिताः ।
नमोऽस्तु तेभ्यः सु० ॥ ४ ॥
सर्पसत्रे च ये सर्पा आस्तीकेन च रक्षिताः ।
नमोऽस्तु तेभ्यः सु० ॥ ५ ॥
मलये चैव ये सर्पाः कर्कोटप्रमुखाश्च ये ।
नमोऽस्तु तेभ्यः सु० ॥ ६ ॥
धर्मलोके च ये सर्पा वैतरण्यां समाहिताः ।
नमोऽस्तु तेभ्यः सु० ॥ ७ ॥
समुद्रे चैव ये सर्पाः पाताले चैव संस्थिताः ।
नमोऽस्तु तेभ्यः सु० ॥ ८ ॥
ये सर्पाः पर्वताग्रेषु दरीसंधिषु संस्थिताः ।
नमोऽस्तु तेभ्यः सु० ॥ ९ ॥
ग्रामे वा यदि वाऽरण्ये ये सर्पाः प्रचरन्ति हि ।
नमोऽस्तु तेभ्यः सु० ॥ १० ॥
पृथिव्यां चैव ये सर्पा ये सर्पा बिलसंस्थिताः ।
नमोऽस्तु तेभ्यः सु० ॥ ११ ॥
रसातले च ये सर्पा अनन्ताद्या महाविषाः ।
नमोऽस्तु तेभ्यः सु० ॥ १२ ॥
एवं स्तुत्वा तु नागेन्द्रमाचार्याय निवेदयेत् ।

देशकालौ संकीर्त्य कृतस्य सर्पसंस्कारकर्मणः साङ्गतासिद्ध्यर्थमिमं सुवर्णमयं नागं सकलशं सवस्त्रं सदक्षिणं तुभ्यमहं संप्रददे न ममेति दत्त्वाऽनेन सुवर्णनागदानेनानन्तादयो नागाः प्रीयन्तामिति वदेत् ।

तत आचार्याय गोर्देया । गामाचार्य च संपूज्येमां सवत्सां कृष्णां गां सुवर्णशृङ्गीं रौप्यखुरीं ताम्रपृष्ठां कांस्यदोहां सवस्त्रां

सदक्षिणां वृषभयुतां तुभ्यमहं संप्रदद इत्याचार्याय दद्यात् । अनेनानन्तादयः प्रीयन्तामिति वदेत् । गोरभावे मूल्यं देयम् । तत आचार्यः शुद्धोदकेन सकुटुम्बं यजमानमभिषिञ्चेत् ।

ततः कर्ता मया यत्कृतं कर्म तत्सर्वमच्छिद्रमस्त्विति भवन्तो ब्रुवन्त्विति प्रार्थ्याच्छिद्रमस्त्विति तैः प्रत्युक्ते कृतस्य कर्मणः साङ्गतासिद्धये ब्राह्मणभोजनं भूयसीदानं च विधाय यस्य स्मृत्या० प्रमादादिति विष्णुं संस्मृत्यानेन सर्पसंस्काराख्येन कर्मणा सर्पाधिनाथोऽनन्तः प्रीयतामिति वदेत् । ततः सुहृद्युतो भोजनं कुर्यात् ।

एवं वन्ध्यात्वहराणि सुवर्णधेनुदानहरिवंशश्रवणादीनि अन्यप्रोक्तानि । तद्विधिस्तु तत एवावगन्तव्यः ।

इति नागबलिप्रयोगः ।

---

अथ पुंसवनप्रयोगः ।

इदं च पुंसवनं प्रतिगर्भमावर्तते गर्भसंस्कारत्वात् । तत्प्रयोगः—तृतीये मासि चतुर्थादिषु वा शुक्लपक्षे पुष्यपुनर्वसुहस्ताभिजिन्मोष्ठपदानुराधाश्विन्याख्यान्यतमे पुंनक्षत्रे गुरुशुक्रबुधसोमान्यतमवासरे व्यतीपातादिकुयोगरहिते दिवसे चन्द्रानुकूल्ये कार्यम् । नात्रास्तमलमासादिनिषेधः ।

कर्ता सुमुहूर्ते कृतनित्यक्रियः प्राङ्मुख उपविश्य स्वस्य दक्षिणतो भार्यामुपवेश्याऽऽचम्य प्राणानायम्य देशकालौ संकीर्त्य ममास्यां भार्यायां विद्यमानगर्भपुंस्त्वप्रतिपादनबीजगर्भसमुद्भवैनोनिबर्हणद्वारा श्रीपरमेश्वरप्रीत्यर्थं पुंसवनाख्यं कर्म करिष्य इति संकल्प्य गणपतिपूजनं पुण्याहवाचनं मातृकापूजनं नान्दीश्राद्धं चोक्तरीत्या कुर्यात् । अत्र प्रजापतिः प्रीयतामिति विशेषः ।

ततोऽग्निं प्रज्वाल्य ध्यात्वा समिधमादाय अग्न एहीत्यादि प्राणायामान्तं कृत्वा पुंसवनहोमकर्मणि या यक्ष्यमाणा इत्यादिप्याहृत्यन्तमुक्त्वा वैशेषिकप्रधानहोमे—धातारं चतसृभिराज्याहुतिभिर्यक्ष्ये । अङ्गहोमे—वरुणं द्वाभ्यामित्यादि । पात्रासादने—यवं सर्षपौ गोदधिद्रप्सं वटशाखाग्रं पिष्ट्वा घृतेन संमिश्रं तस्य रसं कौशेयवस्त्रार्थकोऽशकर्तारं कुशं पिष्ट्वा प्रियंगुविकारेणाद्भावसानितद्रव्येण मिश्रं तद्रसं चाऽऽमाय

दर्वीमाज्यस्थालीं प्रणीताप्रणयनं प्रोक्षणीपात्रमुपवेषं संमार्गदर्भानिध्मं बर्हिरवज्वलनदर्भानाज्यमित्येतान्यासादयेत्। ततो ब्रह्मवरणादि सामान्यप्रधानान्तं कर्म समानम्।

अथ वैशेषिकप्रधानहोमः—ॐ धाता ददातु नो रयिमी० नस्स्वाहा धात्र इदं०। ॐ धाता प्रजाया० धेम स्वाहा धात्र इ०। ॐ धाता ददातु नो रयिं प्रा० घसः स्वाहा धात्र इ०। ॐ धाता ददातु दा० जांपाः स्वाहा धात्र इ०। इति चतस्र आहुतीर्हुत्वेमं मे वरुणेत्यङ्गहोम-जयाद्युपहोमादि संस्थाजपान्तं कृत्वा त्रिवृदन्नहोमं पुण्याहादिवाचनं च विधाय प्रजापतिः प्रीयतामिति वदेत्।

ततोऽपरेणाग्निं स्नातां शुद्धवस्त्रादिभिरलंकृतां भार्यां प्राङ्मुखीमुपवेश्य 'रूपाऽसि' इति तस्या दक्षिणहस्त आसादितं यवं विलुपं प्राञ्चं निदधाति 'आण्डौ स्थः' इति तस्याभित आसादितौ द्वौ सर्षपौ स्थापयति। सकृदेव मन्त्रः। 'श्वात्रत्तत्' इति यवसर्षपोपर्यासादितं गोदधिद्रप्सं प्रक्षिपति। दध्न उपरिस्थो घनीभूतोऽसौ द्रप्सपदार्थः। ततस्तूष्णीं प्राशयति। तत्र 'अभिष्ट्वाऽहं दशभिरभिमृशामि दशमास्याय सूतवे' इति कृतशुद्धाचमनायास्तस्या उदरं हस्ताभ्यामभिमृशति। ततो घृतसंमिश्रमासादितं वटाङ्कुररसं पूर्वोक्तकृमिचूर्णरसं वा कृतस्वोरुमूलोपधानाया भार्याया दक्षिणनासिकाछिद्रे प्रवेशयेत्। ततोऽग्निं संपूज्य ब्राह्मणभोजनं भूयसीदानं च विधाय कर्मसाद्गुण्याय विष्णुं संस्मरेत्।

इति पुंसवनप्रयोगः॥

---

अथ गर्भिण्या गर्भस्रावहरोपायः।

तत्रेदं गृह्यम्—'यदि गर्भः स्रवेदार्द्रेणास्याः पाणिना त्रिरूर्ध्वं नाभेरुन्मार्ष्टि पराञ्चं त्वा नार्वाञ्चं त्वष्टा बध्नातु बन्धने। स ऋतूननुप्रवेश्य दशमासो अवीरहेति'। यदि गर्भः स्रवेत्तदा तस्या नाभेरूर्ध्वं यो देशो गर्भावस्थितियोग्यस्तं स्वेन पाणिना पराञ्चं त्वेति मन्त्रेण त्रिरुन्मार्ष्टि ऊर्ध्वापवर्गं संमृजतीत्यर्थः। सकृदेव मन्त्रः।

श्लो. प्रथमपि—पीत्वा तण्डुलतोयेन तण्डुलीयजटां ऋतौ।
पतद्गर्भा च या नारी स्थिरगर्भा प्रजायते॥

शर्करायव तिलैः समांशकैर्माक्षिकेण सह भक्षितैः स्त्रियाः ।
नास्ति गर्भपतनोद्भवं भयं पापभीतिरिव तीर्थसेवनात् ॥ इति ।
तण्डुलीयजटा तण्डुलजामूलम् । माक्षिकं मधु ।

इति गर्भस्रावहरोपायः ।

---

## अथ सीमन्तोन्नयनप्रयोगः ।

तच्च सीमन्तोन्नयनं चतुर्थादिमासेषु प्रसवपर्यन्तं कार्यम् । इदं सकृदेव कर्तव्यं न तु प्रतिगर्भम् ।

कर्ता ज्योतिर्विदादिष्टे मुहूर्ते कृतनित्यक्रियः प्राङ्मुख उपविश्य स्वस्य दक्षिणतो भार्यामुपवेश्याऽऽचम्य प्राणानायम्य देशकालौ संकीर्त्य ममास्यां भार्यायां विद्यमानस्यास्य प्रथमगर्भस्य जनिष्यमाणसर्वगर्भाणां च बीजगर्भसमुद्भवैनोनिबर्हणक्षेत्रसंस्कारद्वारा श्रीपरमेश्वरप्रीत्यर्थं सीमन्तोन्नयनाख्यं कर्म करिष्ये इति संकल्प्य गणपतिपूजनं पुण्याहवाचनं मातृकापूजनं नान्दीश्राद्धं चोक्तरीत्या कुर्यात् । अत्र धाता प्रीयतामिति विशेषः ।

तत औपासनाग्निं मङ्गलनामानमनुसंदध्यान्वाधानं कृत्वा चक्षुषी इत्यादि प्राणायामान्तं कृत्वा सीमन्तोन्नयनहोमकर्मणि या यक्ष्यमाणा इत्यादि व्याहृत्यन्तमुक्त्वा वैशेषिकप्रधानहोमे—धातारं चतसृभिराज्याहुतिभिर्यक्ष्ये । अङ्गहोमे—वरुणं द्वाभ्यामित्यादि । पात्रासादने त्रिश्वेतां शललीमुदुम्बरफलस्तवकं वटफलस्तवकं वा दर्भमाज्यस्थालीं प्रणीताप्रणयनं प्रोक्षणीपात्रमुपवेषं संमार्ग० अव० इध्मं बर्हिराज्यमित्येतान्यासादयेत् ।

ततो ब्रह्मवरणादि व्याहृतिहोमान्तं कृत्वा प्रधानहोमं कुर्यात् ।

ॐ धाता ददातु नो रयिमी० नस्स्वाहा धात्र इदं० । ॐ धाता प्र० धेम स्वा० धात्र इ० । ॐ धाता ददातु नो रयिं प्रा० सः स्वा० धात्र इ० । ॐ धाता ददातु दा० पाः स्वा० धात्र इदं० । इति चतस्र आहुतीर्हुत्वेमं मे वरुणेत्यङ्गहोमादि संस्थाजपान्तं समाप्य त्रिवृद्धोमं पुण्याहवाचनं विधाय धाता प्रीयतामिति वदेत् ।

ततः कर्मार्थत्वेन कृतस्नानामलंकृतां भार्यामपरेणाग्निं प्राङ्मुखीमुपवेश्य तस्याः पुरस्तात्प्रत्यङ्मुखस्तिष्ठन्प्रासादितां त्रिश्वेतां शलली गृहीत्वा तयाऽऽसादितमुदुम्बरफलस्तबकं वटफलस्तबकं वा गृहीत्वा ॐ भूर्भुवः सुवः, राकामह०, सुहवा०सु० मुक्थ्यम्। यास्ते राके० रराणा, इति तया शलल्योर्ध्वं सीमन्तमुन्नयेत् । केशान्विभजेदित्यर्थः । ॐ सोम एव नो राजेत्याहुर्ब्राह्मणीः प्रजा विवृत्तचक्रा आसीनास्तीरे तुभ्यं गङ्गे विश्वा-सत त्वया वयं धारा उदन्या इव । अति गाहेमहि द्विषः । इति भार्यामभिमन्त्रयते । ततो ब्राह्मणभोजनं भूयसीदानं च । तत आशिषो गृहीत्वा कर्मसाद्गुण्याय विष्णुं संस्मरेत् ॥

इति सीमन्तोन्नयनप्रयोगः ॥

---

अथ पुंसवनसीमन्तोन्नयनयोस्तन्त्रेण प्रयोगः ।

तत्र पुंसवनस्य सूत्रविहितकालातिक्रमदोषपरिहारार्थं पादकृच्छ्रमर्धकृच्छ्रं वा प्रायश्चित्तं कृत्वा पुंसवनं सीमन्तेन सह कुर्यात् । तस्यापि कालातिक्रमे पूर्वोक्तं प्रायश्चित्तं कुर्यात् । उभयत्रापि प्रायश्चित्तात्पूर्वं लौकिकाग्नौ समस्तव्याहृतिभिरेकामाहुतिं जुहुयात् ।

तत आचम्य प्राणानायम्य देशकालौ संकीर्त्य ममास्यां भार्यायां विद्यमानगर्भस्य पुंस्त्वप्रतिपादनबीजगर्भसमुद्भवैनोनिबर्हणद्वारा श्रीपरमेश्वरप्रीत्यर्थं पुंसवनं ममास्यां भार्यायां विद्यमानस्यास्य प्रथमगर्भस्य जनिष्यमाणसर्वगर्भाणां च बीजगर्भसमुद्भवैनोनिबर्हणद्वारा क्षेत्रसंस्कारद्वारा च श्रीपरमेश्वरप्रीत्यर्थं सीमन्तोन्नयनं च तन्त्रेण करिष्य इति संकल्पः । पुंसवनसीमन्तोन्नयनकर्मणोः पुण्याहं भवन्तो ब्रुवन्तु । पुंस० नकर्मभ्यां स्वस्ति भ०। पुंस० यनकर्मणोर्ऋद्धिं भ०। पुं० यनकर्मणोः श्रीर० न्तु । इति पुण्याहादिवाक्यानि। द्वितीये प्रतिवचनवाक्य ऋध्येतामिति विशेषः। पुंसवनसीमन्तोन्नयनकर्मणोर्या यक्ष्य० होष्यामीत्यन्वाधानवाक्ये। गणेशपूजनादिबलिकरणपुण्याहादिवाचनान्तं तन्त्रेणैव । वैशेषिकप्राजापत्यहोमस्यापि नाऽऽवृत्तिः । देवताया ऐक्यात् । ततो दधिद्रप्सादिप्राशनं सीमन्तोन्नयनादिकं च क्रमेण कार्यम् ।

इति पुंसवनसीमन्तोन्नयनयोस्तन्त्रेण प्रयोगः ।

---

अथ सुखप्रसवोपायः ।

तत्रैव गृह्ये—'विजननकाले क्षिप्रप्रसवनम् शिरस्त उदकुम्भं निधाय

पत्तस्तूर्यन्तीमथास्या उदरमभिमृशति यथैव वायुः पवते यथा समुद्र एजति । एवं ते गर्भ एजतु सह जरायुणाऽवमपैत्विरयवाञ्चमार्ष्टि' इति ।

प्रसवकाले शिरसः समीप उदकुम्भं निधाय पादयोः समीप औषधिविशेषं च निधाय तूष्णीमुदराभिमर्शं कृत्वा मन्त्रेणावमार्जनं कुर्यादित्यर्थः ।

शास्त्रान्तर उपायान्तरम्—

हिमवत्युत्तरे पार्श्वे शबरी नाम यक्षिणी ।
तस्या नूपुरशब्देन विशल्या भवतु गर्भिणी स्वाहा ॥

अनेनैरण्डतैलं मंत्रयित्वाऽमिश्रितमभिमन्त्र्य पाययेदुदरे लापयेच्चेति ।

ग्रन्थान्तरे तु—हिमवत्युत्तरे पार्श्वे इत्यमुं मन्त्रं जपन्नेकविंशतिदूर्वाङ्कुरैस्तिलतैलमेकपलं प्रदक्षिणमावर्तयन्नष्टशतं जपित्वा तत्तैलं किंचित्पाययित्वा शेषं योनौ निषेच्य दूर्वाङ्कुरान्केशेषूपगूहेदित्युक्तम् ।

अन्यच्च—वृषस्य मूलं यदि नाभियोनिप्रलेपितं स्त्री झटिति प्रसूते ।
तथा कटिस्थः कदलीतुकन्दो वेगात्प्रसूतिं कुरुतेऽङ्गनानाम् ॥ इति ।

वृषः—आडुलसा, इति प्र० तस्य मूलम् । यन्त्रमप्युक्तम्—

गजाग्निवेदा उडुराट्शराङ्क
रसर्षिपक्षा इति हि क्रमेण ।
लिखेत्प्रसूतेः समये गृहेऽङ्कान्
सुखेन नार्यः प्रसवन्ति शीघ्रम् ॥ इति ।

अस्यार्थः—गर्भिण्या दृष्टिगोचरे देशे समालय कोष्ठकाङ्कैर्ईशानोत्तरवायुकोष्ठेष्वष्टमतृतीयचतुर्थानङ्कान्पूर्वमध्यमपश्चिमकोष्ठेषु प्रथमपञ्चमनवमाङ्कानाग्नेयदक्षिणनैर्ऋतकोष्ठेषु षष्ठसप्तमद्वितीयाङ्कान्क्रमेण लिखित्वा प्रसूतिसमय एतद्यन्त्रदर्शनेन सुखेन शीघ्रं नार्यः प्रसवन्तीति ।

पू०

| | | | |
|---|---|---|---|
| उ० | ८ | १ | ६ |
| | ३ | ५ | ७ |
| | ४ | ९ | २ |

प०

इति सुखप्रसवोपायः ॥

## अथ जातकर्मप्रयोगः ।

जातमात्रे पुत्रे पिता तस्य मुखमालोक्य नद्यादावुदङ्मुखस्तदसंभवे गृहे वाऽऽहृताभिः स्वर्णयुताभिरद्भिः स्नायात् । रात्रावनलसंनिधौ ।

ततो द्विराचम्य श्वेतवस्त्रमाल्यादिभिरलंकृतः पवित्रपाणिरकृतनालच्छेदमपीतस्तन्यं क्षालितमलं कुमारं मातुरुत्सङ्गे प्राङ्मुखं संस्थाप्य स्वयं प्राङ्मुखो देशकालौ संकीर्त्य ममास्य कुमारस्य गर्भाम्बुपानजनितसकलदोषनिबर्हणायुर्मेधाभिवृद्धिबीजगर्भसमुद्भवैनोनिबर्हणद्वारा श्रीपरमेश्वरप्रीत्यर्थं जातकर्म करिष्य इति संकल्प्य गणपतिपूजनं पुण्याहवाचनं मातृकापूजनं तन्त्रेण पुरुषार्थाङ्गभूतं नान्दीश्राद्धं च कुर्यात् । नान्दीश्राद्धे पुरुषब्राह्मणभोजनपर्याप्तमामं हिरण्यं वा स्वाहा न ममेति समर्पणवाक्ये विशेषः । इदं चाश्वेन न कदाचिदपि कार्यम् ।

ततोऽश्मनि परशुं निधाय तदुपरिष्टाद्धिरण्यं तानि विपरीतानि कृत्वा तदुपरि हस्ताभ्यां कुमारं प्राञ्चं धारयति ।

ॐ अश्मा भव परशुर्भव हिरण्यमस्तृतं भव ।
वेदो वै पुत्रनामाऽसि जीव त्वं शरदः शतम् ॥
अङ्गादङ्गात्संभवसि हृदयादधि जायसे ।
आत्मा वै पुत्रनामाऽसि स जीव शरदः शतम् ॥ इति ।

तत औपासनाग्निं बहिरुद्धननादिसंस्कृते देशे संस्थाप्योत्तपनीयमाम्बरीषं वाऽग्निं सूतिकागारे नीत्वा संस्थापयेत् । तप्तकपाले शुष्कगोमयचूर्णप्रक्षेपेण प्रज्वालित उत्तपनीयः । भ्राष्ट्रेऽग्निः स आम्बरीषः ।

ततस्तमग्निं परिस्तीर्य समन्त्रं परिषिच्य

ॐ शण्डो मर्क उपवीरः शौण्डिकेर उलूखलः ।
च्यवनो नश्यतादित स्वाहा । नालस्यामाः ।
ॐ आलिखन्विलिखन्ननिमिषन्किं वदन्त उपश्रुतिः स्वाहा ।
ॐ अर्यम्णः कुम्भी शत्रुः पात्रपाणिर्निपुणिः स्वाहा ।
ॐ आन्त्रीमुखः सर्षपारुणो नश्यतादितः स्वाहा ।
ॐ केशिनी श्वलोमिनी बजाबोजोपकाशिनी ।
अपेत नश्यतादितः स्वाहा ।

ॐ कौबेरका विश्वासो रक्षोराजेन प्रेषिताः ।
ग्रामान्सजातयो यन्तीप्सन्वः परिजाकृतान्स्वाहा ।
ॐ एतान्हतैतान्बध्नीतेत्ययं ब्रह्मणो दूतस्तानग्निः पर्यसरत् ।
तानिन्द्रस्तान्बृहस्पतिस्तानहं वेद ब्राह्मणः ।
प्रमृशतः कूटदन्तान्विकेशाल्लँम्बस्तनान्स्वाहा ।
ॐ नक्तंचारिण उरस्पेशाञ्छूलहस्तान्कपालपान्स्वाहा ।
ॐ पूर्व एषां पितेत्युच्चैःश्राव्यकर्णकः ।
माता जघन्या गच्छन्ती ग्रामे विधुरमिच्छन्ती स्वाहा ।
ॐ नक्तंचारिणी स्वसा संधिना प्रेक्षते कुलम् ।
या स्वपन्तु जागर्ति यस्यै विजातायां मनः स्वाहा ॥
ॐ तासां त्वं कृष्णवर्त्मने क्लोमानं हृदयं यकृत् ।
अग्ने यक्षीणि निर्दह स्वाहा ॥

इत्येकादशभिः स्वाहाकारान्तैर्मन्त्रैः प्रतिमन्त्रं हस्तेनैवाङ्गारेषु कणानावपति उद्धूपनार्थम् । ततः पाणी प्रक्षाल्य

ॐ यत्ते सुसीमे हृदयं दिवि चन्द्रमसि श्रितम् ।
तस्यामृतत्वस्य नो धेहि माऽहं पौत्रमघं रुदम् ।
वेद ते भूमि हृदयं दिवि चन्द्रमसि श्रितम् ।
तथाऽमृतत्वस्येशानो माऽहं पौत्रमघं रुदम् ॥

इति द्वाभ्यां भूमिमालभते ।

अथ मेधाजननम्—दर्भेण हिरण्यं प्रबध्य गोघृतेऽन्तर्धाय प्रादेशिकसमन्वेन पार्श्यमाणं कुमारं घृतं प्राशयति--ॐ भूर्ऋचस्त्वयि जुहोमि स्वाहा । ॐ भुवो यजूंषि त्वयि जुहोमि स्वाहा । ॐ सुवः सामानि त्वयि जुहोमि स्वाहा । ॐ भूर्भुवः सुवरथर्वाङ्गिरसस्त्वयि जुहोमि स्वाहा । इत्येतैश्चतुर्भिः प्रतिमन्त्रम् । नात्र त्यागः । इति मेधाजननम् ।

ततः क्षेत्रियै त्वा निर्ऋत्यै त्वा० उभे । शं ते अग्निः सहा० भवन्तु । सूर्यमृतं तम० पाशात् । इत्येतैरुष्णशीताभिरद्भिः सर्वाङ्गे कुमारं स्नापयति । ॐ या दैवीश्चतस्रः प्र० राचैः । इति मातुरुत्सङ्गे कुमारमाधापयति । ततस्तूष्णीं दक्षिणं स्तनं प्रक्षाल्य

ॐ यस्ते स्तनः शशयो यो मयोभूर्यो रत्नधा वसुविद्यः सुदत्रः। येन विश्वा पुष्यसि वार्याणि सरस्वति तमिह धातवेऽकः॥

ॐ या ते पुत्रः रसो हिरण्यी धेनुरविसारिणी।
प्रिया धनस्य भूया एधमाना स्वे वशे।

आधापितं कुमारमभिमन्त्रयते।
ॐ अयं कुमारो जरां धयतु सर्वमायुरेतु।
तस्मै स्तनं प्रप्यायस्वाऽऽयुः कीर्तिर्वर्चो यशो बलम्।

इति दक्षिणस्तनं पाययति।
ततः उत्तरस्तनं तूष्णीं प्रक्षाल्यानेनैव मन्त्रेण पाययति।
ॐ नामयति न रुदति यत्र वयं वदामो यत्र चाऽभिमृशामसि।
इत्युभौ स्तनावभिमृशति। प्रतिस्तनं मन्त्रावृत्तिः।
ॐ आपो गृहेषु जाग्रत यथा देवेषु जाग्रथ।
एवमस्यै सुपुत्रायै जाग्रत।

इति सूतिकायाः शिरसः समीपमुदकपूर्णं कुम्भं पिहिताननं निदधाति।

ततो दुष्टस्थानस्थितग्रहपीडानिवृत्तये दानजपादि कारयेत्। ततः पितृन्प्रजापतिं चोद्दिश्य सहिरण्यानि तिलपात्राणि सुवर्णभूम्यादीनि च विभवानुसारेण ब्राह्मणेभ्यो दद्यात्। ततो भूयसीं दक्षिणां दत्त्वा विप्राशिषो गृहीत्वा कर्मसाद्गुण्याय विष्णुं संस्मरेत्।

ततो नालच्छेदादि यथाचारं कार्यम्। पुत्र्या अपि जातकर्म तूष्णीं कार्यम्।

इति जातकर्मप्रयोगः।

---

अथ षष्ठीपूजाप्रयोगः।

पञ्चमे षष्ठे च दिवसे प्रदोषसमये स्नात्वा गन्धपात्रप्रभृतिभ आचम्य प्राणानायम्य देशकालौ सङ्कीर्त्यास्याः सूतिकायाः शिशोश्च सकलारिष्टनिरसनपूर्वकायुरारोग्यैश्वर्याभिवृद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थं विघ्नेशस्य जन्मदानां षष्ठीदेव्या जीवन्तिकायाः स्कन्दस्य शस्त्रे भगवत्याश्च पूजनमहं करिष्य इति संकल्प्य कुड्यादिलिखितप्रतिमास्वक्षतपुञ्जेषु वा क्रमेणाऽऽवाहयेत्।

ॐ विघ्नेशाय नमो विघ्नेशमावाहयामि । जन्मदाभ्यो नमो जन्मदा आवा० । षष्ठीदेव्यै नमः षष्ठीदेवीमा० । जीवन्तिकायै० जीवन्तिकामा० । स्कन्दाय० स्कन्दमा० । शस्त्रे भगवत्यै० भगवतीमा० । इत्यावाह्य विघ्नेशजन्मदाषष्ठीदेवीजीवन्तिकास्कन्दभगवतीभ्यो नम इति षोडशोपचारैः पूजयेत् ।

ततः प्रार्थना—सर्वविघ्नहरोऽसि त्वमेकदन्त गजानन ।
षष्ठीगृहेऽर्चितः प्रीत्या बालं दीर्घायुषं कुरु ॥
लम्बोदर महाभाग सर्वोपद्रवनाशन ।
त्वत्प्रसादादविघ्नेन चिरं जीवतु बालकः ॥

इति विघ्नेशं प्रार्थयेत् ।

वरदाः सायुधा यूयं जन्मदा इति विश्रुताः ।
शक्तिभिः सह बालं मे रक्षतात्राहि जागरे ॥

इति जन्मदाः प्रा० ।

शक्तिस्त्वं सर्वदेवानां लोकानां हितकारिणी ।
मातर्बालमिमं रक्ष महाषष्ठि नमोऽस्तु ते ।
गौरीपुत्रो यथा स्कन्दः शिशुत्वे रक्षितः पुरा ।
तथा ममाप्ययं बालः षष्ठिके रक्ष्यतां नमः ॥

इति षष्ठीदेवीं प्रा० ।

कार्त्तिकेय महाबाहो गौरीहृदयनन्दन ।
कुमारं रक्ष भीतिभ्यः पाहि देव नमोऽस्तु ते ॥

इति स्कन्दं प्रा० ।

अस्मिंस्तु सूतिकागारे देवीभिः परिवारिता ।
रक्षां कुरु महाभागे सर्वोपद्रवनाशिनि ॥
अयं मम कुलोत्पन्नो रक्षार्थं पादयोस्तव ।
नीतो मातर्महाभागे चिरं जीवतु बालकः ॥
रूपं देहि जयं देहि भगं भगवति देहि मे ।
पुत्रान्देहि धनं देहि सर्वकामांश्च देहि मे ॥
शान्तिरस्तु शुभं चास्तु प्रणम्य त्वां पुंसोऽपि यत् ।
यतः समागतं पापं तत्रैव प्रतिगच्छतु ॥

इति भगवतीं प्रार्थयेत् । तत आवाहितदेवतानां सदीपान्दधिमाषभक्तबलीन्क्रमेण दद्यात् । ततो ब्राह्मणेभ्यो यथाचारं ताम्बूलदक्षिणादि दद्यात् । पुरुषाः शस्त्रहस्ताः स्त्रियो गीतकारिण्योऽस्यां रात्रौ जागरणं कुर्युः । सूतिकागृहं च धूपाग्निदीपशस्त्रमुसलविभूतियुतं कार्यम् । सर्षपादिविकिरणशान्तिसूक्तपाठादिकमपि यथाचारं कर्तव्यम् ।

इति षष्ठीपूजाप्रयोगः ।

---

## अथ नामकरणम् ।

तत्र द्वादशेऽहन्येव सूतकनिवृत्तौ कार्यम् । मातापुत्रयोर्द्वादशेऽहन्येव सूत्रकृता शुद्धिविधानात् । पितुरेकादशेऽह्नि शुद्धिमत्त्वेऽपि सहाधिकारिण्या भार्यायाः संस्कार्यस्य चाशुद्धित्वेनैकादशेऽह्न्यनुष्ठानस्यायुक्तत्वात् ।

अथ प्रयोगः—व्यतीपातादिकुयोगरहिते जन्मतो द्वादशे दिवसे मातापुत्रयोः स्नानानन्तरं सूतिकागारं शुद्धं कारयित्वा सूतिकाग्निं बहिर्निष्काश्यौपासनाग्निमानीयोद्धननादिसंस्कृत आयतने संस्थाप्य नामकरणं कुर्यात् ।

कर्ता होमसामग्रीं त्रिवृद्दधं कांस्यपात्रं सुवर्णशलाकां चोपकल्प्य ज्योतिर्विदादिष्टे मुहूर्ते प्राङ्मुख उपविश्य स्वस्य दक्षिणतो गृहीतबालकां भार्यामुपवेश्याऽऽचम्य प्राणानायम्य देशकालौ संकीर्त्य ममास्य कुमारस्य बीजगर्भसमुद्भवैनोनिबर्हणायुर्वर्चोऽभिवृद्धिव्यवहारसिद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थं नामकरणाख्यं कर्म करिष्य इति संकल्प्य गणपतिपूजनं पुण्याहवाचनं मातृकापूजनं नान्दीश्राद्धं चोक्तरीत्या कुर्यात् । अत्र सविता प्रीयतामिति विशेषः ।

तत औपासनाग्निं पार्थिवनामानं ध्यायन्प्रज्वाल्य चत्वारि शृङ्गेति ध्यात्वा समिद्द्वयमादाय श्रद्ध प्रहीत्यादि प्राणायामान्तं कृत्वा नामकरणहोमकर्मणि या यक्ष्य० दि व्याहृत्यन्तमुक्त्वा प्रधानहोमे—धातारं चतसृभिराज्याहुतिभिर्यक्ष्ये । अनुमतिं चतसृभिराज्या० । राकां द्वाभ्यामा० भ्यां यक्ष्ये । सिनीवालीं द्वाभ्यामा० । त्रयोदशाहुतिपक्षे कुहूमेकयाऽऽज्याहुत्येत्यधिकम् । ततोऽङ्गहोमे वरुणं द्वाभ्यामित्यादि व्याहृतिहोमान्तं कृत्वा प्रधानहोमं कुर्यात् ।

ॐ धाता ददातु नो रयिमी० नत्स्वाहा । धात्र इ० । ॐ धाता प्र० म स्वाहा । धात्र इ० । ॐ धाता ददातु नो रयिं श्रा० सः स्वाहा । धात्र इ० । ॐ धाता द० जोषाः स्वाहा । धात्र इदं० । ॐ अनु नोऽद्यानु० यः स्वाहा । अनुमत्या इ० । ॐ अन्विद० षः स्वाहा । अनु० । ॐ अनुम० च्छतु स्वाहा । अनु० । ॐ यस्यामिदं० यच्छतु स्वाहा । अनुमत्या इदं० । ॐ राकामहऽ० सुवच्य५ स्वाहा । राकाया इदं० । ॐ यास्ते राके सु० रराणा स्वाहा । राकाया इदं० । ॐ सिनीवालि पृ० द्वि नः स्वाहा । सिनीवाल्या इदं । ॐ या सुपाणिः० जुहोतन स्वाहा । सिनीवाल्या इदं० । कुहूपक्षे—ॐ कुहूमह५ सुभगां० विधेम स्वाहा । कुह्वा इदं० । ततोऽङ्गहोमजयाद्युपहोमादि स्विष्टकृद्धोमीयपुण्याहादिवाचनान्तं कृत्वा प्रजापतिः श्रीपतामित्युक्त्वा नामकरणं कुर्यात् ।

तत्राऽऽद्यावेकं गुप्तं नाम सुमुहूर्ते मातापितृभ्यां कार्यममुकोऽयमिति । एतच्च नाम मातापितरावेव मौञ्जीबन्धनपर्यन्तं जानीतः । अनन्तरं पुत्रोऽपि जानीते ।

ततः आचारात्तण्डुलान्कांस्याद्यन्यतमे पात्रे प्रसार्य सुवर्णशलाकया श्रीगणपतये नम इति लिखित्वा नामानि लिखेत् । तत्राऽऽद्यं शास्त्रान्तरप्राप्तं कुलदेवतानाम व्याडीश्वरयोगेश्वरीभक्त इति ।

ततः शास्त्रान्तरप्राप्तं जन्मकालिकमासनाम कृष्णोऽनन्त इति यथामासम् । ततो व्यावहारिकं स्वपितृपुरुषवाचि देवतावाचि वा कार्यम् । ततो जन्मनक्षत्रवाचकप्रकृतिकं जातार्थकाणादिप्रत्ययान्तं कृत्तिक इत्यादि । एतानि नामानि लिखित्वा श्रीगणपतये नम इति मातुरुत्सङ्गस्थस्य बालस्य दक्षिणकर्णे उक्त्वा त्वं कुलदेवतानाम्ना व्याडीश्वरयोगेश्वरीभक्तोऽसीति कथयित्वा नाम सुप्रतिष्ठितमस्त्विति भवन्तो ब्रुवन्त्विति विप्रान्वाचयेत् । नाम सुप्रतिष्ठितमस्त्विति विप्राः प्रतिब्रूयुः ।

ततः कुलदेवतानाम्ना व्याडीश्वरयोगेश्वरीभक्तोऽयं भवतः सर्वान्ब्राह्मणानभिवादयत इत्युक्त्वाऽऽयुष्मान्भवतु व्याडीश्वरयोगेश्वरीभक्त इति विप्रैरुक्तेऽस्मै व्याडीश्वरयोगेश्वरीभक्ताय पुण्याहं भवन्तो ब्रुवन्त्विति विप्रान्वाचयेत् । ॐ अस्तु पुण्याहमिति त्रिर्विप्राः । एवमस्मै व्याडी० रीभक्ताय स्वस्त्ययनं भव०तु । अस्मै व्याडीश्व० रीभक्ताय ऋद्धिं भव० तु । इति स्वस्त्ययनर्धिवाचनम् । ॐ अस्तु स्वस्त्ययनम्, ॐ अस्तु

मद्धिरिति प्रतिवचने। मासनाम्ना व्यावहारिकेण नाम्ना नाक्षत्रेण नाम्ना, चामुकोऽसि मासनाम्ना व्यावहारिकेण नाम्ना नाक्षत्रनाम्ना चामुकोऽयं भवतः सर्वान्ब्राह्मणानभिवादयत इत्युक्त आयुष्मान्भवस्वमुकनामाऽयमिति विप्राः प्रतिब्रूयुः। पुण्याहवाचनं त्रिष्वपि समानम्। ततो ब्राह्मणभोजनं भूयसीदक्षिणादानं च विधाय विप्राशिषो गृहीत्वा कर्मसाद्गुण्याय विष्णुं संस्मरेत्। इति पुंसो नामकरणम्।

अथ स्त्रियास्तत्र विशेषः—अस्याः कुमार्या इति संकल्पवाक्यम्। नान्दीश्राद्धे विकल्पः। स्वस्तिवाचनान्ते नामानि लिखेत्। भक्त्यावन्तं कुलदेवतानाम। वामदेवी पद्मावर्तीत्यादिमासनामानि मार्गशीर्षादिक्रमेण। व्यावहारिके नाम दान्तमीकारान्तं वा त्र्यक्षरं समाक्षरं वा कार्यम्। नाक्षत्र तु पूर्ववदेव। नात्र गुह्यं नाम नाममन्त्रेणैव पूजादि वैदिकमन्त्रवर्जं सर्वं पूर्ववत्। इति स्त्रियाः।

इति नामकरणम्।

---

अथ दोलारोहणम्।

जन्मदिवसाद्द्वादशे षोडशे वा दिवसे पुंसः, त्रयोदशे कन्याया अन्यस्मिन्वा ज्योतिःशास्त्रोक्ते शुभकाले यथाचारं कुलदेवतापूजां विधायालंकृत शिशुं हरिद्राद्यलंकृतायां दोलायां मात्रादयः सौभाग्यवत्यः कुलीनाः स्त्रियो योगशायिनं हरिं संस्मृत्य गीतवाद्यादिघोषे क्रियमाणे प्राक्शिरसं शाययेयुः।

इति दोलारोहणम्।

---

अथ दुग्धपानम्।

एकत्रिंशेऽन्यस्मिन्वा शुभे दिवसे कुलदेवतापूजनं विधाय माताऽन्या वा सौभाग्ययुता शिशुं दक्षिणशिरसं प्राक्शिरसं वा धृत्वा शङ्खेन गोक्षीरं पाययेत्।

इति दुग्धपानम्।

---

अथ कर्णवेधप्रयोगः।

कर्णवेधनोक्तज्योतिर्विदादिष्टे शुभे काले पूर्वाह्ण एव गणपतिपूजनं कृत्वा केशवशिवब्रह्मचन्द्रसूर्येन्द्रादिदिग्गीशाश्वासत्यसरस्वतीकुलदेवता गोब्राह्मणान्गुरुंश्च यथाविभवं संपूजयेत्।

ॐ भद्रं कर्णेभिः शृ० यदायुः । इति मातुरुत्सङ्गस्थस्यालंकृतस्य प्राङ्मुखस्योदङ्मुखस्य वा शिशोर्मन्त्रावृत्त्या दक्षिणं वामं कर्णं चाभिमन्त्रयेत । स्त्रिया अप्येवम् ।

ततः शिशोः कुशलेन वेधकेनाङ्गणादौ स्थित्वा सुवर्णाद्यन्यतमसूच्याऽलक्तकाङ्कितप्रदेशे दक्षिणं कर्णं वेधयेत् । एवं वामम् । कुमार्यास्तु पूर्वं वामवेधनं पश्चाद्दक्षिणवेधनम् ।

ततस्तस्मिन्नेव दिने दैवज्ञं वेधकं सौभाग्यवतीः स्त्रियः सुहृदो द्विजांश्च संपूज्य विप्राशिषो गृह्णीयात् । स्त्रीणां नासिकावेधनमपि सुमुहूर्ते कार्यम् ।

इति कर्णवेधप्रयोगः ।

---

अथाऽऽयुर्वर्धापनप्रयोगः ।

कर्ता कृतनित्यक्रियः पुण्याक्षतलाजातपकमङ्गलद्रव्ययुतवारिभिः स्नातः सर्वौषधियुतजलपूरितसुभूषितकलशोदकेन च शिशुं स्नापयित्वा शुक्लाम्बरधरोऽलंकृतः कौतुकमाबध्य प्राङ्मुख उपविश्य स्वस्य दक्षिणतो गृहीतबालया भार्ययोपवेश्याऽऽचम्य प्राणानायम्य देशकालौ संकीर्त्य ममास्य शिशोरायुरभिवृद्धिद्वारा श्रीपर० वर्धापनाख्यं कर्म करिष्य इति संकल्प्य गणपतिपूजनपुण्या० मातृ० नान्दीश्राद्धानि कृत्वोद्धननादिविधिनाऽग्न्यायतनसंस्कारं विधाय तत्र बलवर्धननामानं लौकिकमग्निं प्रतिष्ठाप्य प्रज्वाल्य ध्यात्वा समिद्द्वयमादाय यद्व० मान्तं कृत्वाऽऽयुर्वर्धापनहोमकर्मणि या० व्याहृत्यन्तमुक्त्वा प्रधानहोमे मृत्युंजयं मृत्युंजयमन्त्रेणाष्टोत्तरशतसंख्याभिर्मध्वाज्यदधियुक्तदूर्वाहुतिभिर्यक्ष्ये । अमुकजन्मनक्षत्रदेवतामेकया चर्वाहुत्या यक्ष्ये । अङ्गहोमे वरुणं द्वाभ्यामित्यादि शाट्यायनमुक्त्वा जन्मनक्षत्रोपहोमदेवताश्चैकैकयाऽऽज्याहुत्या यक्ष्ये । अग्निं स्विष्टकृतं पुनश्चैपाहुत्या यक्ष्य इत्यादि । पात्रासादने स्रुवं दर्वीमाज्यस्थालीं प्रणी० प्रो० उपवेषं चरुस्थालीं प्रेक्षणं शूर्पं कृ० मुसल० सल्मिध्मं बर्हिः संमा० अव० आज्यं दूर्वा मधु दधि चेत्यासादयेत् ।

ॐ भद्रं कर्णेभिः शृ० यदायुः । इति मातुरुत्सङ्गस्थस्यालंकृतस्य प्राङ्मुखस्योदङ्मुखस्य वा शिशोर्मन्त्रावृत्त्या दक्षिणं वामं कर्णं चाभिमन्त्रयते । स्त्रिया अप्येवम् ।

ततः शिशोः कुशलेन वेधकेनाङ्गणादौ स्थित्वा सुवर्णाद्यन्यतमसूच्याऽलक्तकाङ्कितप्रदेशे दक्षिणं कर्णं वेधयेत् । एवं वामम् । कुमार्यास्तु पूर्वं वामवेधनं पश्चाद्दक्षिणवेधनम् ।

ततस्तस्मिन्नेव दिने दैवज्ञं वेधकं सौभाग्यवतीः स्त्रियः सुहृदो द्विजांश्च संपूज्य विप्राशिषो गृह्णीयात् । स्त्रीणां नासिकावेधनमपि सुमुहूर्ते कार्यम् ।

इति कर्णवेधप्रयोगः ।

---

अथाऽऽयुर्वर्धापनप्रयोगः ।

कर्ता कृतनित्यक्रियः पुण्याक्षतलाजात्मकमङ्गलद्रव्ययुतवारिभिः स्नातः सर्वौषधियुतजलपूरितसुधूपितकलशोदकेन च शिशुं स्नापयित्वा शुक्लाम्बरधरोऽलंकृतः कौतुकमाबध्य प्राङ्मुख उपविश्य स्वस्य दक्षिणतो गृहीतबालकां भार्यामुपवेश्याऽऽचम्य प्राणानायम्य देशकालौ संकीर्त्य ममास्य शिशोरायुरभिवृद्धिद्वारा श्रीपर० र्थमायुर्वर्धापनाख्यं कर्म करिष्य इति संकल्प्य गणपतिपूजनपुण्या० मातृके० नान्दीश्राद्धानि कृत्वोद्धननादिविधिनाऽग्न्यायतनसंस्कारं विधाय तत्र बलवर्धननामानं लौकिकमग्निं प्रतिष्ठाप्य प्रज्वाल्य ध्यात्वा समिद्द्वयमादाय अन्व० यान्तं कृत्वाऽऽयुर्वर्धापनहोमकर्मणि या० व्याहृत्यन्तमुक्त्वा प्रधानहोमे मृत्युंजयं मृत्युंजयमन्त्रेणाष्टोत्तरशतसंख्याभिर्मध्वाज्यदध्यक्तदूर्वाहुतिभिर्यक्ष्ये । अमुकजन्मनक्षत्रदेवतामेकया चर्वाहुत्या यक्ष्ये । अङ्गहोमे वरुणं द्वाभ्यामित्यादि राष्ट्रभृदन्तमुक्त्वा जन्मनक्षत्रोपहोमदेवताश्चैकैकयाऽऽज्याहुत्या यक्ष्ये । अग्निं स्विष्टकृतं हुतशेषाहुत्या यक्ष्य इत्यादि । पात्रासादने स्रुवं दर्वीमाज्यस्थालीं प्रणी० प्रो० उपवेषं चरुस्थालीं मेक्षणं शूर्पं कृ० मुसलू० सलमिध्मं बर्हिः संमा० अव० आज्यं दूर्वा मधु दधि चेत्यासादयेत् ।

एवं पात्राण्यासाद्य ब्रह्मवरणादिचरुकल्पेन चरुं श्रपयित्वा स्रुवदर्व्यौ संमृज्याऽऽज्यसंस्कारं कुर्यात्। तत्र पर्यग्निकरणकाले चरुदूर्वामधुदधिभिः सहाऽऽज्यस्य पर्यग्निकरणमिति विशेषः।

ततः परिधीन्परिधाय शृतं चरुमभिघार्योदगुद्वास्य बर्हिषि निधाय मधुना स्थाल्याज्येन दध्ना च दूर्वा अभ्यज्य चरोरुत्तरतो बर्हिषि निधाय परिषेकादिव्याहृतिहोमान्तं कृत्वा प्रधानहोमं कुर्यात्।

ॐ त्र्यम्बकं यजा० मृतात्स्वाहेति मध्वाज्यदध्यक्तदूर्वाहुतीरष्टोत्तरशतं जुहुयात्। ततः स्रुवेण दर्व्यामुपस्तीर्य चरोर्मध्यादङ्गुष्ठपर्वमात्रमवदाय तथैव पूर्वार्धादवदाय स्रुवेणाभिघार्य स्थालीगतं हविः प्रत्यनक्ति।

ततो बालकजन्मनक्षत्रदेवतायाः पुरोनुवाक्यां याज्यां चोक्त्वाऽन्ते स्वाहाकारमुक्त्वा जुहुयात्। तत्राग्निर्नः पातु कृत्तिका इत्यारभ्य नक्षत्रदेवतानां क्रमेण याज्यानुवाक्याः। तत्राग्निर्नः पात्विति वाक्यचतुष्टयं पुरोनुवाक्या। यस्य भान्तीति तदग्रिमं वाक्यचतुष्टयं याज्या। प्रजापते रोहिणीति वाक्यचतुष्टयं पुरोनुवाक्या। रोहिणी देव्युदगादिति वाक्यचतुष्टयं याज्या। एवमग्रेऽपि क्रमेण पुरोनुवाक्या याज्याश्च द्रष्टव्याः।

तत्र यद्बालकजन्मनक्षत्रं तदीयपुरोनुवाक्यायाज्यासंज्ञकमन्त्राभ्यां होमः कार्यः। अग्निः प्रजापतिः सोमो रुद्रोऽदितिर्बृहस्पतिः सर्पाः पितरोऽर्यमा भगः सविता त्वष्टा वायुरिन्द्राग्नी मित्र इन्द्रो निर्ऋतिरापो विश्वे देवा विष्णुर्वसवो वरुणोऽजैकपादहिर्बुध्न्यः पूषाऽश्विनौ यम इति क्रमेण सप्तविंशतिर्देवताः। एतन्मध्ये या जन्मनक्षत्रदेवता तन्मन्त्राभ्यां होमं कृत्वा वारुणीहोमादिराष्ट्रभृदुपहोमान्तोपहोमाञ्जुहुयात्। उपहोमेषु यज्जन्मनक्षत्रं तत्संबन्ध्युपहोमाञ्जुहुयात्। आर्द्रामघामूलनक्षत्राणां क्रमेण रुद्रपितृनिर्ऋतिदेवत्यत्वात्तद्धोमान्ते उदकस्पर्शः कार्यः। एवमार्द्रामघानक्षत्रेष्वुपहोमान्तर्गतयो रुद्राय स्वाहा पितृभ्यः स्वाहेति द्वयोरुपहोमयोरप्युदकस्पर्शः। ततः स्वजन्मनक्षत्रेष्वपठितोपहोमान्हुत्वाऽङ्गहोमादिहुतशेषेण स्विष्टकृद्धोमः। दूर्वाणां नैव स्विष्टकृन्न त्रिवृद्धोमः। ततो गुरुं देवेभ्यो नम इति देवांश्च संपूज्याग्निं विप्रांश्च पूजयेत्। ततः प्रतिमास्वक्षतपुञ्जेषु वा क्रमेण वक्ष्यमाणदेवता आवाहयेत्।

ॐ त्र्यम्बकं य० मृतात् । मृत्युंजयाय० मृत्युंजयमावाहया-म्यीति मृत्युंजयमावाह्य ॐ या दिव्या आपः० याश्च कूप्या या० भवन्तु । पूर्वाषाढानक्षत्रदेवताभ्योऽद्भ्यो नमः पूर्वाषाढानक्षत्रदेवता अप आ० । अमुककुलदेवतायै० अमुककुलदेवतामावा० । जन्मनक्षत्राय नमो जन्मनक्षत्रमावा० । विघ्नपाय० विघ्नपमा० । देवाय प्रजापतये० देवं प्रजापतिमा० । भानवे० भानुमा० । विघ्नेशाय० विघ्नेशमा० । मार्कण्डेयाय मुनये० मार्कण्डेयं मुनिमा० । अश्वत्थाम्ने० अश्वत्थामानमा० । बलये० बलिमा० । व्यासाय० व्यासमा० । हनूमते० हनूमन्तमा० । विभीषणाय० विभीषणमा० । कृपाय० कृपमा० । परशुरामाय० परशुराममा० । प्रह्लादाय० प्रह्लादमा० । षष्ठ्यै नमः षष्ठीमा० । इति प्रतिमास्वक्षतपुञ्जेषु वाऽऽवाह्य षोडशोपचारैः सपूज्य नमस्कुर्यात् । षष्ठ्यै दधिभक्तनैवेद्यम् ।

ततस्तदुत्तरतः कलशमभिषेकार्थं स्थापयेन्मही द्यौः पृथिवीत्यादि । तत्र वरुणमावाह्य पूजयेत् ।

अस्मिञ्जन्मदिने भक्त्या पूजितोऽसि मया गुरो ।
प्रपन्नः शरणं त्वाऽहं दीर्घमायुः प्रयच्छ मे ॥ इति गुरोः प्रार्थना ।
अस्मिञ्जन्मदिने भक्त्या भो देवाः पूजिता मया ।
शरणं वः प्रपन्नोऽस्मि दीर्घमायुः प्रयच्छत ॥ इति देवानां प्रार्थना ।
अस्मिञ्जन्मदिने भक्त्या पूजितोऽसि मयाऽनल ।
प्रपन्नः शरणं त्वाऽहं दीर्घमायुः प्रयच्छ मे ॥ इत्यग्नेः प्रार्थना ।
मृत्युंजय महादेव पूजितोऽस्मिन्दिने मया ।
शरणं त्वां प्रपन्नोऽस्मि दीर्घमायुः प्रयच्छ मे ॥ इति मृत्युंजयस्य ।
अस्मिन्दिने पूजिताऽसि जन्मनक्षत्रदेवते ।
प्रपन्नः शरणं त्वाऽहं दीर्घमायुः प्रयच्छ मे ॥ इति जन्मन०दे० ।

कुलरक्षणकर्तृत्वाद्विश्रुता कुलदेवता ।
अस्मिन्दिने पूजिता त्वं दीर्घायुष्यं प्रयच्छ मे ॥ इति कुलदेवतायाः ।
भो जन्मभट नक्षत्र अस्मिञ्जन्मदिने मया ।
भक्त्या संपूजितमसि दीर्घमायुः प्रयच्छ मे ॥ इति जन्मनक्षत्रस्य ।

विद्याधिप कुबेर त्वं यक्षाधिप महामते ।
मह्यं प्रयच्छ दीर्घायुर्धनं धान्यं च वर्धय ॥ इति वित्तपस्य ।
अस्मिञ्जन्मदिने देव पूजितोऽसि प्रजापते ।
दीर्घमायुः प्रयच्छ त्वं पुत्रान्पौत्रांश्च देहि मे ॥ इति प्रजापतेः ।
अस्मिन्दिने मया भक्त्या भानो त्वं पूजितो ह्यसि ।
दीर्घमायुः प्रयच्छ त्वं मां च तेजस्विनं कुरु ॥ इति भानोः ।
त्वं पूजितोऽसि विघ्नेश दीर्घमायुः प्रयच्छ मे ।
अविघ्नेन तु कार्याणि सिद्धिं नय गजानन ॥ इति विघ्नेशस्य ।
आयुष्प्रद महाभाग सोमवंशसमुद्भव ।
तपोधन मुनिश्रेष्ठ मार्कण्डेय नमोऽस्तु ते ॥
मार्कण्डेय महाभाग प्रार्थये त्वां कृताञ्जलिः ।
चिरजीवी यथा त्वं भोस्तथा मां कुरु वै मुने ॥ इति मार्कण्डेयस्य ।
द्रोणपुत्र महाभाग चन्द्रतेजःसमप्रभ ।
भव त्वं मम वरदो ह्यश्वत्थामन्नमोऽस्तु ते ॥ इत्यश्वत्थामप्रार्थना ।
दैत्येन्द्रकुलसंभूत बले दाता हरेः पुरा ।
प्रपन्नः शरणं त्वाऽहं दीर्घमायुः प्रयच्छ मे ॥ इति बलिप्रार्थना ।
भविष्यं सांप्रतं चैव व्यतीतं ज्ञातवान्मुने ।
पराशरात्समुद्भूत त्वं व्यासाऽऽयुष्प्रदो भव ॥ इति व्यासप्रार्थना ।
अञ्जनीगर्भसंभूत कपीन्द्र सचिवोत्तम ।
रामप्रिय नमस्तुभ्यं हनूमन्रक्ष मां सदा ॥ इति हनूमत्प्रार्थना ।
विभीषण नमस्तुभ्यं लङ्काधिप महामते ।
आयुरारोग्यमैश्वर्यं देहि पौलस्त्यनन्दन ॥ इति विभीषणप्रार्थना ।
द्विजेन्द्र भारताचार्य सर्वशास्त्रविशारद ।
शरणं त्वां प्रपन्नोऽस्मि कृप त्वं करुणां कुरु ॥ इति कृपप्रार्थना ।
रेणुकेय महावीर्य क्षत्रियान्वयनाशन ।
आयुः प्रयच्छ मे राजञ्जामदग्न्य नमोऽस्तु ते ॥ इति परशु० ।

वैष्णवेन्द्रासुरेन्द्र त्वं प्रह्लादाद्यार्चितो मया।
दीर्घमायुः प्रयच्छ त्वं सदाऽऽह्लादं च देहि मे॥ इति प्रह्लादम्
शक्तिस्त्वं सर्वदेवानां षष्ठिके पूजिता मया।
दीर्घमायुः प्रयच्छ त्वं बलं पुष्टिं च वर्धय॥ इति षष्ठ्याः।

ततस्तिलगुडसंमिश्रमञ्जल्यर्धमितं दुग्धं गृहीत्वा—

सतिलं गुडसंमिश्रमञ्जल्यर्धमितं पयः।
आयुष्यस्याभिवृद्ध्यर्थं पिबामि द्विजसंनिधौ॥ इति प्राश्नीयात्।

ततो ब्राह्मणेभ्यस्तिलान्क्षीरं घृतं गुडं च दत्त्वा सौभाग्यवतीभिः पुत्रवतीभिः स्त्रीभिर्नीराजितः आचाराद्यथाविभवं स्वजनबन्धुसुहृत्पूजां स्ववाहनपूजां च कृत्वा स्थापितकलशोदकेन ब्राह्मणैरभिषेकं कारयित्वा स्थापितदेवतानामुत्तरपूजां विधाय प्रतिमा चेत्ताम् आचार्याय दत्त्वा ब्राह्मणान्सुवासिनीश्च भोजयित्वा तेभ्य आशिषो गृहीत्वा स्वजनबन्ध्वादिभिः सह भुञ्जीयात्। एतच्च जन्मनक्षत्रे जन्मदिने वाऽऽद्यसंवत्सरान्प्रतिमासं कार्यम्। तत ऊर्ध्वं प्रतिसंवत्सरम्। बाल्यावस्थायां पित्रादिभिस्तत्कार्यम्। तस्यायोग्यत्वात्। योग्यतायां तु स्वस्याऽऽयुर्वर्धापनं स्वेनैव कार्यम्। संकल्पवाक्ये प्रार्थनाश्लोकेषु च मम मह्यमित्यादि यथायोग्यमूहः कर्तव्यः।

इत्यायुर्वर्धापनप्रयोगः।

---

अथ सूर्याद्यवलोकननिष्क्रमणयोः प्रयोगः।

कर्ता द्वादशेऽहनि सावने चतुर्थे मासि वा शुक्लपक्षे दुर्योगरहिते शुभे काले सभार्यः सशिशुः कृताभ्यङ्गस्नानः प्राङ्मुख उपविश्याऽऽचम्य प्राणानायम्य देशकालौ संकीर्त्य ममास्य शिशोरायुरभिवृद्धिबीजगर्भसमुद्भवैनोनिबर्हणद्वारा श्रीपरमेश्वरप्रीत्यर्थं सूर्याद्यवलोकनं निष्क्रमणं च सह करिष्य इति संकल्प्य गणपतिपूजनादि नान्दीश्राद्धान्तमुक्तरीत्या कुर्यात्। तत्र सविता प्रीयतामिति विशेषः।

ततः प्राच्यादिदिक्पालानां चन्द्रसूर्ययोर्दिशां च नाममन्त्रैर्यथाक्रमं पूजां कृत्वा ब्राह्मणान्संभोज्य शिशुमलंकृत्य सूर्यस्य चन्द्रस्य धेनोश्च दर्शनं कारयित्वा मन्त्रान्पठेत्।

दिक्पालाना च सूर्येन्द्वोः प्राच्यादीना दिशा तथा ।
निक्षेपार्थमिमं दद्मि ते त्वा रक्षन्तु सर्वदा ॥
अप्रमत्तं प्रमत्त वा दिवारात्रमथापि वा ।
रक्षन्तु सततं सर्वे देवाः शक्रपुरोगमाः ॥

इति शिशुरक्षणार्थं देवान्संप्रार्थ्य द्विजज्ञातिबान्धवैः पुरंध्रीभिर्मङ्गलतूर्यघोषेण च सहितो दर्पणस्त्रक्शस्यपुष्पाक्षतदीपमालाध्वजलाजामत्स्यमङ्गलाष्टकद्रव्यपुरःसर विष्णुशिवगणेशाद्यन्यतमालयं गत्वा तत्र देवं संपूज्य नानोपहारान्निवेद्य गोमयानुलिप्ते चतुरस्रे देशे धान्यानि निधाय तत्र शिशुमुपवेश्य मन्त्रेण रक्षा कुर्यात् ।

ॐ ह्रौं ॐ जू ॐ सः ॐ भूः ॐ भुवः ॐ स्वः ॐ त्र्यम्बकं य० मामृतात् । ॐ स्वः ॐ भुवः ॐ भूः ॐ सः ॐ जू ॐ ह्रौं ॐ इत्येवंरूप मृतसञ्जीवनमन्त्र पठन्विभूत्याऽक्षतैर्वा मूर्ध्नि ललाटे च रक्षां कुर्यात् । ततो भूतेशानयोः पूजन कृत्वाऽपूपाद्युपहारान्समर्प्य शिशु भक्ष्यादिभिस्तोषयित्वा विप्राशिषो गृहीत्वा शिशुना सहितो देव प्रणम्य देवतायतन प्रदक्षिणं परीत्य स्वगृहमागच्छेत् । ततो ब्राह्मणेभ्यो दक्षिणां दत्त्वा सभोज्य कर्मसाद्गुण्याय विष्णु सस्मरेत् ।

इति सूर्याद्यवलोकननिष्क्रमणयोः प्रयोगः ।

---

अथ भूम्युपवेशनम् ।

कर्ता पञ्चमे मासे शुक्लपक्षे शुभे दिवसे देशकालौ संकीर्त्यास्य शिशोरायुष्याद्यभिवृद्धिद्वारा श्रीपर० र्थं भूम्युपवेशनं करिष्य इति संकल्प गणेशपूजनं पुण्याहवाचन कृत्वा वराहपृथिवीगुरुदेवद्विजान्पूजयित्वा भूमिमुपलिप्य तत्र रङ्गवल्लीमण्डलं कृत्वा शङ्खतूर्यादिमङ्गलघोषे क्रियमाणे पुण्याहशब्देन नीराजितं बालं तस्मिन्मण्डल उपवेशयेत् । तत्र मन्त्राः—

रक्षैनं वसुधे देवि सदा सर्वगतं शुभे ।
आयुष्प्रमाणं निखिलं निक्षिपस्व हरिप्रिये ॥
अचिरादायुषस्त्वस्य ये केचित्परिपन्थिनः ।
जीवितारोग्यवित्तेषु निर्दहस्वाचिरेण तान् ॥

धारिण्यशेषभूतानां मातस्त्वमधिका ह्यसि ।
अजरा चाप्रमेया च सर्वभूतनमस्कृता ॥
त्वमेवाशेषजगतां प्रतिष्ठा वा तथा ह्यसि ।
कुमारं पाहि मातस्त्वं ब्रह्मा तदनुमन्यताम् ॥

इत्येतैर्मन्त्रैर्भूमावुपवेश्य ब्राह्मणान्संपूज्य बालं पुत्रवतीभिः सुवासिनीभिर्नीराज्याऽऽशिषो वाचयित्वा ब्राह्मणान्संभोज्य कर्मसाद्गुण्याय विष्णुं संस्मरेत् ।

इति भूम्युपवेशनम् ।

---

अथान्नप्राशनप्रयोगः ॥

तत्र जन्मतः षष्ठे मासेऽष्टमाद्यन्यतमे समे मासे वा शुक्लपक्षे ज्योतिर्निर्दिष्टे मुहूर्ते कार्यम् । कुमार्यास्तु सप्तमाद्यन्यतमे विषमे मासि कार्यम् ।

कर्ता प्राङ्मुख उपविश्य स्वस्य दक्षिणतो भार्यां संस्कार्यं चोपवेश्याऽऽचम्य प्राणानायम्य देशकालौ संकीर्त्य ममास्य शिशोर्मातृगर्भमलप्राशनेनोनिबर्हणबीजगर्भसमुद्भवैनोनिबर्हणाद्यब्रह्मवर्चसतेजइन्द्रियायुरभिवृद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थमन्नप्राशनाख्यं कर्म करिष्य इति संकल्प्य गणपतिपूजनपुण्याहवाचनमातृकापूजननान्दीश्राद्धान्युक्तरीत्या कुर्यात् । तत्र सविता प्रीयतामिति विशेषः ।

ततः शुचिनामाऽयमग्निरिति ध्यायन्नौपासनाग्निं प्रज्वाल्य ध्यात्वा समिद्द्वयमादाय अद्य पूर्वोच्चरित इत्यादि प्राणायामान्तं कृत्वाऽन्नप्राशनहोमकर्मणि या यक्ष्यमाणा इत्यादि व्याहृत्यन्तमुक्त्वाऽङ्गहोमे वरुणं द्विरित्यादि । पात्रासादने दधि मधु घृतं पायसमन्नमाज्यासादनोत्तरं सादयेत् । ततो ब्रह्मवरणादि त्रिवृदन्नहोमीयपुण्याहवाचनान्तं कुर्यात् । अस्मिन्पुण्याहवाचने प्रजापतिः प्रीयतामिति विशेषः । नात्र प्रधानहोमः । जयादयः कृताकृताः ।

ततः स्वदक्षिणतो मातुरुत्सङ्गस्थ प्राङ्मुखं शिशुं सुवर्णदर्व्या रौप्यदर्व्या वा रुक्मस्योपपूर्वकमासादितं दधिमधुघृतमिश्रमिति त्रिवृत्प्रतिमन्त्रं प्राशयति । ॐ भूस्त्वयि दधामीति प्रथमम् । ॐ भुवस्त्वयि दधामीति द्वितीयम् । ॐ सुवस्त्वयि दधामीति तृतीयम् । ॐ अपां त्वौषधी-

नाऽऽरसं प्राशयामि• शिवास्त आप ओषधयः सन्त्वनमीवास्त आप ओषधयो भवन्त्वित्यासादितं दधि मधु घृतमासादिते पायसे निक्षिप्य काञ्चनाद्यन्यतमे पात्रे तत्पायसं निक्षिप्य मङ्गलघोषपूर्वकं तादृशद्रव्यै• कवारं प्राशयति। ततो यथेष्टं प्राशयति।

ततस्तन्मुखं प्रक्षाल्य तं भूमावुपवेश्य तदग्रे वस्त्रशस्त्रपुस्तकादिशि• ल्पादि विन्यस्य स्वेच्छया शिशुर्यत्स्पृशेत्साऽस्य जीविकेति परीक्षां कुर्यात्। इदं च कुमार्या अप्यमन्त्रकं होमरहितं कार्यम्।

इत्यन्नप्राशनप्रयोगः।

---

## अथ चूडाकर्मप्रयोगः॥

जन्मतस्तृतीये वर्षे पञ्चमे सप्तमे चोदगयने शुक्लपक्षे ज्योतिर्विदादिष्टे शुभे काले कार्यम्। कर्ता प्राङ्मुख उपविश्य स्वस्य दक्षिणतो भार्यां संस्कार्यं चोपवेश्याऽऽचम्य प्राणानायम्य देशकालौ संकीर्त्यास्य कुमा• रस्य बीजगर्भसमुद्भवैनोनिबर्हणायुर्वर्चोभिवृद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थं चूडाकर्म करिष्य इति संकल्प्य गणपतिपूजनपुण्याहवाचनमातृकापूजन• नान्दीश्राद्धाङ्कुरारोपणान्युक्तरीत्या कुर्यात्। अत्र केशिनः प्रीयन्तामिति विशेषः।

ततः सभ्यनामाऽयमग्निरित्यनुसंदधत्औपासनाग्निं प्रज्वाल्य ध्यात्वा समिद्भ्रमादाय अद्य एहीत्यादि प्राणायामान्तं कृत्वा चूडाकर्महोमकर्मणि या यक्ष्यमाणा इत्यादि व्याहृत्यन्तमुक्त्वाऽङ्गहोमे वरुणं द्विरित्यादि। पात्रासादने दर्व्याज्यस्थाली प्रणी० प्रोक्ष० शीता अपो बहिरुष्णी• कृता अपः साग्रकुशचतुष्टयं क्षुरमुप० संमा० इध्मं बर्हिराज्ञ० आज्य• मिति पात्राण्यासादयेत्।

ततो प्रस्तरणादि त्रिवृदन्नपुण्याहवाचनान्तं कुर्यात्। अत्र प्रजापतिः प्रीयतामिति विशेषः। नात्र प्रधानहोमः। जयादयो वैकल्पिकाः।

ततोऽग्नेः पश्चात्स्वस्थाने कुमारमुपवेश्य स्वयं तद्दक्षिणत उपविश्याग्नेः कुमारस्य चोत्तरतो घृतानडुद्गोमयां मातरं घृतानडुद्गोमयं कंचन ब्रह्म•

चारिणं चोपवेश्याऽऽसादिता अत्युष्णा अप आसादितासु शीतासु मिश्रयित्वा ता आदाय—ॐ आप उन्दन्तु० वर्चस इति ताभिर्दक्षिणं गोदानमार्द्रीकरोति। गवि पृथिव्यां दीयते स्नापार्थमङ्गं गोदानम्। तानि मनुष्ये चत्वारि। ॐ ओषधे त्रायस्वैनम्। आसादितैकं कुशमूर्ध्वाग्रं तत्र निदधाति। ॐ स्वधिते मैनꣳ हिꣳसीः। तत्राऽऽसादितं क्षुरं निदधाति। ॐ देवश्रूरेतानि प्रवपे। इत्योषधिना सह दक्षिणप्रदेशस्थान्केशान्वपति। एवमवशिष्टगोदानत्रयेऽपि। तत्र वपनमन्त्रेषु विशेषः—

ॐ येनावपत्सविता क्षुरेण सोमस्य राज्ञो वरुणस्य विद्वान्।
तेन ब्रह्माणो वपतेदमस्योर्जे मध्याय्या वर्चसा सꣳसृजाथ॥

इति पश्चिमप्रदेशस्थकेशवपने मन्त्रः।

ॐ येन पूषा बृहस्पतेरग्नेरिन्द्रस्य चाऽऽयुषेऽवपत्।
तेन तेऽहं वपाम्यमुकशर्मन्। इत्युत्तरप्रदेशस्थकेशवपने।
ॐ यथा ज्योक्च सुमना असत्। ज्योक्च सूर्यं दृशे॥

इति पूर्वप्रदेशस्थकेशवपने।

वपनानन्तरं नापितेन यथाकुलधर्मं यथाप्रवरं वा चूडाः कारयेयुर्वपनकर्तारः। नापितस्तदनुसारेण चूडाः कुर्यात्। एका चेन्मध्ये। द्वे चेन्मध्ये पुरस्ताच्च। तिस्रश्चेन्मध्ये पश्चात्पुरस्ताच्च। पञ्च चेत्प्रतिदिशं मध्ये च। भृगवः केचन सशिखाः। केचन मुण्डा एव।

ततः कुमारस्य बन्धुजनस्तस्मिञ्छकृत्पिण्डे तान्केशानन्तर्भूतान्कृत्वा

ॐ यत्र पूषा बृहस्पतिः सविता सोमोऽग्निः।

तेभ्यो निधानं बहुधा व्यैच्छन्नन्तरा द्यावापृथिवी अपः सुवः॥

इति गोष्ठ उदुम्बरे दर्भस्तम्बे वाऽवटं खात्वा तस्मिन्सकेशं शकृत्पिण्डं प्रक्षिप्य मृदा प्रच्छादयति।

ततः कृतशुद्धस्नानः कुमार आचार्यादीन्प्रणमेत्। तत आचार्यः पुण्याहवाचकेभ्यो ब्राह्मणेभ्यो दक्षिणां दद्यात्। नापिताय सर्पिष्मधुर-

मोदनं ददाति। ततो ब्राह्मणभोजनं भूयसीदक्षिणादानं च कृत्वा विप्राशिषो गृहीत्वा विष्णुं संस्मरेत्।

इति चूडाकर्मप्रयोगः।

---

अथोपनयनम्।

तथाऽऽचार्यकर्तृकमाणवकसन्निधस्वसमीपनयनम्। तदेव प्रधानम्। तत्फलं च द्विजत्वसिद्धया वेदाध्ययनाधिकारः।

अथ प्रयोगः—उपनयनं चिकीर्षुराचार्यो यथोक्तविधिना कार्पासनिर्मितमेकं यज्ञोपवीतं प्रादेशमात्रं समचतुरश्रमश्मानमहतं वस्त्रद्वयं क्षौमं कार्पासं वा कौपीनं तद्बन्धनार्थं क्षौमं सूत्रमुत्तरीयार्थं काषायं वस्त्रमजिनं वा त्रिवृता मौञ्जी मेखला प्रवरसरूयग्रन्थियुता यथोक्तलक्षणं दण्डमपच्छिन्नाग्राः प्रादेशमात्रीः सप्त पालाशीः समिधोऽनियतसरूयैर्दर्भैर्निर्मितमासनार्थं कूर्चं कांस्यव्यतिरिक्तं भिक्षापात्रं गां चोपकल्पयेत्। होमादिसामग्रीं च।

कृतनित्यक्रिय आचार्य आचम्य प्राणानायम्य देशकालौ संकीर्त्य ममोपनेतृत्वाधिकारसिद्ध्यर्थं कृच्छ्रत्रयात्मकं प्रायश्चित्तमप्युक्तप्रत्याम्नायेनाहमाचरिष्य इति संकल्प्य तच्चरेत्।

एवं देशकालसंकीर्तनपूर्वकमुपनेयत्वाधिकारसिद्ध्यर्थं कृच्छ्रत्रयात्मकं प्रायश्चित्तं गोदानप्रत्याम्नायेनाहमाचरिष्य इति वटुना संकल्पं कारयित्वा तत्कारयेत्।

तत आचार्यो मम गायत्र्युपदेशाधिकारार्थं द्वादशसहस्रं द्वादशाधिकसहस्रं वा गायत्रीजपमहं करिष्य इति संकल्प्य—ॐ अग्न आयूꣳषि प० स्पर्चयः। इत्यग्निपवित्रसंज्ञकान्पवमानमन्त्रान्सकृज्जपित्वा गायत्र्या विश्वामित्र ऋषिः सविता देवता गायत्री छन्दः, जपे वि० । ॐ तत्सवि० इत्यादिति सकृज्जपित्वा ऋष्यादिस्मरणपूर्वकं संकल्पितपक्षानुसारेण यथाकालं गायत्रीजपं कुर्यात्। गायत्रीमन्त्रे श्रुतावेव ऋष्याद्युत्कीर्तनादत्राऽऽवश्यकम्। तेनाप्यन्यत्रानावश्यकत्वं सूचितम्।

तत आचार्यो ज्योतिर्विदादिभ्योऽवधारितादुपनयनदिनात्पूर्वेद्युस्तद्दिने वा सर्वं नित्यकर्म विधाय माङ्गलिकं स्नानं माङ्गल्यकेपं च कृत्वा सोत्तरच्छदे रङ्गवल्लिकायुक्ते पीठे प्राङ्मुख उपविश्य स्वदक्षिणतः कृत-

इति संप्रार्थ्य वंशपात्रं स्वयं गृहीत्वाऽविच्छिन्नदीपकलशं भार्यया ग्राहयित्वा घण्टादिवाद्यघोषेण सुहृद्भिः सब्राह्मणः स्वस्ति न इन्द्रो वृद्ध० दधातु । अग्नौ देवा वसवः० स्वस्ति । ऋतधामा इन्द्रेणै० सवीराः । इति मन्त्रान्पठन्सुहृद्गृहे गत्वा प्रतिष्ठापनदेशमुल्लेख्य रङ्गवल्ल्या-दिभिरलंकृत्य तत्र तण्डुलान्प्रक्षिप्य तेषु तद्वंशपात्रं नय प्रजामिति प्रतिष्ठाप्य तत्रैवोत्तरतः कलशं भार्यया निधाप्य पञ्चोपचारैः संपूज्य स्थापितदेवताप्रीत्यर्थं यथाविभवं ब्राह्मणान्सुवासिनीश्च संभोज्य तेभ्यो यथाविभवं वस्त्रादि दद्यात् । ततो नीराजिताभ्यां दंपतिभ्यां सुहृदो वस्त्रादि दद्युः । यावन्मण्डपोद्वासनं प्रत्यहं स्थापितदेवताः पूजयेत् ।

तत उपनयनदिने पञ्चप्रभृतिसमसंख्याकान्ब्राह्मणान्संभोज्य तैः पुण्याहस्वस्त्ययनर्द्धीर्वाचयित्वेन्द्रः प्रीयतामिति वदेत् ।

ततः कृतमङ्गलस्नानमलंकृतं कुमारं मात्रा सह भोजयेत् । अष्टौ ब्रह्मचारिणोऽपि भोजयेदित्याचारः । ततः कृतभोजनस्य कुमारस्य नापितेन केशान्वापयित्वा कुमारं संस्नाप्य द्विराचाम्य [illegible] गन्धा-दिभिरलंकृत्याहतं वासस्तूष्णीं परिधाप्योपवेश्य द्विराचमनं कारयेत् । अत्राऽऽचमनं पौराणमेव । तत्र केशवादिभिर्नामभिरुदकं पिबेदित्या-दिकं तत्तदङ्गस्पर्शरूपमन्यतो ज्ञेयम् । ततो वेद्यामुपवेश्योक्तरीत्याऽऽय-तनं स्थण्डिलं वा वेदीं विधाय तत्संस्कारं पूर्ववत्कृत्वा लौकिकाग्निं श्रोत्रियागाराद्वाऽऽहृतं वा समुद्भवनामानमग्निं प्रतिष्ठाप्य प्रज्वलय्य ध्यात्वा समिद्ग्रहणादाय शुद्ध एहीत्यादि प्राणायामान्तं कृत्वोपनयनहोमकर्मणि या वक्ष्यमाणा इत्यादि अन्वाधानं कुर्यात् । विशेषप्रधानहोमे—आयु-र्दा अग्ने हविषा जुषाण इत्याज्याहुत्या यक्ष्ये । आयुर्दा देवमग्नेरूपाऽऽज्याहुत्या यक्ष्ये । अङ्गहोमे—इमं मे वरुणमित्यादि । पात्रासादनेऽप्यानमहतं वस्त्र-द्वयमुत्तरीयार्थं काषायं रङ्कवाजिनं वा मौञ्जीं मेखलां दण्डं दर्भान्कूर्च-माज्यस्थालीं प्रणीताप्रणयनं प्रोक्षणीपात्रमुपयमनाङ्गारनिरूहणार्थं पात्रं कौपीनं तद्बन्धनार्थं क्षौमं सूत्रं बौधायनोक्तविधिना निर्मितमुपवीतं भिक्षापात्रं च प्रयुज्य गां समीपे संस्थाप्य संमार्गदर्भानवज्वलनदर्भान्ब-र्हिरिध्ममाज्यं सह पात्राणि समिधश्चाऽऽसादयेत् । ततो ब्रह्मवरणादि परिधिपरिधानान्तं कृत्वाऽग्रेश्चरतस्तिष्ठतः कुमारस्य पश्चादासादिते सूत्रमाध्याऽऽसादितं कौपीनं परिधाप्य दर्भेषूपवेश्य द्विराचमनं कारयेत् ।

ततः कुमारस्तत्रैवोपविष्टः ॐ देवस्य त्वा स० ग्यामाददे । इत्यासादितमुपवीतमादाय ॐ उद्वयं त० रुत्तमम् । इत्युपवीतमादित्याय प्रदर्श्य ॐ यज्ञोपवीतं प० स्तु तेजः । इति दक्षिणं च हस्तमुद्धार्य धारयेत् ।

शिष्टास्त्विदानीं बौधायनोक्तविधिना यज्ञोपवीतनिर्माणासंभवेन सिद्धयज्ञोपवीतं सवान्मन्त्रैर्वेष्टाः कृत्वा तद्धारयन्ति । ततो द्विराचम्याऽग्न्यायतनादैशान्यां दिशि द्विराचम्याग्रे गत्वा ब्रह्माग्न्योर्मध्येनाऽऽचार्यस्य दक्षिणतो गत्वा तत्र प्राङ्मुख उपविश्य तमन्वारभते । अथाऽऽचार्यः कुमारेणान्वारब्धः परिषेकादिव्याहृतिहोमान्तं कृत्वा प्रधानहोमं कुर्यात् ।

ॐ आयुर्दा अग्ने० हिमष० स्वाहा । आयुर्देऽग्नय इ० । ॐ आयुर्दा देवज० नयाः० स्वाहा । आयुर्दे देवायाग्नय इ० । इति प्रधानाहुतिद्वयं जुहुयात् ।

तत इमं मे वरुणेत्यादि स्विष्टकृदन्तं कृत्वाऽग्नेरुत्तरत उत्तरपरिधिसंधिमग्रेणाऽऽसादितमश्मानं निधाय कुमारमग्रेणाभिमानीय ॐ आ तिष्ठेममश्मानमश्मेव० पृतनायतः । इति दक्षिणेन पादेनाश्मन उपरि तं स्थापयति । ततः कुमारस्याग्नेऽहतापोषमानं तस्माद्देशाच्छिरःसार्धं पूर्वं परिधापितं वासः प्रज्ञातं निधाय

ॐ या अकृन्तन्नवयन्या अतन्वत याश्च देवीरन्तानभितो ददन्त ।
तास्त्वा देवीर्जरसा संव्ययन्त्वायुष्मानिदं परिधत्स्व वासः ॥
परिधत्त धत्त वाससैनं शतायुषं कृणुत दीर्घमायुः ॥
बृहस्पतिः प्रायच्छद्वास एतत्सोमाय राज्ञे परिधातवा उ ।
जरां गच्छासि परिधत्स्व वासो भवा कृष्टीनामभिशस्तिपावा ।
शतं च जीव शरदः सुवर्चा रायश्च पोषमुपसंव्ययस्व ॥

इत्यासादितयोर्वाससोर्मध्य एकं वासः परिधापयति ।

ॐ परीदं वासोऽधिधाः स्वस्तये भूरापीनामभिशस्तिपावा ।
शतं च जीव शरदः पुरूचीर्वसूनि चार्यो विभजासि जीवन् ॥

इति परिहितवाससं कुमारमभिमन्त्रयते । वसूनि चार्यो विभजास्स-जीवन्निति प्रमादपाठः । ततस्तमुपवेश्य द्विराचमनं कारयेत् ।

ॐ या दुरिता परिबाधमाना शर्मवरूथे पुनती न आगात् ।

प्राणापानाभ्यां बलमावहन्ती स्वसा देवानाᳬ सुभगा मेख-
लेयम् ॥

इत्यासादितया मेखलया कुमारं नाभिदेशे त्रिः प्रदक्षिणं परिव्ययति। ततो नाभेरुत्तरतो मेखलायास्त्रिगुण ग्रन्थि कृत्वा दक्षिणतो नाभेः परि-कर्षति।

ॐ मित्रस्य चक्षुर्धरुणं धरीयस्तेजो यशस्वि स्थविरᳬ समिद्धम्।

अनाहनस्यं वसनं जरिष्णु परीदं वाज्यजिनं धत्स्वासावदितिस्ते कक्षां बध्नातु वेदस्यानुवक्तवे मेधायै श्रद्धाया अनूक्तस्यानिराकरणाय ब्राह्मणे ब्रह्मवर्चसाय।

इति कुमाराय कृष्णाजिनमुपरिष्टाल्लोमोर्ध्वग्रीवमुत्तरीयं करोति। यदा वास एवोत्तरीयं तदा मन्त्रनिवृत्तिः। अजिनपदलोपो वा। यत्र यत्र मन्त्रेऽसावित्यशब्दस्तत्र सम्बुद्ध्यन्तं संस्कार्यस्य शर्मान्तं व्यावहारिकं नाम ग्राह्यम्। ततः ॐ इन्द्राय त्वा परिददे। इति कुमारं ब्रूयात्। परिदेहीति कुमारः। अथाऽऽचार्यः ॐ परीममिन्द्र ब्रह्मणे महे श्रोत्राय दध्मसि। अथैनं जरिमाणये ज्योक्चक्षुत्रे अधिजागरत् ॥

इति कुमारमिन्द्राय परिददाति। अथाग्रेणाग्निं कुमारं दक्षिणतो नीत्वाऽपरेणाग्निमुदङ्मुखमुपवेश्य

ॐ त्वयि मेधां त्वयि प्रजां त्वय्यग्निस्तेजो दधातु। त्वयि मे० यीन्द्र इन्द्रियं द०। त्वयि मे० यि सूर्यो भ्राजो दधातु।

इति त्रिभिर्हुतोच्छेषमाज्यमर्धं सकृत्कुमारं प्राशयति। अवशिष्टेनार्धेन स्रुवपलाशसमिधामभ्यञ्जनं परिग्रहणं प्रायश्चित्तहोमं च कुर्यात्।

ॐ योगे योगे तव० मूतये। इममग्न आयुषे० शासत्। इति द्वाभ्यां प्राशनं कुमारं समीक्षते। ततः कुमारः प्राशनान्तमाचमनं कुर्यात्।

अथाऽऽचार्य आचान्तं कुमारमात्मानमुपस्पर्श्य

ॐ अग्निष्टे नरदो अग्निदृष्ट्वा यत्रानश्वका जरसं तनूनाम्।

॥ पुत्रासो यत्र पितरो भवन्ति मा नो मध्यारीरिषतायुर्गन्तोः ॥

इति कुमारमभिमन्त्रयते। अथ कुमार आचार्यं ब्रह्माणं च बहिष्कृत्य पात्रसहितमग्निं प्रदक्षिणं परिक्रामति। आचार्यः—

ॐ आगन्त्रा समगन्महि प्रसमृत्युं युयोतन।

अरिष्टाः संचरेमहि स्वस्ति चरितादिह स्वस्त्या गृहेभ्यः ॥

इत्यासीन एव प्रदक्षिणं परिक्रामन्तं कुमारमभिमन्त्रयते।

ॐ ब्रह्मचर्यमागामुप मा नयस्व ब्रह्मचारी भवानि देवेन सवित्रा प्रसूतः।

इति कुमारं वाचयति। को नामासीति कुमारं पृच्छति। अथ कुमारः स्वस्य शर्मान्तं व्यावहारिकं नामग्रं च नामाऽऽचष्टे यथा देवदत्तशर्मा कार्तिकेयोऽस्मीति। आचार्यः ॐ स्वस्ति देव सवितरहमनेन देवदत्तशर्मणा कार्तिकेनोदृचमशीय। इति कुमारस्य नामनी गृह्णाति। शं नो देवी० तु नः। उभावद्भिर्मार्जयेते। उभयोर्मन्त्रः।

अथ प्रधानोपनयनम्। आचार्यो ज्योतिर्विदं संपूज्याग्नेर्दक्षिणतः प्राङ्मुख उपविश्याग्नेराग्नेय्यां दिशि स्वपुरोभाग आत्माभिमुखं कुमारमुपवेश्योभयोर्मध्ये ज्योतिर्विदा स्वस्तिकलाञ्छित उदग्दशेऽन्तःपटे धृते ब्राह्मणैर्मङ्गलसूक्तपद्यपाठे क्रियमाणे स्वकुलदेवतादीनां चिन्तनं पटस्थस्वस्तिकावलोकनं च कुर्वन्नासीत। एवं कुमारोऽपि। तत आचार्योऽन्तःपटे निष्कासित उपनयनं कुर्यात्। तच्चेत्थम्—कुमारस्य दक्षिणमंसं स्वदक्षिणेन हस्तेन सव्यहस्तेन सव्यमंसं तूष्णीं किंचिदन्वारभ्य ॐ भूर्भुवः सुवः, ॐ तत्सवितुर्व० यात्। देवस्य त्वा सवि० स्ताभ्यामुपनयेऽमुकशर्मन्, इति कुमारस्य दक्षिणं च हस्तमात्मन आभिमुख्येनाऽऽनीय समासीनः कुमारं स्वसमीपे सम्मुखं करोति। इदं प्रधानोपनयनं ब्रह्मचारी न विस्मरेत्। अत्र च यत्नेन दक्षिणया समक्ता अग्रे तेजस्विविद्याधा आशिषो दद्युराचारात्। आचार्यः—

अग्निष्टे हस्तमग्रभीत्सोमस्ते हस्तमग्रभीत्सविता ते हस्तमग्रभीत्सरस्वती ते हस्तमग्रभीत्पूषा ते हस्तमग्रभीद्बृहस्पतिस्ते हस्तमग्रभीन्मित्रस्ते हस्तमग्रभीद्वरुणस्ते हस्तमग्रभीत्त्वष्टा ते हस्तमग्रभीद्धाता ते हस्तमग्रभीद्विष्णुस्ते हस्तमग्रभीत्प्रजापतिस्ते हस्तमग्रभीत्।

इति कुमारस्य दक्षिणं हस्तं साङ्गुष्ठं दक्षिणेन हस्तेन गृह्णाति।

ॐ सविता त्वाऽभिरक्षतु मित्रस्त्वमसि धर्मणाऽग्निराचार्यस्तव देवेन सवित्रा प्रसूतो बृहस्पतेर्ब्रह्मचारी भवापोऽशान समिध आधेहि कर्म कुरु मा दिवा स्वाप्सीरिति कुमारं संशास्ति। संशासनं शिक्षणम्। अपामशनं मूत्रोत्सर्गादावाचमनम्। समिधा आधानं प्रातः सायमग्निका-

…अरिष्टाः संचरेमहि स्वस्ति चरितादिह स्वस्त्या गृहेभ्यः ॥

इत्यासीन एव प्रदक्षिणं परिक्रामन्तं कुमारमभिमन्त्रयते।

ॐ ब्रह्मचर्यमागामुप मा नयस्व ब्रह्मचारी भवानि देवेन सवित्रा प्रसूतः।

इति कुमारं वाचयति। को नामासीति कुमारं पृच्छति। अथ कुमारः स्वस्य शर्मान्तं व्यावहारिकं नाक्षत्रं च नामाऽऽचष्टे यथा देवदत्तशर्मा कार्तिकेयोऽस्मीति। आचार्य. ॐ स्वस्ति देव सवितरहमनेन देवदत्तशर्मणा कार्तिकेनोपस्थपशीय। इति कुमारस्य नामनी गृह्णाति। शं नो देवी० तु नः। उभावद्भिर्मार्जयेते। उभयोर्मन्त्रः।

अथ प्रधानोपनयनम्। आचार्यो ज्योतिर्विदं संपूज्याग्नेर्दक्षिणतः प्राङ्मुख उपविश्याग्नेराग्नेय्यां दिशि स्वपुरोभाग आत्माभिमुखं कुमारमुपवेश्योभयोर्मध्ये ज्योतिर्विदा स्वस्तिकेनाङ्कित उदग्दशेऽन्तःपटे धृते ब्राह्मणैर्मङ्गलसूक्तपद्यपाठे क्रियमाणे स्वकुलदेवतादीनां चिन्तनं पटस्थस्वस्तिकावलोकनं च कुर्वन्नासीत। एवं कुमारोऽपि। तत आचार्योऽन्तःपटे निष्काशित उपनयनं कुर्यात्। तच्चेत्थम्—कुमारस्य दक्षिणमंसं स्वदक्षिणेन हस्तेन सव्यहस्तेन सव्यमंसं तूष्णीं किंचिदन्वारभ्य ॐ भूर्भुवः सुवः, ॐ तत्सवितुर्व० यात्। देवस्य त्वा सव० स्ताभ्यामुपनयेऽमुकशर्मन्, इति कुमारस्य दक्षिणं पादुकात्मन आभिमुख्येनाऽऽनीय समासीनः कुमारं स्वसमीपे समुपनयति। इद प्रधानोपनयनं ब्रह्मचारी न विस्मरेत्। अत्र च यथेष्टं दक्षिणया समक्षा अग्रे तेजस्विविप्रस्याद्या आशिषो दद्युराचाराद्। आचार्यः—

अग्निष्टे हस्तमग्रभीत्सोमस्ते हस्तमग्रभीत्सविता ते हस्तमग्रभीत्सरस्वती ते हस्तमग्रभीत्पूषा ते हस्तमग्रभीद्बृहस्पतिस्ते हस्तमग्रभीन्मित्रस्ते हस्तमग्रभीद्वरुणस्ते हस्तमग्रभीत्त्वष्टा ते हस्तमग्रभीद्धाता ते हस्तमग्रभीद्विष्णुस्ते हस्तमग्रभीत्प्रजापतिस्ते हस्तमग्रभीत्।

इति कुमारस्य दक्षिणं हस्तं साङ्गुष्ठं दक्षिणेन हस्तेन गृह्णाति।

ॐ सविता त्वाऽभिरक्षतु मित्रस्त्वमसि धर्मणाऽग्निराचार्यस्तव देवेन सवित्रा प्रसूतो बृहस्पतेर्ब्रह्मचारी भव। अपोऽशान समिध आधेहि कर्म कुरु मा दिवा स्वाप्सीरिति कुमारं संशास्ति। संशासनं शिक्षणम्। अपामशनं मूत्रोत्सर्गादावाचमनम्। समिध आधानं प्रातः सायमग्निका-

र्यम् । कर्म संध्योपासनादि । दिवा निद्राभावं चकुर्वित्यर्थः । वाढमिति कुमारोऽङ्गी कुर्यात् ।

आचार्यो दक्षिणेन हस्तेन कुमारस्य तूर्ष्णीं दक्षिणांसस्योपरि सामीप्येन पृष्ठतः प्रदेश्य क्रमेणावाचीनमभिमृश्य

ॐ मम हृदये हृदयं तेऽस्तु । मम चित्तं चित्तेनान्वेहि । मम वाचमेकमना जुषस्व । बृहस्पतिस्त्वा नियुनक्तु मह्यम् । मामेवानुसंरभस्व । मयि चित्तानि सन्तु ते । मयि सामीच्यमस्तु ते । मह्यं वाचं नियच्छतात् ।

इति कुमारस्य हृदयमभिमृशति । अथ उपस्पृश्य

ॐ प्राणानां ग्रन्थिरसि समाविस्रसः ।

तथैव नाभिदेशमभिमृशति । अथ उपस्पृश्य

ॐ भूर्भुवः स्वः सुप्रजाः प्रजया भूयासं सुवीरो वीरैः सुवर्चा वर्चसा सुपोषः पोषैः सुमेधा मेधया सुमना मनोभिरिभिः ।

इति कुमारमभिमन्त्र्य

ॐ भूरसि स्वाऽग्नौ पृथिव्यां वाचि ब्रह्मणि ददेऽमुकशर्मन् ।

भुवो यजुषु त्वा वायावन्तरिक्षे प्राणे ब्रह्मणि ददेऽमुकशर्मन् ।

सुवः सामसु त्वा सूर्ये दिवि चक्षुषि ब्रह्मणि ददेऽमुकशर्मन् ।

इष्टतस्ते मिथोऽसान्यमुकशर्मन् ।

अनलस्य ते मिथोऽसान्यमुकशर्मन् ।

इदं वत्स्यावः प्राण आयुषि वत्स्यावः प्राण आयुषि वसामुकशर्मन् ।

इति पुनः कुमारमभिमन्त्रयते । ॐ अग्निरायुष्मान्स० सोम आयुष्मान्स० यज्ञ आयुष्मान्स द० ब्रह्म आयु० म० देवा आयुष्मन्त० । एतैः पञ्चभिः पर्यायैर्दक्षिणेन हस्तेन कुमारस्य दक्षिणं हस्तं साङ्गुष्ठं गृह्णाति ।

ॐ आयुष्टे वि० मिने । अग्नौ पृथिव्यां मातरिश्व वायावन्तरिक्षे सूर्ये दिवि यात् स्वस्ति मिर्वायुरादित्यश्चन्द्रमा आपो नु संचरन्ति यात् स्वस्तिमनुसंचरामुकशर्मन् । प्राणस्य ब्रह्मचार्यभूरमुकशर्मन् ।

इति कुमारस्य दक्षिणे कर्णे जपति ।

ॐ आयुर्दा अ० दिमम् । अग्नौ पृथिव्या० र्धमुरमुकशर्मन् ।

इति कुमारस्योत्तरे कर्णे जपति ।

ॐ मेधां म इन्द्रो ददातु मेधां देवी सरस्वती ।

मेधां मे अश्विनावुभावाधत्तां पुष्करस्रजौ ।

इति कुमारस्य मुखं स्वमुखेन सह संनिधाय जपति । कषकादिदेवेभ्यस्त्वां परिदद इति कुमारं ब्रूयात् । परिददीति कुमारः । तत आचार्यः—

कषकाय त्वा परिददाम्यन्तकाय त्वा परिददाम्यघोराय त्वा परिददामि गदाय त्वा परिददामि यमाय त्वा परिददामि मखाय त्वा परिददामि वशिन्यै त्वा परिददामि पृथिव्यै त्वा सवैश्वानरायै परिददाम्यद्भ्यस्त्वा परिददाम्योषधीभ्यस्त्वा परिददामि वनस्पतिभ्यस्त्वा परिददामि द्यावापृथिवीभ्यां त्वा परिददामि सुभूताय त्वा परिददामि ब्रह्मवर्चसाय त्वा परिददामि विश्वेभ्यस्त्वा देवेभ्यः परिददामि सर्वेभ्यस्त्वा भूतेभ्यः परिददामि सर्वाभ्यस्त्वा देवताभ्यः परिददामि ।

इति कुमारं कषकादिभ्यः परिददाति । परिदानानन्तरं कुमारेणाऽऽसादितसमिधां पलाशसमिधां घृतेनाभ्यञ्जनं कारयित्वोपनयनाग्नावभ्याधापयति मन्त्रान्वाचयति च ।

कुमारः—ॐ अग्नये समिधमाहार्षं बृहते जातवेदसे । यथा त्वमग्ने समिधा समिध्यस एवं मां मेधया प्रज्ञया प्रजया पशुभिर्ब्रह्मवर्चसेनान्नाद्येन समेधय स्वाहा ।

एकां समिधं घृतेनाभ्यक्तामभ्यादधाति । अग्नय इदमिति त्यागः । तथैव द्वे समिधौ द्वितीयेऽभ्याधाने । तत्राग्नये समिधमाहार्षमित्यूहः । तृतीयेऽभ्याधानेऽवशिष्टाः समिधः । तत्राग्नये समिध आहार्षमित्यूहः । त्यागस्तु पूर्ववदेवोभयत्रापि । ततः शुश्रूषणादि संध्योपासनान्तं कर्म समाप्य तदारभ्य त्रिरात्रं द्वादशरात्रं संवत्सरं वाऽक्षारलवणादि वर्जयेदित्यादीनि व्रतानि कुमारायोपदिशति ।

ततः—ॐ अग्ने व्रतपते व्रतं च० ष्यताम् । अग्निमुपतिष्ठते । ॐ वायो व्रतपते० वायुम् । आदित्य व्रतपते० आदित्यम् । व्रतानां व्रतपते० व्रतपतिम् । अत्र गुरवे वरं ददाति । गुरो वरं ते ददामि । गुरुरत्राऽऽचार्यः । पितुराचार्यत्वे तु कुमारेणान्यस्मात्सविप्रहेणाऽऽनीता गौर्वरार्थे देया । गोरभावे निष्क्रयीभूतं द्रव्यं देयम् । आचार्यस्तूष्णीं वरं प्रति गृह्णाति । देवस्य त्वेति समन्त्रकमिति केचित् । ततः ॐ उदायुषा० अतु । कुमारं वाचयन्नुत्थापयति । सूर्याय त्वां परिदद इति

ब्रूयात्। परिदेहीति कुमारः। आचार्यः ॐ सूर्यैष ते पुत्रस्तं ते परिददामि। इति सूर्याय कुमारं परिददाति।

ततो ब्रह्मचार्याचार्यो वा ॐ तच्चक्षुर्देव० दृशे। इति सूर्यमुपतिष्ठते।

आचार्यः ॐ अग्निष्ट आयुः प्रतरां कृणोत्वग्निष्टे पुष्टिं प्रतरां दधात्विन्द्रो मरुद्भिरिह ते दधात्वादित्यस्ते वसुभिरादधातु। कुमाराय पूर्वासंदितमूर्ध्वाग्रं दण्डं प्रदाय भिक्षाचर्यं चरेति ब्राह। ततो ब्रह्मचारी ओमित्युक्त्वा प्रथमं मातरं भिक्षेत। भवति भिक्षां देहीति। ततो मित्रकुलेषु। पुरुषस्य भवान्भिक्षां ददात्विति वदेत्। तद्भिक्षितं द्रव्यमाहृत्य भैक्षमिदं भो इत्याचार्याय निवेदयेत्। आचार्यस्तत्सुभैक्षमिति प्रतिगृह्णाति। ततः—

ॐ यस्य ते प्रथमवास्यꣳ हरामस्तं त्वा विश्वे अवन्तु देवाः।
तं त्वा भ्रातरः सुहृदो वर्धमानमनु जायन्तां बहवः सुजातम्॥

कुमारस्य पूर्वनिहितं वासो गृह्णाति। ततः पूर्वोक्तरीत्या ब्रह्मदक्षहोमं कृत्वा ब्रह्मव्रतं कुमारायोपदिशेत्। इक्षुविकारलवणमाषमुद्गादिधान्यमधुमांसाशनं मञ्चकाद्युपरिशयनं मृन्मयेन जलपानं मृन्मयपात्रे कांस्यपात्रे च भोजनं शूद्राद्युच्छिष्टदानं दिवाशयनं च न कार्यम्। उभौ कालौ भिक्षाचर्यमुदकुम्भाहरणं सायमुपक्रम्य प्रत्यहमुभौ कालौ प्रत्यहं सायमेव वाऽग्निकार्यं कर्तव्यमिति। ब्रह्मचारी बाढमित्युक्त्वाऽग्ने व्रतपत इत्यादिभिर्देवतोपस्थानं कृत्वा त्र्यहव्रतं स्वी कुर्यात्।

तत आचार्यो यथाचारं गायत्रीपूजनं विधाय गायत्र्युपदेशार्थमपरेणाग्निमासादितं कूर्चमुदगग्रं निधाय

राष्ट्रभृदस्याचार्यासन्दी मा त्वद्योषम्।

तस्मिन्प्राङ्मुख उपविशेत्। ततो ब्रह्मचारी तूष्णीमादित्याय नमस्काराञ्जलिं कृत्वाऽऽचार्यस्य दक्षिणं पादं सव्यान्वारब्धेन दक्षिणेन हस्तेनाधस्तादुपरिष्टाच्चावमृश्य पाणी व्यत्यस्य ताभ्यां सकुरु(क्षि)कौ स्य पादौ धारयेत्। इदमुपसंग्रहणम्। अत्राऽऽचार्येण गुप्तं नाम कुमारायोपांशु कथनीयम्। कुमारस्तेनोपांशूच्चारितेन नाम्नाऽऽचार्यमभिवादयेत्। एतन्नामाविज्ञाने तु व्यावहारिकेण नाम्नोपांश्वेवाभिवादयेत्। तत्राभिवादनप्रकार इत्थम्—दक्षिणं बाहुं सव्यान्यारब्धं श्रोत्रसमं प्रसार्यामुकप्रवरान्वितामुकगोत्रोत्पन्नोऽमुकशर्माऽहं भो अभिवादय इत्युपांशूच्चार्य शिरोवनतिपूर्वकं निष्ठाचार्यं नमस्कुर्यात्। इदमभिवादनम्।

ततं आचार्येणाऽऽयुष्मान्भवामुकशर्मा ३ इति प्लुतान्त्यस्वरोच्चारणेनाऽऽशीर्वादे प्रयुक्ते आसीनो विनयावनतो भूत्वा सर्ववेदारम्भार्थत्वेन सावित्र्युपदेशं वाञ्छन्नध्येषणारूपं मन्त्रद्वयमेकश्रुत्या पठेत्। अधीहि भो इत्युक्त्वा सावित्रीं भो अनुब्रूहीति। तत उत्तानीकृतवामपाण्यङ्गुष्ठाङ्गुलीन्यङ्मुखीकृतदक्षिणपाण्यङ्गुष्ठाङ्गुलीभिर्दृढसंयोगिनीः कृत्वा दक्षिणाङ्के निक्षिप्याऽऽसीत। तत आचार्यः- ॐ गणानां त्वा गण० सादनम्। कुमारमभिमन्त्रयते। ततस्तमञ्जलिं स्वपाणिभ्यामादाय भूस्तत्सवितुर्वरेण्यम्। भुवो भर्गो देवस्य धीमहि। सुवर्धियो यो नः प्रचोदयात्। भूर्भुवस्तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि। सुवर्धियो० यात्। भूर्भुवः सुवस्तत्स० ण्यं भ० महि। धियो० यात्। सावित्रीमेवंप्रकारेण पच्छोऽर्धर्चशोऽनवानमिति प्राङ्मुखं कुमारं वाचयति। तैत्तिरीयाणां गायत्र्यारम्भेणैव ऋग्यजुःसामात्मकवेदत्रयाध्ययनाधिकारो भवति। ततः कर्माङ्गदेवताप्रीत्यर्थं गन्धताम्बूलादिभिर्ब्राह्मणपूजनं तेभ्यो भूयसीदक्षिणादानं च कृत्वाऽमे तेजस्विन्नित्यादिभिर्मन्त्रैराशिषो ग्राह्याः। ततः कर्माङ्गदेवताप्रीत्यर्थं शतद्वयं पञ्चाशद्वाऽन्यशक्तौ दश वा ब्राह्मणान्भोजयित्वा तेभ्यो दक्षिणां दद्यात्। ततः प्रमादादिति कर्मसाद्गुण्याय विष्णुं स्मरेत्।

## अथ मध्याह्नसंध्या।

ततः कालप्राप्तां मध्याह्नसंध्यां कुर्यात्।

तस्याः प्रयोगः—शुचौ देशे दर्भानास्तीर्य तूष्णीमेव तेषु प्राङ्मुख उपविश्य कुशपाणिस्तूष्णीं त्रिराचम्य द्विरोष्ठौ परिमृज्य सकृदुपस्पृश्य सव्यं पाणिं पादौ प्रोक्ष्य शिरश्चक्षुषी नासिके श्रोत्रे हृदयमालभ्य प्रत्यालम्भमप उपस्पृशेदित्येवं द्विवारमाचम्य

ॐ भूः ॐ भुवः ॐ सुवः ॐ तत्स० भूर्भुवः सुवरोमिति ब्रह्मविष्णुशिवान्क्रमेण ध्यायन्पूरककुम्भकरेचकक्रमेण त्रिरभ्यसेत्। इति प्राणायामत्रयं कृत्वा संध्यां ध्यायेत्। मध्याह्नसंध्यां युवतिं श्वेतां श्वेतवस्त्रां श्वेतगन्धानुलेपनां त्रिनेत्रां वरशूलपरश्वभयधारिणीं वृषवाहनां रुद्ररूपिणीं सावित्रीं ध्यायामीति सूर्यभेदेन ध्यात्वा देशकालौ संकीर्त्य श्रीपरमेश्वरप्रीत्यर्थं मध्याह्नसंध्योपास्तिं करिष्य इति संकल्पं कृत्वा ॐ आपो

हि ष्ठा म० च न', इति कुशोदकैर्मध्यमानामिकाङ्गुष्ठैरङ्गान्तेऽर्धर्चान्ते पादान्ते वा मार्जनं कुर्यात्।

तत आपो वा इद५० राप ओमिति अपोऽभिध्यायेत्। तत आपः पुनन्तु पृ० ब्रह्म स्वाहा। इत्युदकं पिबति। ततो द्विराचम्य पुनर्मार्जनं कुर्यात्। तत्र मन्त्राः—

ॐ दधिक्राव्णो अ० षत्। आपो हि ष्ठा म० च नः। हिरण्यवर्णाः शु० निधत्त। पवमानः सुव० पुनातु। द्रुपदादिवे० मेनसः। ततो गोकर्णवत्कृते दक्षिणे हस्ते जलमादाय तत्र श्वासं त्यजन्नासिकाग्रे पापपुरुषं स्मरन्द्रुपदादिवे० तु मेनस इत्यनेन पापपुरुषमुत्सार्य तज्जलमनवलोकयन्स्वस्य वामभागे भूमावेव क्षिपेत्।

तत उत्थाय सूर्याभिमुख आदित्याभेदेन संध्यामभिध्यायन्हस्ताभ्यां जलमादाय ॐ भू० सुवः ॐ तत्सवितुर्व० दयादिति तज्जलमभिमन्त्र्य दक्षिणनासापुटेन तत्राऽऽदित्यमण्डलस्थं तेजः समागतं विभाव्य समस्तव्याहृतिसहितां गायत्रीं संततामुक्त्वा सवित्रे सावित्र्या इदमर्घ्यं न ममेति सूर्याभिमुख ऊर्ध्वं जलमञ्जलिनोत्क्षिपञ्जलेऽर्घ्यं दद्यात्। तत ओमापो ज्यो० सुवरोमिति तत्तेजो वामनासापुटेनाऽऽकृष्य स्वस्थाने आगतं विभावयेत्। एवं पुनर्जलमादाय द्विवारमर्घ्यं दत्त्वाऽऽत्मानं प्रदक्षिणीकुर्वन्नसावादित्यो ब्रह्मेत्यात्मानं परिषिच्याऽऽसीनोऽप उपस्पृशेत्।

ततो द्विराचम्य प्राणानायम्यापः स्पृष्ट्वा ॐ अपक्रामन्तु भूता० समारभ इति भूतान्युत्सार्य दर्भैरुदकेनाऽऽसनदेशं प्रोक्ष्य तत्र दर्भाद्यासनमास्तीर्य ॐ भू० पृथ्वि त्वया धृता लो० त्वं च० चाऽऽसनमित्यासन उपविश्य पूर्ववत्प्राणायामत्रयं कृत्वा ॐ भू० सुवः, इत्यात्मानमभ्युक्षेत्।

तत्सवितुर्हृदयाय नमः, हृदये। वरेण्यं शिरसे स्वाहा, शिरसि। भर्गो देवस्य शिखायै वषट्, शिखायाम्। धीमहि कवचाय हुम्, उरसि। धियो यो नः नेत्रत्रयाय वौषट्, नेत्रभ्रूमध्येषु। प्रचोदयात् अस्त्राय फट्, करतलास्फोटनेनास्त्रं प्राच्यादि-दिक्षु। अयं च न्यासः कृताकृतः। आयातु वरदा देवी अ० ब्रह्मवादिनीमावाहयामि, इत्येतैरावाह

गायत्रिया गायत्री छन्दो विश्वामित्र ऋषिः सविता देवताऽग्निर्मुखं ब्रह्मा शिरो विष्णुर्हृदयं रुद्रः शिखा पृथिवी० योपनयने विनियोगः, इत्यृष्यादि स्मृत्वा मौनी चापल्यरहितोऽभाषमाणो नासाग्रदृष्टिरुन्नत-गात्र एकाग्रचित्तो देवस्य स्वप्रकाशस्य सवितुः श्रीसूर्यस्य वरेण्यं वरणीयं भर्गस्तेजो धीमहि ध्यायेम यो नो धियोऽस्माकं बुद्धीः प्रचो-दयात्स्वरूपे प्रेरयतीत्यर्थं मनस्यनुसंदधदुपांश्वष्टोत्तरशतमष्टाविंशतिं वा यथाशक्त्यनवच्छिन्नपाठधर्मेण गायत्र्या जपं कुर्यात् । जपसमाप्तौ पुनः षडङ्गन्यासान्कुर्यात् ।

मध्यसंध्याप्रयुक्तेन गायत्रीजपनेन च ।
अष्टाष्टशतजप्येन रुद्रात्मा प्रीयतां रविः ॥

इति जपं निवेदयेत् । ततः सकृदाचम्य प्राणानायम्य ॐ उद्वयं तम० उदुत्यं जा० चित्रं देवाना० तच्चक्षु०-य उदगा० हंसः शुचि-षदित्येतैरूर्ध्वबाहुरादित्यमुपतिष्ठते । उत्तमे शिखरे० सल्लोकम् । घृणिः० रोमिति संध्यां विसर्जयेत् । अन्तश्चरसि० रोम् । इत्यात्मानमुप-तिष्ठते ।

ततः संध्यायै नमो गुरुभ्यो० मातापितृभ्यां० इत्यभिवाद्य सकृदेव पूर्ववदाचम्य प्राणानायम्य विष्णुं संस्मरेत् ।

इति मध्याह्नसंध्या ।

---

## अथ सायंसंध्या ।

पूर्ववदाचमनप्राणायामौ कृत्वा सायंसंध्यां वृद्धां कृष्णां कृष्णवस्त्रां कृष्णगन्धानुलेपनां शङ्खचक्रगदापद्मधरां गरुडवाहनां विष्णुरूपिणीं सरस्वतीं ध्यायामीति सूर्याभेदेन ध्यात्वा देशकालसंकीर्तनाद्यघमर्षणा-न्तं कृत्वा अग्निश्च मा० ताम् । यदह्ना पा० श्वा । अह० नौ । सत्ये ज्यो० मि स्वाहा इत्युदकं पीत्वाऽऽचम्य पुनः प्रणवव्याहृतिगा-यत्र्यपाद्यैर्मार्जयित्वा पाप्मानमुत्सार्य प्रत्यङ्मुख उपविश्यैव सूर्याभेदेन सरस्वत्यभिधां संध्यां ध्यायन्नर्घ्यत्रयं भूमावेव पूर्ववद्दद्यात् ।

तत्र सवित्रे सरस्वत्या इदमर्घ्यं न ममेत्यर्घ्यदाने विशेषः । ततः पूर्ववत्प्रदक्षिणीकृत्याऽऽचमनप्राणायामौ कृत्वा अपक्रामन्त्वित्यादिवि-

---

+ प्रणवादिसमस्तव्याहृतिपूर्वकसंततां गायत्रीमित्यर्थः ।

धिन्तः प्रत्यङ्मुखो गायत्रीजपं कृत्वा पूर्ववदुत्तरन्यासं कुर्यात् । ततः—

सायंसंध्याप्रयुक्तेन गायत्रीजपनेन च ।
अष्टाष्टशतजप्येन विष्ण्वात्मा प्रीयतां रविः ॥

इति जपं निवेद्य संध्याविसर्जनं विधायोपस्थानं कुर्यात् । इमं मे । तत्त्वा यामि । यच्चिद्धि ते । यत्किंचेदं । कितवासो । इत्यादित्यं प्रत्यङ्मुख उपस्थाय य।८ सदा स० स्तवो नम इति संध्यामुपस्थाय नमः प्रतीच्यै दिशे याश्च दे० स्यश्च नम इति प्रतीचीं दिशं तदधिपतिं तद्वासिदेवांश्चोपस्थाय नम उदीच्यै दिश इत्यादिस्तत्तन्मन्त्रैस्तत्तदुपस्थानं कुर्यात् । नमो गङ्गायमुनयोरित्येतेन मुनीनुपतिष्ठेत । ततः संध्यायै नम इत्यादि विष्णुस्मरणान्तं कुर्यात् ।

इति सायंसंध्या ।

---

अथ प्रातःसंध्या ।

पूर्ववदाचमनप्राणायामौ कृत्वा प्रातःसंध्यां कुमारीं रक्तां रक्तवस्त्रां रक्तमाल्यां रक्तगन्धानुलेपनां पुस्तकाक्षकमण्डलवजिनकरां हंसवाहनां ब्रह्मरूपिणीं गायत्रीं ध्यायामीति सूर्याभिदेवं ध्यात्वा देशकालसंकीर्तनादयभिध्यानान्तं कृत्वा सूर्यश्च मामन्युश्च म० द्रात्रिया पा० रात्रिस्तद० सूर्ये ज्यो० मि स्वाहा इत्युदकं पीत्वाऽऽचम्य प्रणवव्याहृतिगायत्र्यायैर्मार्जयित्वा पापपुरुषमुत्सार्य तिष्ठन्प्राङ्मुखः सूर्याभिदेवं गायत्र्यभिधां संध्यां ध्यायञ्जलिनाऽर्घ्यत्रयं जलमध्य एव दद्यात् । तत्र सवित्रे गायत्र्या इदमर्घ्यं न ममेति त्यागः । ततः प्रदक्षिणादि न्यासान्तं पूर्ववत्कुर्यात् । ततः—

प्रातःसंध्याप्रयुक्तेन गायत्रीजपनेन च ।
अष्टाष्टशतजप्येन ब्रह्मात्मा प्रीयतां रविः ॥

इति जपं निवेद्य संध्यां विसृज्य मुकुलितकर आदित्यमुपतिष्ठेत । मित्रस्य च० मित्रो ज० प्रसमित्र० इत्यादित्यमुपस्थाय य।८ सदेति संध्यामुपस्थाय नमः प्राच्यै दिश इत्यादि विष्णुस्मरणान्तं सायंसंध्यावत्कुर्यात् ।

इति प्रातःसंध्या ।

---

अथाग्निकार्यप्रयोगः ।

सायंसंध्योत्तरमाचम्य प्राणानायम्य देशकालौ संकीर्त्य श्रीपरमेश्वरप्रीत्यर्थं सायमग्निकार्यं करिष्य इति संकल्प्याग्निं समिध्य प्रज्वाल्य ध्यायेत् ।

अत्राग्न्यायतनसंस्कारपरिस्तरणयोर्विकल्पः । ततो यथा इ तद्० आयुः, इति सोदकेन पाणिनाऽग्निं प्रदक्षिणं परिसमूहेत् । ततोऽदित इत्यादिभिः परिषेकं कृत्वाऽष्टौ पलाशसमिधो गृहीत्वा शुद्धोदकेन प्रोक्ष्य भूः स्वाहाऽग्नय इ० । भुवः स्वा० वायव० । सुवः स्वा० सूर्याय० । भूर्भुवः सुवः स्वा० प्रजाप०। ॐ एषा तेऽग्ने० महि स्वाहा, अग्नय इ० । ॐ मेधां म इन्द्रो० सजो स्वाहा, इन्द्राय सरस्वत्या अश्विभ्यां चेदं० । ॐ अप्सरासु च या० न्मनः । दैवीं० पतन्० स्वाहा मेधायाः इदं० । ॐ आ मां मेधा० सुपस्तात् स्वाहा मेधाया इ० । ततः पूर्ववत्परिसमुह्यादितेऽन्वमꣳस्था इत्येतैरुत्तरपरिषेकं कृत्वोपस्थानं कुर्यात् ।

ॐ यत्ते अग्ने तेज० यासम् । यत्ते अग्ने वर्च० । यत्ते अग्ने हर० । मयि मे० दधामिस्ते०। मयि० यीन्द्र इ० । मयि० यि सूर्यो० इत्येतैरग्निमुपतिष्ठते । ततो भस्म धृत्वाऽग्निं संपूज्य श्रद्धां मेधामित्यग्निं संप्रार्थ्य प्रमादादिति विष्णुं संस्मृत्य कर्मेश्वरायार्पयेत् । एवं प्रातरुक्तरीत्या प्रातःसंध्यां विधाय प्रातरग्निकार्यं कुर्यात् ।

इत्यग्निकार्यम् ।

---

ततं उक्त प्रकारेण स्वसंनिहितानां पितृमात्रादीनामुपसंग्रहणमभिवादनं च कार्यम् ।

अथोपनयनाग्निनाशप्रायश्चित्तम् ।

तत्राऽऽपूर्विकतन्त्रेण प्रयोगः—आचार्यो देशकालौ संकीर्त्याग्न्यनुगमनप्रायश्चित्तं करिष्य इति संकल्प्योल्लेखनाद्यग्निप्रतिष्ठापनान्तं कृत्वा चत्वारि शृङ्गेति ध्यायेत् । अत्र विण्नामाऽग्निः । ततोऽग्निं परिस्तीर्य दर्वीमाज्यस्थालीं प्रोक्षणीपात्रमुपवेषं संमार्गदर्भानवज्वलनदर्भानाज्यमेधं समिधं चाऽऽसाद्य पवित्रे कृत्वा प्रोक्षणीः संस्कृत्य पात्राणि प्रोक्ष्य दर्वीं

संमृज्याऽऽज्यं संस्कृत्याग्नेः पश्चाद्दर्भेष्वाज्यं दर्वीं च निधायाग्निं मन्त्रैः परिषिच्यालङ्कृत्य दर्व्याऽऽज्यमादाय ॐ अयाश्चाग्ने स्य० भेषजꣳ स्वाहेत्येकामाहुतिं जुहुयात् । अयसेऽग्नय इ० । ततः परिस्तरणानि विसृज्य सर्वप्रायश्चित्तं हुत्वोत्तरपरिषेकं कुर्यात् । समिदाधानात्प्रागग्न्युद्गमनेऽपि प्रायश्चित्तहोमानन्तरमेव समिदभ्याधानं कार्यम् । अथवा सर्वप्रायश्चित्तम.अयश्च नायाश्चाग्न इत्याहुतिः ।

इत्युपनयनाग्निनाशप्रायश्चित्तम् ॥

अथ चतुर्थदिवसीयोपनयनाङ्गानि ।

आचार्यः प्रातः कृतनित्यक्रियः कृतप्रातःसंध्याग्निकार्योपसंग्रहणाभिवादनेन ब्रह्मचारिणा सह प्राङ्मुख उपविश्याऽऽचम्य प्राणानायम्य ग्रिहदग्महोमं वास्तुपतये बलिदानं च पूर्ववत्कृत्वा ब्राह्मणान्संभोज्य पुण्याहस्वस्त्ययनर्धीर्वाचयित्वा श्रद्धामेधे प्रीयेतामिति वदेत् ।

ततो ब्रह्मचार्याचम्य प्राणानायम्य व्रतविसर्गार्थं देवतोपस्थानं पूर्ववत्कुर्यात् । तत्र तच्छकेयं तन्मे राध्यतामित्येतस्य स्थाने तदशकं तन्मेऽराधीति मन्त्रसंनामः । ततस्त्र्यहव्रतं विसृजेत् ।

तत आचार्यः स्थापितदेवतानां तत्रैव पञ्चोपचारैः पूजनं विधाय तद्वेदपात्रं स्वयं गृहीत्वा गृहीताविघ्नगणपतिकलशया भार्यया ब्रह्मचारिणा च सह वेदिसमीपमागत्य वेद्यामुपविश्य गणपतिमभ्यर्च्य षोडशोपचारैरावाहितदेवताः पूजयेत् । तत्राभिषेककाले नीराजनतैलाभ्यङ्गादि पूर्ववत्कुर्यात् ।

तत आवाहितदेवताविसर्गोत्तरं पूर्ववन्महीद्यौरित्यादिविधिना पुण्याहादिवाचनं विदध्यात् । तत्रास्य मण्डपोद्वासनकर्मणः पुण्याहं भवन्तो ब्रुवन्त्वित्यादिप्रयोगः । श्रद्धामेधे प्रीयेतामिति देवतानिर्देशः ।

ततः समुद्रज्येष्ठा इत्यभिषेकान्ते कश्चन मान्यस्ताः शाखा उन्मुच्य तत्सूत्रं कलशवेष्टनसूत्रं च क्षीराभ्यक्तं कृत्वाऽक्षतपूगीफलयुक्तं तत्कर्तृहस्ते दद्यात् । स च भार्यायै तत्सूत्रं प्रदद्यं वस्त्रादिप्रमपेटिकायां संस्थापयेत् । ततोऽग्निं विसृज्य ताः शाखास्तत्स्नानजलं च गृहस्योपरि शुद्धजले निक्षिप्याङ्गणवितानस्येशानकोणे विमोचनं कुर्यात् । ततो यथासंभवं ब्राह्मणभोजनं कृत्वा तेभ्यो गन्धादिपूजनपूर्वकं भूयसीं

दक्षिणां दत्त्वोपनयनकर्मणः साङ्गतासिद्ध्यर्थं मान्यपुरुषाय गां तत्प्रतिनिधिभूतं द्रव्यं वा दद्यात् । ततो विष्णुं संस्मृत्य कर्मेश्वरायार्पयेत् ।

ततो ब्रह्मचारी गुरुकुले वसेत् । प्रागुक्तानि गृह्योक्तानि व्रतानि यथाशक्त्याचरेत् । लौकिकाग्नावग्निकार्यं कुर्याद्यावत्समावर्तनम् । यदि कुले मोदनाचारश्चेत्सोऽपि कर्तव्यः । तच्च मोदनं मेरुतन्त्र उक्तम् ।

इत्युपनयनप्रयोगः ।

---

अथ प्रसङ्गाद्भोजनविधिः ।

कर्ता यथाक्रमं यथाधिकारं प्रागादिदिक्षूपविश्य भू० करोमीति संकल्पमाह्रियमाणमुपस्थाय परिचिह्नं प्रणवव्याहृतिसहितगायत्र्याऽभ्युक्ष्य वामहस्तेन चतुरस्रमण्डले स्थापितं भोजनपात्रं धृत्वा दक्षिणहस्तेन जलमादाय ऋतं त्वा स० चामीति सायं सत्यं त्वर्तेन० चामीति प्रातरन्नं परिषिञ्चति । ततो भोजनपात्रस्य दक्षिणतः पञ्चाङ्गुलपरिमितं स्थलं त्यक्त्वा तत्र तूष्णीमभ्युक्ष्यान्नात्किंचिदन्नं गृहीत्वा भूः स्वा० भुवः स्वा० सुवः स्वा० भूर्भुवः सुवः स्वा० इति प्राक्संस्थमभ्युक्षितप्रदेशे बलीन्निवपति । ततो बलीन्परिषिच्य हस्तं प्रक्षाल्यान्नपते० ष्पद इत्यन्नमभिमन्त्रयते । ततो गोकर्णाकृतिहस्तेन माषपरिमितं जलमादाय ॐ श्रद्धायां प्राणे नि० इत्याद्यमृतत्वायेत्यन्तैर्मन्त्रैरात्मानं परमात्मनि संयुक्तं भावयित्वाऽमृतोपस्तरणमसीति पुरस्तादुदकं पिबति । ततः प्राणाय स्वाहेत्यादिपञ्चभिर्मन्त्रैः परिविष्टादन्नाद्घृतप्लुतात्पञ्चाऽऽहुतीर्मुक्तकनिष्ठिकेन करेण मुखे जुहोति । ततः प्रजापतिं मनसा ध्यायंस्तूष्णीं सकृज्जुहुयात् । ततो दत्ताश्चतुरो बलीन्प्रच्छाद्य पादौ भूमौ निधाय वामहस्ताङ्गुष्ठतर्जनीमध्यमाभिर्धृतभोजनपात्रः पञ्चार्द्रो मुक्तकेशो भुञ्जीत । भोजनान्तेऽमृतापिधानमसीत्युदकं पीत्वोत्तिष्ठेत् ।

ततो हस्तौ मुखं च यावल्लेपनिःसरणं प्रक्षाल्य षोडश गण्डूषान्कृत्वा मुखं पादौ च प्रक्षाल्य द्विराचम्य वाङ्म आसन्नित्यादि मा मा हिंसीरित्यन्तैर्मन्त्रैर्वागादिबाह्वन्तानामङ्गानां क्रमेण दक्षिणहस्तेनोर्वोस्तु वामहस्तेनाऽऽलम्भं कुर्यात् ॐ वयः सु० ध्वानिति चक्षुषी निमृजीत । ॐ त्वमग्ने द्यु० शुचिरित्यन्नपाचनार्थं जाठरमग्निमुपतिष्ठते ।

इति भोजनविधिः ।

## अथान्तरितसंस्काराणां प्रयोगः ।

गर्भाधानादिचौलान्तसंस्काराणां सर्वेषामसर्वेषां वा कालातिक्रमे लोपे वा सत्याज्यं संस्कृत्य समस्तव्याहृतिभिः प्रतिसंस्कारमेकामाज्याहुतिं हुत्वा प्रतिसंस्कारं पादकृच्छ्रं चूडाया अर्धकृच्छ्रं प्रायश्चित्तं कुर्यात् । ततोऽतीतं यथाक्रमं कर्म कर्तव्यं न कर्तव्यं वेति विकल्पः । यदि प्रमात्पूर्वसंस्कारमकृत्वाऽग्रिमं संस्कारं करोति तदा पूर्वस्य लोपः । इतरथाऽतिक्रमः । लोपे तु प्रायश्चित्तमेव न कदाचिदप्यतीतकर्मानुष्ठानम् । तदंशे विकल्पाभावात् । अतीतेऽपि प्रायश्चित्तमेव न होम इत्यपि केचित् ।

अथ प्रयोगः—

उपनयनदिनात्पूर्वेद्दिने पत्न्या कुमारेण च सह कृतमङ्गलस्नान आचम्य प्राणानायम्य देशकालौ संकीर्त्य ममास्य कुमारस्य गर्भाधानादिचौलान्तसंस्काराणां कालातिपत्तिजनितप्रत्यवायपरिहारद्वारा श्रीपरमेश्वरप्रीत्यर्थं प्रायश्चित्तहोमं करिष्य इति संकल्पोक्तरीत्या कुर्यात् ।

प्रायश्चित्तसंकल्पस्तु मम पुत्रस्य गर्भाधानाद्यन्नप्राशनान्तसंस्कारकर्मणां स्वकालेऽकरणजनितप्रत्यवायपरिहारार्थं पादकृच्छ्रप्रायश्चित्तं तथा मम पुत्रस्य चौलसंस्कारकर्मणः स्वकालेऽकरणजनितप्रत्यवायपरिहारार्थमर्धकृच्छ्रप्रायश्चित्तं च क्रमेण करिष्य इति संकल्पपूर्वकं प्रत्याम्नायद्वारा कुर्यात् ।

पादकृच्छ्रप्रत्याम्नायस्तु सहस्रसंख्यतिलहोमायुतगायत्रीजपद्वादशब्राह्मणभोजनाद्यन्यतमपक्षस्य तृतीयांशरूपः । अर्धकृच्छ्रप्रत्याम्नाय एतेषामर्धरूप इति विवेकः ।

इत्यन्तरितसंस्काराणां प्रयोगः ।

---

## अथ काण्डव्रतोपाकरणम् ।

तस्य प्रयोगः—आचार्यो ब्रह्मचारिसहितः कृतनित्यक्रियः प्राङ्मुख उपविश्याऽऽचम्य प्राणानायम्य देशकालौ संकीर्त्यास्यामुकशर्मणो ब्रह्मचारिणो वेदाध्ययनाधिकारसिद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थं प्राजापत्यसौम्याग्नेयवैश्वदेवाख्यकाण्डचतुष्टयव्रतोपाकरणं तन्त्रेण करिष्य इति संकल्प्य गणेशपूजनादि नान्दीश्राद्धान्तं कुर्यात् । नान्दीश्राद्धोत्तरं ब्रह्मचारिणा वपनं स्नानं च कारयित्वा तस्मै नूतनकटिसूत्रकच्छोपवीताजिनोत्तरीयदण्डान्दत्त्वा पुराणान्यप्सु निक्षिपेदिति केचित् ।

तत उल्लेखनादिविधिना स्थण्डिलसंस्कारं विधाय समुद्भवनामानं श्रोत्रियागारादाहृतं लौकिकाग्निं प्रतिष्ठाप्य प्रज्वाल्य ध्यात्वा समिच्चयमादाय श्रद्ध एहीत्यादि प्राणायामान्तं कृत्वा प्राजापत्यसौम्याग्नेयवैश्वदेवाख्यकाण्डचतुष्टयव्रतोपाकरणहोमकर्मणि या यक्ष्यमाणा इत्यादि व्याहृत्यन्तमुक्त्वा प्रधानहोमे—सदसस्पतिं प्रजापतिं काण्डर्षिं सोमं काण्डर्षिमग्निं काण्डर्षिं विश्वान्देवान्काण्डर्षीन्नैकैकयाऽऽज्याहुत्या यक्ष्ये । अङ्गहोमे—वरुणं द्वाभ्यामित्यादि व्याहृतिहोमान्तं कृत्वा प्रधानहोमं कुर्यात् ।

ॐ सदसस्पति० सिषम् स्वाहा । सदसस्पतय इ० । प्रजापतये काण्डर्षये स्वाहा । प्रजापतये काण्डर्षय इ० । सोमाय काण्ड० । सोमाय का० र्षय इ० । अग्नये काण्ड० । अग्नये० र्षय इ० । विश्वेभ्यो० र्षिभ्यः स्वा० । विश्वे० र्षिभ्य इ० । इति प्रधानहोमं कृत्वा. इमं मे वरुणेत्यादि सर्वं होमशेषं समापयेत् । जयादिहोमे विकल्पः । त्रिवृदन्नहोमोऽत्र नास्ति ।

ततो ब्रह्मचार्यग्ने व्रतपते व्रतं चरिष्यामीत्यादिभिरुपस्थाय गुरवे वरं दद्यात् । ततो ब्राह्मणभोजनं भूयसीदक्षिणादानं च विधाय कर्मसाद्गुण्याय विष्णुं संस्मृत्य कर्मेश्वरायार्पयेत् ।

इति तन्त्रेणोपाकरणप्रयोगः ।

---

अथ काण्डानि ।

अथ सारस्वतपाठेनाध्ययनेऽपि काण्डपरिज्ञानस्याऽऽवश्यकत्वात्तदर्थं काण्डानुक्रमण्यनुसारेण काण्डान्युच्यन्ते । तत्र प्राजापत्यकाण्डम्—इषे त्वेति प्रश्न उत्तमानुवाकवर्जम् । तृतीयस्यां प्रत्युष्टमिति प्रश्नद्वयम् । मम नामेत्येतस्यानुवाकस्य पयस्वतीरोषधय इत्यादिः शेषः । सं त्वा सिञ्चामीति प्रश्न उत्तमानुवाकवर्जम् । पाकयज्ञमित्यादयो द्वितीयानुवाकवर्जं पञ्चानुवाकाः । स्वशान्तिकाश्विनिः प्रुगित्यादयस्त्रयोदशानुवाकाः । प्रजापतिर्ब्रह्मवादिन इति द्वितीयकाण्डब्राह्मणान्तर्गतं प्रश्नद्वयम् । सत्यं प्रपद्य इति प्रश्नः । देवा वै नर्चिनेत्यादयश्चत्वारोऽनुवाकाः । निवीतं मनुष्याणामित्यारभ्य मनुष्यलोकं चाभिजयतीत्यन्तोऽनुवाकः । सध्रवा इत्यनुवाकः । मनुः पृथिव्या इत्यादयश्चत्वारोऽनुवाकाः । विश्वरूपो वै

स्वाट्ट् इत्यादयः षडनुवाकाः । देवा वै सामिधेनीरनूच्येत्यादिर्निवीतमित्येतस्यानुवाकस्य शेषः । समिधो यजतीत्यादयः षडनुवाकाः । इन्द्रो वृत्रं हत्वेत्यनुवाकः । सशान्तिकः परे युवाऽसमिति प्रश्नः । इति प्राजापत्यकाण्डम् ।

अथ सौम्यकाण्डम्–आप उन्दन्तु देवस्य त्वेति प्रश्नद्वयमुत्तमानुवाकवर्जम् । पवमानः सुवर्जन इत्यनुवाकः । ब्रह्म संधत्तमित्यनुवाकः । आददे ग्रावेति प्रश्न उत्तमानुवाकवर्जम् । चित्तिः स्रुगिति प्रश्नान्तर्गतस्तरणिरित्यनुवाकः । प्राचीनवꣳशमिति प्रश्नषट्कम् । प्रजननमित्यादयस्त्रयोऽनुवाकाः । देवासुराः स प्रजापतिरिन्द्रमित्यादयश्चत्वारोऽनुवाकाः । उभये वा एते ब्रह्मवादिनो वदन्ति कति पात्राणीत्यनुवाकद्वयम् । देव सवितः प्रसुवेत्यादयः षडनुवाकाः । देवा वै यथादर्शमित्यादयोऽष्टानुवाकाः । त्रिवृत्स्तोम इति प्रश्नः । सशान्तिकौ युञ्जते मनो देवा वै सत्रमासतेति प्रश्नौ । इति सौम्यकाण्डम् ।

अथाऽऽग्नेयकाण्डम्–घर्मः शिर उद्धन्यमानमित्यनुवाकौ । कृत्तिकास्वग्निमादधीतेत्यादयः पञ्चानुवाकाः । इमे वा एत इत्यादयस्त्रयोऽनुवाकाः । भूमिर्भूम्नेत्यनुवाकः । देवासुरास्ते देवा विजयं परा वा एष भूमिर्भूम्ना द्यौर्वरिणेत्याहेत्यनुवाकत्रयम् । देवासुरा अग्नीषोमयोरित्यनुवाकः । उप प्रयन्तः संपश्याभीत्यनुवाकौ । मम नामेत्यनुवाकस्ततः संदधामि हविषा घृतेनेत्यन्तः । अयज्ञः संपश्यामि प्रजा अहमित्याहाग्निहोत्रं जुहोतीति त्रयोऽनुवाकाः । युञ्जानः प्रथमं मन इत्यादयः सप्त प्रश्नाः । तत्राऽऽद्यप्रश्नचतुष्टयस्योत्तमानुवाकाङ्गीभूतस्यैव यदक्रन्दो नो मित्रो ये वाजिनमग्नेर्मन्व इति पञ्चानुवाकांश्च वर्जयेत् । मा नो हिꣳसीज्जनितेत्यनुवाकादूर्ध्वं सशान्तिक आप्यायस्व मदिन्तमेत्यनुवाकः । इयमेव सामेत्यनुवाकादूर्ध्वं सशान्तिक ईयुष्टे य इत्यनुवाकः । प्रजापतिर्मनसेत्यनुवाकादूर्ध्वं सशान्तिको ज्योतिष्मतीमित्यनुवाकः । आयुषः प्राणमिद्धो दधीच इत्यनुवाकौ । सावित्राणीत्यादयः सप्त प्रश्नाः । तत्र समिद्धो अञ्जन्गायत्री त्रिष्टुब्जगती वस्त्वाऽऽच्छ्याति प्रजापतेरक्षि पवस्व वाजसातय इत्यनुवाकान् । इन्द्राय राज्ञे सूकर इति चतुर्दशानुवाकान्रोहितो धूम्ररोहित इति त्रयोदशानुवाकान्स्तेगान्दꣳष्ट्राभ्यामिति षोडशानुवाकांश्च वर्जयेत् । अङ्गिरसो वै सत्रमासतेति प्रश्नः ।

उदस्थान्नि वा एतस्येत्यनुवाकौ । संज्ञानं लोकोऽसीति प्रश्नौ । ब्रह्म वै चतुर्होतार इत्यादयः पञ्चानुवाकाः । इत्याग्नेयकाण्डम् ।

अथ वैश्वदेवकाण्डम्—अनुमत्यै पुरोडाशमिति संहितान्तर्गतः प्रश्न उत्तमानुवाकवर्जम् । ऋतमेव परमेष्ठीत्यनुवाकः । ब्राह्मणान्तर्गतानुमत्यादयस्त्रयः प्रश्नाः । प्रजा वै सत्रमासतामिर्वाव संवत्सर इत्यनुवाकौ । देवा वै यद्यज्ञेऽकुर्वत तदसुरा अकुर्वत ते सुरा ऊर्ध्वमित्यनुवाकः । वायव्यश्‍ श्वेतमित्यादयश्चत्वारः प्रश्नाः । तत्रोत्तमानुवाकान्वर्जयेत् । प्रजापतिरकामयत प्रजाः सृजेयेतीति तृतीयकाण्डम् । तत्र पञ्चप्रश्नानामन्तिमाननुवाकान्वर्जयेत् । इषे त्वेत्यादिरश्मिरसीत्यन्तानां प्रश्नानां क्रमेणोत्तमानुवाका उशन्तस्त्वेत्येतत्पूर्वं युक्ष्वाहीत्यनुवाकश्च । देवस्य त्वेत्यादयः प्रजननप्रश्नशेषा दशानुवाकाः । एकस्मा इत्यादय एकादशानुवाकाः । अर्वाङित्यादयो दशानुवाकाः । मेषस्त्वा पचतैरवत्वित्यादय एकादशानुवाकाः । पृथिव्यै स्वाहेत्यादयश्चतुर्दशानुवाकाः । जीमूतस्य यदक्रन्दो मा नो मित्रो ये वाजिनमग्नेर्मन्व इति पञ्चानुवाकाः । इन्द्राय राज्ञे सूकर इत्यादयश्चतुर्दशानुवाकाः । रोहितो धूम्ररोहित इत्यादयस्त्रयोदशानुवाकाः । स्तेगान्दंष्ट्राभ्यामिति षोडशानुवाकाः । समिद्धो अञ्जन्गायत्री कस्त्वेति त्रयोऽनुवाकाः । प्रयासाय स्वाहा चित्तं संतानेनेति द्वावनुवाकौ । प्रजापतेरक्षि पवस्व वाजसातय इत्यनुवाकौ । यो वा अश्वस्य मेध्यस्य शिर इत्यनुवाकः । सांग्रहण्या प्रजापतिरश्वमेधमसृजतेति प्रश्नद्वयम् । अङ्गिरसो वै सत्रमासतेत्यादयः प्रजननप्रश्नान्तर्गताः सप्तानुवाकाः । साध्या वा इत्यारभ्य दशानुवाकाः । प्रजवं वा इत्यारभ्य दशानुवाकाः । बृहस्पतिरकामयत श्रन्मे देवा इत्यारभ्यैकादशानुवाकाः । गावो वा इत्यारभ्य दशानुवाकाः । न वै तान्यहानि भवन्तीत्यादिः प्रश्नशेषः । यस्य प्रातःसवन इत्यादयस्त्रयोऽनुवाकाः । जुष्टो दमूना इति प्रश्नद्वयम् । पीवोन्नामिति प्रश्नः । भर्ता सन्ध्रियं हरन्तमित्यनुवाकौ । अग्निर्नः पात्विति प्रश्नः । अग्नेः कृत्तिका इत्यनुवाकत्रयम् । स्वाद्वीं त्वेति प्रश्नः । युवं सुराममित्यनुवाकः । सर्वान्वा इति प्रश्नः । अञ्जन्तीति प्रश्नः । ब्रह्मणे ब्राह्मणमिति प्रश्नः । तुभ्यं ता इत्यादयश्चत्वारोऽनुवाकाः । इति वैश्वदेवकाण्डम् ।

इति काण्डानि ।

---

### अथ तन्त्रेण काण्डव्रतोत्सर्जनप्रयोगः ।

आचार्यो नद्यादौ प्रशस्तदेशे ब्रह्मचारिसहितः कृतनित्यक्रियः प्राङ्मुख उपविश्याऽऽचम्य प्राणानायम्य देशकालौ संकीर्त्यामुकशर्मणा ब्रह्मचारिणा वेदाध्ययनार्थं स्वीकृतस्य प्राजापत्यसौम्याग्नेयवैश्वदेवाख्यकाण्डचतुष्टयव्रतस्योत्सर्जनं तन्त्रेण करिष्य इति संकल्प्य गणेशपूजनादि नान्दीश्राद्धान्तं कुर्यात् । नात्र वपनादि ।

तत उल्लेखनादिविधिना स्थण्डिलसंस्कारं विधाय समुद्भवनामानं श्रोत्रियागारादाहृतं लौकिकमग्निं प्रतिष्ठाप्य प्रज्वाल्य ध्यात्वा समित्त्रयमादाय श्रद्ध एहीत्यादि प्राणायामान्तं कृत्वा प्राजापत्य० देवाख्यकाण्डचतुष्टयव्रतोत्सर्जनहोमकर्मणि या वक्ष्यमाणा इत्यादि व्याहृत्यन्तमुक्त्वा प्रधानहोमे—सदसस्पतिं प्रजा० र्पिं सोमं का० अग्निं का० विश्वा० र्पीश्चैकैकयाऽऽज्याहुत्या यक्ष्य इति । अङ्गहोमे वरुणं द्वाभ्यामित्यादि । व्याहृतिहोमान्ते प्रधानहोमः । यथा—ॐ सदसस्पति० प५ स्वाहा । सद० य इदं० । प्रजाप० । प्रजा० र्पय इ० । सोमा० । सो० र्पय इ० । अग्न० । अ० र्पय इ० । विश्वे० र्पिभ्यः स्वाहा । विश्वे० र्पिभ्य इदं० । इति प्रधानहोमं कृत्वेमं मे वरुणेत्यादि सर्वं होमशेषं समापयेत् । उपाकरणे यदि जयादिहोमाः कृताः स्युस्तदाऽत्रापि कार्याः । नात्र त्रिवृदन्नहोमः ।

ततो ब्रह्मचार्यग्ने व्रतपते व्रतमचारिषमित्यादिभिर्देवतोपस्थानं कृत्वा व्रतं विसृज्य गुरवे वरं दद्यात् । तत आचार्यो ब्राह्मणभोजनं भूयसीदक्षिणादानं च विधाय कर्मसाद्गुण्याय विष्णुं संस्मृत्य कर्मेश्वरायार्पयेत् ।

इति तन्त्रेण काण्डव्रतोत्सर्जनप्रयोगः ।

---

### अथ गोदानप्रयोगः ।

तच्च समावर्तनात्प्राक्कर्तव्यम् । तस्य प्रयोगः—आचार्यो ब्रह्मचारिसहितः कृतनित्यक्रियश्चौलोक्ततिथ्यादिकाले प्राङ्मुख उपविश्याऽऽचम्य प्राणानायम्य देशकालौ संकीर्त्यास्यामुकशर्मणो ब्रह्मचारिण आयुर्वर्चोऽभिवृद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थं गोदानसंस्काराख्यं कर्म करिष्य इति संकल्प्य गणपतिपूजनादि नान्दीश्राद्धान्तमुक्तरीत्या कुर्यात् । अत्र केशिनः प्रीयन्तामिति विशेषः । चौलधर्मत्वादेतस्य ।

तत उल्लेखनादिविधिना स्थण्डिलसंस्कारादि विधाय तत्र सूर्यनामानं लौकिकमग्निं प्रतिष्ठाप्य प्रज्वाल्य ध्यात्वा समित्त्रयमादाय अद्ध० मान्तं कृत्वा गोदानहोमकर्मणि या० व्याहृत्यन्तमुक्त्वाऽङ्गहोमे वरुणमित्यादि । नात्र वैशेषिकहोमः । जयादिहोमा वैकल्पिकाः । व्याहृतिहोमवारुण्यादिहोमा अत्र नियताः । चौलातिदेशात् । संस्थाजपान्तं समानम् । ततस्त्रिवृदन्नहोमं पुण्याहादिवाचनान्तं विधाय प्रजापतिः प्रीयतामिति वदेत् ।

ततोऽग्नेः पश्चात्स्वस्थाने ब्रह्मचारिणमुपवेश्य स्वयं तद्दक्षिणत उपविश्याग्नेर्ब्रह्मचारिणो वोत्तरतो घृतानडुद्गोमयां ब्रह्मचारिमातरं कंचन ब्रह्मचारिणं वोपवेश्योष्णशीताभिरद्भिरुन्दनादिवपनान्तं चौलोक्तरीत्या कुर्यात् । वपनं तु भृग्वादिगोत्रिव्यतिरिक्तानां सर्वेषां मध्यमशिखामवशेष्यैव । भृग्वादिगोत्रिणां तु मध्यमशिखाया वपने विकल्पः । ततः केशसंयमनादिकं चौलोक्तरीत्या कृत्वा सर्पिष्मन्तमोदनं नापिताय दत्त्वाऽऽचार्याय वरं दद्यात् । ततो ब्राह्मणभोजनं भूयसीदक्षिणादानं च विधाय कर्मसाद्गुण्याय विष्णुं संस्मृत्य कर्मेश्वरायार्पयेत् । अग्निकार्यमेव गोदानमिति पक्षान्तरे तु वपनातिरिक्तं सर्वं कार्यम् ।

इति गोदानप्रयोगः ॥

---

अथ बौधायनसूत्रानुसारेण ब्रह्मचारिव्रतलोपप्रायश्चित्तस्याऽऽपूर्विकतन्त्रेण प्रयोगः ।

पूर्वेद्युरन्यस्मिन्दिने वा ब्रह्मचारी देशकालौ संकीर्त्य मम भिक्षाग्निकार्यादिलोपजनितदोषपरिहारद्वारा श्रीपरमेश्वरप्रीत्यर्थं बौधायनोक्तप्रायश्चित्ताज्यहोमपूर्वककृच्छ्रत्रयमितं प्रायश्चित्तमुक्प्रत्याम्नायेनाहमाचरिष्य इति संकल्प्योल्लेखनादिस्थण्डि० च तत्र विप्रनामानमग्निं श्रोत्रियागारादाहृतं लौकि० ध्यात्वा समित्त्रयमादाय अद्ध ए० मान्तं कृत्वा ब्रह्मचारिव्रतलोपप्रायश्चित्तहोमकर्मणि या यक्ष्यमाणास्ताः सर्वाः परिग्रहीष्यामीत्येतदन्तमुक्त्वा प्रधानहोमेऽग्निं वायुं सूर्यं प्रजापतिं चैकैकयाऽऽज्या० ष्ये । अग्निमग्निं पृथिवीं महान्तं चैकैक० । वायुं वायुमन्तरिक्षं महान्तं चैकैक०। सूर्यमादित्यं दिवं महान्तं चैकैक० । प्रजापतिं चन्द्रमसं नक्षत्राणि दिशो महान्तं चैकैक० ष्ये । अग्नि० विश्वनेदसं० विभावसुं शतक्रतुं

चैकैक० क्ष्ये। अग्निं द्वाभ्यामाज्याहुतिभ्यां य०। अग्निं वायुं सूर्यं प्रजापतिं चैकैक० क्ष्ये। इत्युक्त्वाऽन्वाधानसमिधोऽभ्याधायाग्निं परिस्तीर्य यावदुपयुक्तानि पात्राण्यासाद्य पवित्रकरणादि प्रणीतावर्जं पवित्रे अग्नावाधायेत्यन्तं कृत्वाऽदित इत्याद्यैः परिषिच्य तूष्णीमेकां समिधमभ्याधाय प्रधानाहुतीर्जुहुयात्।

ॐ भूः स्वाहा। अग्नय इ०। ॐ भुवः स्वा०। वायव०। ॐ सुवः०। सूर्या०। ॐ भूर्भुवः सु०। प्रजा०। ॐ भूरग्नये च पृ० ते च स्वाहा। अग्नयेऽग्नये पृथिव्यै महते चेदं०। ॐ भुवो वायवे चा० ते च स्वा०। वायवे वायवेऽन्तरिक्षाय महते चेदं०। ॐ सुवरादि० ते च स्वा०। सूर्यायाऽऽदित्याय दिवे महते चे०। ॐ भूर्भुवः सुवश्चन्द्र० ते च स्वाहा। प्रजापतये चन्द्रमसे नक्षत्रेभ्यो दिग्भ्यो महते चे०। ॐ पाहि नो अग्न एनसे स्वा०। अग्नय इ०। ॐ पाहि नो विश्ववेदसे स्वा०। विश्ववेदस इ०। ॐ यज्ञं पाहि विभावसो स्वा०। विभावसव इ०। ॐ सर्वं पाहि शतक्रतो स्वा०। शतक्रतव इ०। ॐ पुनरूर्जा नि० श्वतः स्वा०। अग्नय इ०। ॐ सह रय्या० श्वधारस्वा०। अग्नय इ०। ॐ भूः स्वा०। अग्नय०। ॐ भुवः स्वा०। वायव०। ॐ सुवः स्वा०। सूर्या०। ॐ भूर्भुवः सु०। प्रजापतय०। इति प्रधानाहुतीर्हुत्वा कूष्माण्डयागात्मकं प्रायश्चित्तं चरित्वा परिस्तरणानि विसृज्यादितेऽन्वमंस्था इत्याद्यैः परिषिच्य ब्राह्मणान्संभोज्य विष्णुं स्मरेत्। होमशेषं समाप्यानन्तरं वा कूष्माण्डजपम्।

इति ब्रह्मचारिव्रतलोपप्रायश्चित्तस्याऽऽपूर्विकतन्त्रेण प्रयोगः।

---

अथ काण्डव्रतलोपप्रायश्चित्तप्रयोगः।

कृतनित्यक्रियो ब्रह्मचारी प्राङ्मुख उपविश्याऽऽचम्य प्राणानायम्य देशकालौ संकीर्त्य मम काण्डव्रतलोपजनितप्रत्यवायपरिहारद्वारा श्रीपरमेश्वरप्रीत्यर्थं प्रतिकाण्डव्रतं होमपूर्वकपञ्चकृच्छ्रात्मकं प्रायश्चित्तं प्रत्याम्नायेन चाऽऽचरिष्ये इति संकल्प्योल्लेखनादिविधिना स्थण्डिलसंस्कारं विधाय तत्र विप्नादानं लौकिकमग्निं प्रतिष्ठाप्य प्रज्वाल्य ध्यात्वा समिद्द्वयमादाय अष्ट चत्वारि प्राणायामान् कृत्वा काण्डव्रतलोपप्रायश्चित्तहोमकर्मणि या वक्ष्यमाणा इत्यादि ध्यात्वाऽन्वाधानमुक्त्वा प्रधानहोमे प्रतिकाण्डव्रतं प्रतिव्रतं गायत्र्याऽष्टोत्तरशतसंख्याभिराज्याहुतिभिर्यक्ष्ये।

अङ्गहोमे वरुणमित्याद्युक्त्वा व्याहृतिहोमान्तं कृत्वा प्रधानहोमं कुर्यात्। ॐ तत्सवितुर्व० यात्स्वाहा । इति प्रतिकाण्डव्रतं गायत्र्या यथोक्तसंख्याहुतीर्जुहुयात् । सवित्र इदमिति त्यागः । ततः प्रत्येकं कृच्छ्रात्मकं प्रायश्चित्तं विदध्यात् । तत इमं मे वरुणेत्यादिहोमशेषं समापयेत् । न त्रिवृदन्नहोमः । ततो ब्राह्मणभोजनं विधाय कर्मसाद्गुण्याय विष्णुं संस्मृत्य कर्मेश्वरायार्पयेत् । आपूर्विकपक्षेण वा प्रयोगः । ततः शुभे दिने काण्डव्रतोपाकरणं कृत्वा काण्डाध्ययने जाते काण्डव्रतोत्सर्जनं कृत्वा समावर्तनं कुर्यात् ।

इति काण्डव्रतलोपप्रायश्चित्तप्रयोगः ।

---

अथ यज्ञोपवीतनाशप्रायश्चित्तप्रयोगः ।

यज्ञोपवीते त्रुटिते कटेरधस्तादृते कण्ठादुत्तारिते वा तस्य त्यागं कृत्वा प्रायश्चित्तहोमं कृत्वा नूतनं यज्ञोपवीतं धारयेत् । प्रायश्चित्तहोमकर्ता त्रिवृत्सूत्रं वासो वा यज्ञोपवीतार्थे धृत्वा स्नात्वाऽहतवस्त्रपरिधानादि कृत्वा प्राङ्मुख उपविश्याऽऽचम्य प्राणानायम्य देशकालौ संकीर्त्य यज्ञोपवीतनाशजनितप्रत्यवायपरिहारद्वारा श्रीपरमेश्वरप्रीत्यर्थं प्रायश्चित्तहोमं करिष्य इति संकल्प्य स्थण्डिलं गोमयेनोपलिप्योल्लेखनादिविधिना संस्कारं विधाय लौकिकमग्निं विप्रनामानं प्रतिष्ठापयामीति प्रतिष्ठाप्य प्रज्वाल्य ध्यात्वा समित्त्रयमादाय अद्य० मान्तं कृत्वा यज्ञोपवीतनाशप्रायश्चित्तहोमकर्मणि या य० त्यन्तमुक्त्वा प्रधानहोमे गायत्र्या सवितारमष्टो० शतसंख्याभिर्घृताक्ततिलाहुतिभिर्यक्ष्य इत्युक्त्वाऽङ्गहोमे वरुणं द्वाभ्यामित्याद्युक्त्वा व्याहृतिहोमान्तं कुर्यात् । आज्यपर्यग्निकरणकाले तिलानामपि पर्यग्निकरणम् । ततो गायत्र्या मृगीमुद्रया घृताक्ततिलानष्टोत्तरशतं हुत्वाऽङ्गहोमादि सर्वं होमशेषं समापयेत् । नात्र त्रिवृदन्नहोमः। कर्मणः संपूर्णतासिद्ध्यै गुरवे गां दत्त्वा ब्राह्मणभोजनं कृत्वा विष्णुं स्मरेत् । अथवाऽऽपूर्विकतन्त्रेण होमः । ततो नूतनयज्ञोपवीतधारणं कृत्वा द्विराचम्य संध्योपासनादि नित्यं कर्म कुर्यात् । गृहस्थाश्रमिभिन्नैर्नग्नस्यैवेदमेव प्रायश्चित्तं कार्यम् ।

इति यज्ञोपवीतनाशप्रायश्चित्तप्रयोगः ।

---

अथ समावर्तनम् ।

ब्रह्मचारी साङ्गवेदाध्ययनसंपन्नः परिपालितब्रह्मचारिनियमः कृतकाण्डव्रतोपाकरणोत्सर्जनगोदानः कृताध्यायोपाकरणो गुरुं दक्षिणाद्यादिना संतोष्य तेनानुज्ञात उदगयन आपूर्यमाणपक्षे ज्योतिर्वित्प्रोक्ते सुमुहूर्ते आचार्यगृहे स्नानापरपर्यायं समावर्तनाख्यं कर्म कुर्यात् ।

अथ प्रयोगः—कृतनित्यक्रियः प्रातरग्निकार्यं कृत्वा प्राङ्मुख उपविश्याऽऽचम्य प्राणानायम्य देशकालौ संकीर्त्य मम गृहस्थाश्रमाधिकारसिद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थं समावर्तनाख्यं कर्म करिष्य इति संकल्पं कुर्यात् । ततः पिता पुत्रसमावर्तनाङ्गभूतं गणपतिपूजनमित्यादि नान्दीश्राद्धान्तं कर्म कुर्यात् । अत्र श्रीः प्रीयतामिति विशेषः । अथवा नान्दीश्राद्धमात्रं पितृकर्तृकम् । गणपतिपूजनपुण्याहवाचनमातृकापूजनानि तु स्वयमेव कुर्यात् । पितृसत्त्वेऽपि स्वयमेव वा गणपतिपूजनादि नान्दीश्राद्धान्तं कुर्यादिति केचित् ।

ततो ब्रह्मचार्येवोल्लेखनादिविधिना स्थण्डिलसंस्कारं विधाय तत्र पावकनामानं लौकिकमग्निं प्रतिष्ठाप्य प्रज्वाल्य ध्यात्वा समिद्द्वयमादाय श्रद्ध एहीत्यादि प्राणायामान्तं कृत्वा समावर्तनहोमकर्मणि या यक्ष्यमाणा इत्यादिव्याहृत्यन्तमुक्त्वा प्रधानहोमे जातवेदसमग्निं पलाशसमिधा यक्ष्ये । अग्निं वायुं सूर्यं प्रजापतिं चैकैकयाऽऽज्याहुत्या यक्ष्ये । अग्निमाज्याहुत्या यक्ष्ये । अङ्गहोमे वरुणमित्यादि । पात्रप्रयोगकाले लौकिकाग्नावुष्णीकृता अपः शीता अपः क्षुरमानडुहं शकृद्वपनार्थं कुशमौदुम्बरं प्रादेशमात्रं दन्तधावनार्थमार्द्रं काष्ठं चन्दनमहते वाससी सूत्रप्रोते कुण्डले सूत्रप्रोतं सुवर्णाभिच्छादितं चान्दनं मणिमादर्शं छत्रं वैणवं दण्डमुपानहौ स्रजं कज्जलमेतान्यासाद्य ग्रामप्रवेशार्थं रथाद्यन्यतमं वाहनमपि पात्रसमीपे यथावकाशं वा संस्थाप्य दर्व्यादीनि पात्राणि पालाशीं समिधं चाऽऽसादयेत् ।

ततो ब्रह्मवरणादि । पात्रप्रोक्षणकाल उपस्तृतवाहनस्यापि प्रोक्षणं कार्यम् । ततो दर्वीनिष्टपनादि व्याहृतिहोमान्तं समानम् । ततो वैशेषिकप्रधानहोमः—ॐ इमꣳ स्तोममर्हते जातवेदसे रथमिव संमहे मा मनीषया । भद्रा हि नः प्रमतिरस्य सꣳसद्यग्ने सख्ये मा रिषामा वयं तव स्वाहा ॥

इत्यासादितां पालाशीं समिधमादधाति । जातवेदसेऽग्नय इदं० । ततो व्यस्तसमस्तव्याहृतिभिश्चतस्र आज्याहुतीर्जुहुयात् ।

ततः ॐ त्र्यायुषं जमदग्नेः कश्यपस्य त्र्यायुषं यद्देवानां त्र्यायुषं तन्मे अस्तु त्र्यायुषं स्वाहा । अग्नय इदं० । इति मन्त्रेणाहुतीर्हुत्वेमं मे वरुणेत्यादि स्विष्टकृद्धोमं पुण्याहवाचनान्तं कृत्वा प्रजापतिः प्रीयतामिति वदेत् ।

ततः ॐ अग्ने व्रत० तमचारिषं त० राधि । इत्यग्निमुपतिष्ठते । वायो व्र० इति वायुम् । आदित्य व्र० इत्यादित्यम् । व्रतानां व्रत० इति व्रतपतिमुपस्थाय ॐ उदुत्यं जा० सूर्यम् । चित्रं देवा० पथ । इति द्वाभ्यामादित्यमुपतिष्ठते । ॐ उदुत्तमं वरुण पाशमस्म० च्छ्रथाय । उत्तरीयं वासो निदधाति । ततोऽन्येनाहतेन महता वाससा शरीरं माच्छाद्य द्विराचम्य ॐ अवाधमं वरुण पाशमस्मच्छ्रथाय । अन्तरीयं वासो निदधाति । ॐ विमध्यमं वरुण पाशमस्मच्छ्रथाय । मेखलां विस्रस्य निदधाति । ॐ अथा वयमा० स्याम । दण्डं निदधाति । ततोऽजिनवासो० मेखलादण्डानप्सु तूष्णीं मास्यान्तरीयवासोऽर्थिने ब्रह्मचारिणे दद्यात् । ततोऽपरेणाग्निं प्राङ्मुख उपविश्य

ॐ क्षुरो नामासि स्वधितिस्ते पिता नमस्ते अस्तु मा मा हिꣳसीः ।

क्षुरं संमृशति । ततः तूष्णीं वस्त्रे महायाऽऽसादितासु शीतास्वप्स्वासादिता उष्णा अप आनीय ॐ शिवा नो भवथ सꣳस्पृशे । इति ता अपोऽभिमृशति । अभिमर्शन एवायं मन्त्रः । ॐ आप उन्द० चैसे । इति दक्षिणं गोदानमुनत्ति । ओषधे त्रायस्वैनम् । दक्षिणगोदानप्रदेश आसादितं कुशमूर्ध्वाग्रं निदधाति । ॐ स्वधिते मैनꣳहिꣳसीः । तदुपर्यासादितं क्षुरं निदधाति । ॐ देवश्रूरेतानि प्रवपे । सकुशान्केशान्वपति ।

ॐ यत्क्षुरेण मर्चयता सुपेशसा वप्ता वपसि केशश्मश्रु वर्चया मुखं मा न आयुः प्रमोषीः ।

इति वप्तारं समीक्षते । ततो वप्ता श्मश्रुपक्षकेशलोमनखानि क्रमेण शिखां विहाय वपति । वपनकर्ताऽत्र स्नानं कुर्यात् । तत आनडुहं शकृत्पिण्डाय नखोक्षाणि श्मश्रुवादीनि निधाय

ॐ इदमहममुष्याऽऽमुष्यायणस्य पाप्मानमवगूहामि ।

गोष्ठ उदुम्बरे दर्भस्तम्बे वा गर्तं कृत्वा तत्राऽऽनडुहेन शकृत्पिण्डेन सह तानि प्रक्षिप्य मृदा गर्तं प्रपूरयति । अमुष्येत्यस्य स्थाने देवदत्तशर्मण इति व्यावहारिकं नाम ग्राह्यम् । आमुष्यायणस्येत्यस्य स्थाने वासिष्ठस्येति गोत्रनाम ग्राह्यम् ।

अथ स्नातकः करञ्जफलकाद्युद्वर्तनेन शरीरमलं दूरीकृत्य

ॐ अन्नाद्याय व्यूहध्वं दीर्घायुत्वाय व्यूहध्वं ब्रह्मवर्चसाय व्यूहध्वं दीर्घायुरहमन्नादो ब्रह्मवर्चसी भूयासम् ।

औदुम्बरेण काष्ठेन दन्ताञ्छोधयेत् । ततो द्वादश गण्डूषांस्तूष्णीं कुर्यात् । ततः स्नातकः—आपो हि ष्ठा मयोभुव इति तिसृभिर्हिरण्यवर्णाः शुचयः पावका इति चतसृभिः पवमानः सुवर्जन इत्येतेनानुवाकेन चोष्णशीताभिरद्भिः स्नानं कुर्यात् । प्रत्यृङ्मन्त्रसमुदायान्ते स्नानम् । ततो द्विराचम्य तूष्णीं लौकिकं वासः परिधाय द्विराचम्य कटिसूत्रं कौपीनं च विसृज्य प्रज्ञातं निधायाऽऽसादितं चन्दनादिपिष्टं जलेनाभ्युक्ष्य तेन पाणी प्रलिप्य

ॐ नमो ग्रहाय चाभिग्रहाय च नमः शाकजञ्जभाभ्यां नमस्ताभ्यो देवताभ्यो या अभिग्राहिणीः । देवेभ्यः प्राचीनं नमस्काराञ्जलिं करोति ।

अप्सरासु यो गन्धो गन्धर्वेषु च यद्यशः ।
दैव्यो यो मानुषो गन्धः स मामाविशतादिह ॥

तेनाञ्जलिना मुखमारभ्यानुलोममात्मानं लिम्पति । तत आसादिते अहते वाससी जलेनाभ्युक्ष्य परिहितं पूर्वं वासः परित्यज्याऽऽसादितयोर्वाससोर्मध्य एकं वास आदाय प्रदक्षिणं संवेष्ट्य

ॐ सोमस्य तनूरसि तनुवं मे पाहि स्वा मा तनूराविश शिवा मा तनूराविश ।

इति प्रदक्षिणं वेष्टितं वासः परिदधाति । ततो द्विराचम्य तेनैव मन्त्रेणोत्तरीयसंज्ञकं वासः परिदधाति । ततो द्विराचम्य प्रज्ञातं निहितं कटिसूत्रं कौपीनं चाप्सु प्रक्षिपेत् ।

अथापरेणाग्निं प्राङ्मुख उपविश्याऽऽसादितं सुवर्णाभिच्छादितं मणिमासादिते कुण्डले चाऽऽदाय दर्भेण प्रबध्याग्नौ धारयन्

ॐ आयुष्यं वर्चस्यꣳ रायस्पोषमौद्भिदम् ।
इदꣳ हिरण्यमायुषे जैत्रायाऽऽविशतां माꣳ स्वाहा ॥
ॐ उच्चैर्वाजि पृतनासाहꣳ सभासाहं धनंजयम् ।
सर्वाः समग्रा ऋद्धयो हिरण्येऽस्मिन्समाभृताः स्वाहा ॥
ॐ शुनमहꣳ हिरण्यस्य पितुरिव नामाग्रभीषम् ।
तं मा हिरण्यं वर्चसं करोतु पुरुषु प्रियं
ब्रह्मवर्चसिनं मा करोतु स्वाहा ॥
ॐ प्रियं मा कुरु देवेषु प्रियं मा ब्रह्मणि कुरु ।
प्रियं विश्येषु शूद्रेषु प्रियं मा कुरु राजसु स्वाहा ॥
ॐ इयमोषधे त्रायमाणा सहमाना सरस्वती ।
सा मा हिरण्यवर्चसं करोतु पुरुषु प्रियं
ब्रह्मवर्चसिनं मा करोतु स्वाहा ॥

इति पूर्वावशेपितेनाऽऽज्येन दर्व्या पञ्चभिर्मन्त्रैस्तदुपर्यभिजुहोति । हिरण्यायेदमिति त्यागः । तत एतैरेव पञ्चभिर्मन्त्रैः स्वाहाकाररहितैः सर्वान्ते मणिकुण्डले च सहैव त्रिः प्रदक्षिणमुदपात्रे सम्यक्प्रक्षालयति । सकृन्मन्त्रैर्द्विस्तूष्णीम् ।

ॐ विराजं च स्वराजं चाभिष्टीर्या च नो गृहे ।
लक्ष्मी राष्ट्रस्य या मुखे तया मा सꣳसृजामसि ॥

दक्षिणे कर्णे दक्षिणं कुण्डलं प्रतिमुञ्चति ।

ॐ ऋतुभिष्ट्वाऽऽर्त्तवैरायुषे वर्चसे संवत्सरस्य धायसा तेन सन्ननुगृह्णामि ।

दक्षिणकर्णस्थं कुण्डलं यथा न पतति तथाऽपिदधाति ।

ॐ विराजं च स्व० सृजामसि । वामे कर्णे उत्तरं कुण्डलं प्रतिमुञ्चति ।

ॐ ऋतुभिष्ट्वाऽऽर्त्तवै० । सव्यकर्णस्थं कुण्डलं पूर्ववदपिदधाति । अत्र काण्डानुसमय एव ।

ॐ इयमोषधे त्रायमाणा सहमाना सरस्वती ।

सा मा हिरण्यवर्चसं करोतु पुरुषु प्रियं
ब्रह्मवर्चसिनं मा करोत्वया शाऽसि ॥

इति ग्रीवायामभिहोमसंस्कृतं मणिं बध्नाति ।

ॐ शुभिके शुभमारोह शोभयन्ती मुखं मम ।
मुखं च मम शोभय भूयाꣳसं च भगं कुरु ॥
यामाहरज्जमदग्निः श्रद्धायै कामायास्यैं इमां ताम्
प्रतिमुञ्चेऽहं भगेन सह वर्चसा ।

इत्यप्रामादितां स्रजं धारयति ।

ॐ यदाञ्जनं त्रैककुदं जातꣳ हिमवत उपरि ।
तेन वामाञ्जेऽहं भगेन सह वर्चसा मयि पर्वतपूरुषम् ॥
इत्यासादितेनाञ्जनेन द्वाभ्यां हस्ताभ्यां युगपदक्षिणी अनक्ति ।

ॐ यन्मे मनः परागतं यद्वा मे अपरागतम् ।
राज्ञा सोमेन तद्वयमस्मासु धारयामसि ॥

इत्यात्मानमादर्शेऽवेक्षते ।

ॐ देवस्य त्वा स० हस्ताभ्यां प्रतिगृह्णामि । इत्यासादितं वैणवं दण्डं प्रतिगृह्णाति ।

ॐ इन्द्रस्य वज्रोऽस्यभिनो मा पातम् ।
तमूर्ध्वं दण्डं सोदकेन हस्तेन त्रिरन्मार्ष्टि । ततः—

ॐ वेणवेजयास्मद्दृद्विपतस्तस्कराग्सर्पान्सूपान्श्वापदान्रक्षाꣳसि पिशाचाश्चौरुपेयाद्भयाभो दण्ड रक्ष विश्वस्माद्भयाद्रक्ष सर्वतो जहि तस्करानमयः सर्ववृक्षेषु जायसे त्वꣳ सपत्नहा जहि शत्रुगणान्सर्वान्समन्तं मघवानिव । शिरस उपरि प्रदक्षिणं दण्डं त्रिर्भ्रमयति ।

ॐ प्रतिष्ठ स्थो देवते मा मा सतापम् ।
उपविष्ट एवोपानहौ युगपदध्यवरोहति ।

ॐ प्रजापतेः शरणमसि ब्रह्मणश्छदिः ।

इति च्छत्रं प्रतिगृह्णाति ।

ॐ यो मे दण्डः परापतद्विहायसोऽधिभूम्याम् ।
इमं तं पुनराददेऽयमायुषे च बलाय च ॥

इति दण्डं पुनरादत्ते यदि गृहीतो हस्तात्पतेत् । इदं दण्डधारणं मधुपर्कसमाप्त्यन्तमावश्यकम् । ततो रथाद्यन्यतमं यानमारुह्य पूजकसमीपं गच्छेत् । गृह एव यदि पूजकस्तदा वाहनारोहणाभावः ।

ॐ सम्स्रवन्तु दिशो मयि समागच्छन्तु सूनृताः ।
सर्वे कामा अभियन्तु नः प्रिया अभिस्रवन्तु नः प्रियाः ॥

इति दिश उपतिष्ठते । ततो यत्र पूजां करिष्यन्तो भवन्ति तत्र गच्छन्नेव ॐ यशोऽसि यशोऽहं त्वयि भूयासममुकशर्मन्निति सभ्यवीक्षते ।

अथ मधुपर्कः—पूजकः समावर्तनदिने स्वगृहं प्रत्यागताय स्नातकायाऽऽसनादि कल्पयित्वा पूज्यं प्राङ्मुखमुपवेश्यानियतसंख्यदर्भमयं कूर्चं प्रकल्प्य पाद्यार्था अपो हस्वपात्रे संभृत्य महापात्रेणापिदध्यात् । एवमर्घ्यार्थानामाचमनीयानां च पृथक्पात्रयोः संभरणमपिधानं च । ततः कांस्यपात्रे दध्यानीय मध्वानयति । ततो घृतमिति त्रिवृतं मधुपर्कं कृत्वा महापात्रेण पिधाय सूत्रेणाऽऽवेष्टयेत् । ततो गां वस्त्रं यज्ञोपवीतद्वयं यथाविभवमाभरणानि माल्यादीनि चोपकल्पयेत् । गृहस्यैशानभागे प्रागग्रान्दर्भानास्तीर्य तेषु द्रव्याणामासादनम् । पूजकः पूज्यस्य दक्षिण उदङ्मुख उपविश्याऽऽचम्य प्राणानायम्य देशकालौ संकीर्त्येमं स्नातकं मधुपर्केण पूजयिष्य इति संकल्पं कुर्यात् ।

पूजक उच्चैः-ॐ अर्घ्य इति त्रिः सकृद्वा पूज्यं प्राह । कुरुतेति पूज्यः । तत उच्चैः—ॐ कूर्च इति त्रिः सकृद्वा प्राह । पूज्यः सुकूर्च इत्युक्त्वा हस्ताभ्यां प्रतिगृह्य ॐ ' राष्ट्रभृदस्याचार्यासन्दी मा त्वद्योषम् ' उदगग्रे कूर्चे प्राङ्मुख उपविशेत् । ततः—ॐ पाद्यमिति त्रिः सकृद्वा प्राह । सुपाद्यमिति पूज्यः । ततः पूज्यस्य पादौ प्रक्षालयति । अत्र स्मार्तं द्विराचमनम् । ततः पूज्यः—

विराजो दोहोऽसि मयि दोहः पद्यायै विराजः ।
प्रक्षालयितुर्हस्तावभिमृशति ।
मयि तेज इन्द्रियं वीर्यमायुः कीर्तिर्वर्चो यशो बलम्

आत्मानं प्रत्यभिमृश्याप उपस्पृशेत्। ततोऽर्घ्यं अर्घ्यं गन्धमाल्यव-स्त्रयज्ञोपवीतद्रव्यालंकरणसहितं गृहीत्वा, ॐ अर्घ्यमिति त्रिः सकृद्वा प्राह। पूज्यः स्वर्घ्यमित्युक्त्वा

आ मा गन्ययशसा सꣳसृज तेजसा वर्चसा पयसा च।
तं मा कुरु प्रियं प्रजानामधिपतिं पशूनाम्॥

गन्धमाल्यायञ्जलौ पूजकेन किंचिन्निनीयमानमर्घोदकं प्रतिगृ-ह्णाति। तत आत्मानं गन्धमाल्यवस्त्रकुण्डलस्रगादिभिरलंकृत्यावशिष्टम-र्घ्यजलं पूजकाय प्रदाय, ॐ समुद्रं वः प्र० मन्त्रयः। तज्जलं पूजकेन निनीयमानमनुमन्त्रयते। ततः पूजकः—ॐ आचमनीयमिति त्रिः सकृद्वा प्राह। पूज्यः स्वाचमनीयमित्युक्त्वा ॐ अमृतोपस्तरणमसि। पूजकद-त्तजलार्धेनाऽऽचामति। पूजकः—ॐ मधुपर्क इति त्रिः सकृद्वा प्राह। पूज्यः सुमधुपर्क इत्युक्त्वा देवस्य त्वा० हस्ताभ्यां प्रतिगृह्णामि। आम्यावताऽञ्जलिना प्रतिगृह्य

ॐ पृथिव्यास्त्वा नाभौ सादयामीडायाः पदे।

तं भूमौ प्रतिष्ठाप्य

ॐ यन्मधुनो मधव्यं परममन्नाद्यꣳरूपं तेनाहं मधुनो मधव्येन परमेण रूपेण परमो मधव्योऽन्नादो भूयासम्।

अङ्गुष्ठेनोपमध्यमयोपकनिष्ठिकया चाङ्गुल्या मधुपर्कमालोडयति। सकृन्मन्त्रेण द्विस्तूष्णीम्।

ॐ तेजसे त्वा श्रियै यशसे बलायान्नाद्याय प्राश्नामि।

मन्त्रावृत्त्याऽङ्गुष्ठेनोपमध्यमयोपकनिष्ठिकया चाङ्गुल्या त्रिर्मधुपर्कं प्राश्नाति। हस्तं प्रक्षाल्य शेषम् उच्छिष्टं प्रयच्छति। तदभावे सर्वं प्राश्नीयात्। ॐ अमृतापिधानमसि। सर्वेण पूर्वाचमनशिष्टजलेनाऽऽचा-मति। ततो मुखं हस्तं च प्रक्षाल्य स्पार्तमाचमनं कुर्यात्। ततः—ॐ गौरिति त्रिः सकृद्वा प्राह। पूज्यः सुगौरित्युक्त्वा

ॐ गौर्धेनुर्भव्या माता रुद्राणां दुहिता वसूनाꣳ स्वसाऽऽदित्यानाम मृतस्य नाभिः।

प्रणुवोचं चिकितुषे जनाय मा गामनागामदितिं वधिष्ट॥

पिबतूदकं तृणान्यत्तु। ॐ उत्सृजत इति पठित्वा तामुत्सृ-

जेत् । पूजको माषसहितमन्नं संस्कृत्य सिद्धेऽन्ने ॐ भूतमिति त्रिः सकृद्वा माह । पूज्यः—

ॐ तत्सुभूतं विराडन्नं तन्मा क्षायि तन्मेऽशीय तन्म ऊर्जं धास्तत्सुभूतम् ।

इति पठित्वा ब्राह्मणान्भोजयतेति मत्याह । ततः पूजको ब्राह्मणभुक्तशिष्टमन्नं स्नातकाय ददाति । पूज्यः—

द्यौस्त्वे ददातु पृथिवी प्रतिगृह्णातु पृथिवी ते ददातु प्राणः प्रतिगृह्णातु प्राणस्त्वाऽश्नातु प्राणः पिबतु ।

पूजकेन दत्तमन्नं प्रतिगृह्णाति ।

ॐ इन्द्राग्नी मे वर्चः कृणुतां वर्चः सोमो बृहस्पतिः ।
वर्चो मे विश्वे देवा वर्चो मे धत्तमश्विना ।

यावदन्नार्थं प्राश्नाति । ततो मुखादिकं प्रक्षाल्य द्विराचामेत् । भुक्तवतं पञ्चवर्षा प्रथमप्रसूता गौर्देयेत्येके । भोजनान्तो हि मधुपर्कः । अनेनैव प्रकारेणाचार्यश्वशुरवैवाह्यादिभ्यो मधुपर्कदानम् । यानारोहणं दिशामुपस्थानं पूजकनिरीक्षणं च समन्त्रमुक्तं तत्स्नातकस्यैव भवति नर्त्विगादीनाम् । ततः स्नातको ब्राह्मणभोजनं भूयसीदक्षिणादानं च विधाय कर्मसाद्गुण्याय विष्णुं संस्मृत्य कर्मेश्वरायार्पयेत् ।

इति समावर्तनम् ।

---

अथ विवाहप्रयोगः ॥

तत्र कन्यावरणं वाङ्निश्चयो नान्दीश्राद्धादिकं च वरपितृकर्तृकम् । तच्च कन्यादानादिकं च कन्यापितृकर्तृकम् । पाणिग्रहणं विवाहहोमादिकं च वरकर्तृकम् । द्वितीयादिविवाहे तु नान्दीश्राद्धमपि वरकर्तृकम् । इत्यनेककर्मसमुदायविशेषो विवाहपदार्थः । तेन कन्यापुत्रयोः संस्कारो भवति । कन्यादाता सुमुहूर्ते गृहाङ्गणे यथोक्तलक्षणं तोरणादियुक्तं मण्डपं कृत्वा तत्र चतुर्हस्तचतुरस्रपरिमाणां समचतुरश्रां हस्तमात्रोच्छ्रायां सोपानयुतां सुश्लक्ष्णां वेदिं कुर्यात् । वरपित्रा तु स्वगृहे यथोक्तलक्षणो मण्डप एव कार्यो न वेदिः । ततो यथाकालं वैवाहिके ज्योतिर्विदादिष्टे शुभे मुहूर्ते कन्यापक्षीयपुरुषो वधूं सुगन्धितैलयवारक-

हरिद्रादिमङ्गलद्रव्यैरुद्वर्तनपूर्वकमुष्णोदकेन यथाचारं संस्नाप्य तच्छिष्टद्रव्यैरुद्वर्तनपूर्वकं तथैव वरं संस्नापयेयुरित्याचारः। ततः कन्यादाता विवाहदिने तत्पूर्वदिने वा पूर्वाह्णे कृतमाङ्गलिकस्नानो धृतमाङ्गलिकवेष उपलिप्ते रङ्गवल्लिकायुक्ते माङ्गणे शुभवस्त्राच्छादिते पीठासने प्राङ्मुख उपविश्य स्वस्य दक्षिणतः कृतमाङ्गलिकस्नाना धृतमाङ्गलिकवेषां पत्नीं तस्या दक्षिणतस्तथाभूतां कन्यां चोपवेश्याऽऽचम्य प्राणानायम्येष्टदेवतागुर्वादीन्नमस्कृत्य देशकालौ संकीर्त्य ममास्याः अमुकनाम्न्याः कन्याया ब्राह्मविवाहविधिना विवाहसंस्कारं करिष्ये इति संकल्पं कुर्यात्। वरपिता स्वस्यामुकशर्मणः पुत्रस्य विवाहसंस्कारं करिष्ये इत्येवं संकल्पं कुर्यात्। ततो गणपतिपूजनं पुण्याहवाचनं मातृकापूजनं नान्दीश्राद्धं मण्डपदेवताप्रतिष्ठापनं च कुर्यात्। अत्राग्निः प्रीयतामिति विशेषः। अङ्कुरारोपणग्रहमखौ तु पूर्वं पृथगेव यथावकाशं कार्यौ। न तु नान्दीश्राद्धोत्तरं कर्तव्यतानियमः। तत उभावपि मण्डपदेवताप्रतिष्ठापनानन्तरं विवाहाङ्गदेवताकुलदेवताप्रीत्यर्थं यथाचारं द्विजसुवासिनीः कुमारादींश्च यथाशक्ति यथासंपन्नान्नेन भोजयेताम्। एवमन्येऽपि वृद्धपरम्परागता उच्चावचा देशधर्मा ग्रामधर्माः कुलधर्माश्चात्र कर्तव्याः।

अथ वरवरणम् —यस्मिन्कस्मिंश्चिच्छुभे मुहूर्ते कन्यावरणात्पूर्वमनन्तरं वा यः कश्चिद्वृद्धः कन्यापक्षीयो वरपितरं प्रति ब्रूयात्। एतस्याः कन्यायास्त्वत्पुत्रं भर्तृत्वेन स्वीकर्तुं सुहृद्भिः सहाहमागतो भवद्भिर्वरपूजनार्थमनुज्ञा दयेति। ततो वरपिता दत्ता मयाऽनुज्ञेति वदेत्। ततः पुरोहितादिः शुभपादे शुभवस्त्राच्छादिते पीठासने ॐ अत्नृश्सरा० स्वस्ति न इन्द्रो० इति मन्त्राभ्यां प्राङ्मुखं शुक्लवस्त्रं साल कारं सुवेषं वरमुपवेशयेत्। ततः कन्यापिता वरस्य पुरोभागे प्रत्यङ्मुख उपविश्य वरपित्रादिसमीपे गणपत्यादिस्मरणपूर्वकममुकप्रवरान्वितामुकगोत्रोत्पन्नाया अमुकप्रपौत्र्या अमुकपौत्र्या अमुकपुत्र्या अमुकनाम्न्यै कन्यायै, अमुकप्रवरान्वितामुकगोत्रोत्पन्नममुकप्रपौत्रममुकपौत्रममुकपुत्रममुकशर्माणं भर्तृत्वाय वृणीमह इत्युपवीतादिभिर्वृणुयात्। वरपिता वृणीध्वमिति वदेत्। एवं पुनर्द्विः। वाढमिति वरपिताऽङ्गी कुर्यात्। वरणीयेयं कन्येति पित्रादिभिरनुज्ञाया दत्ताया स्वी करोमीति वरो ब्रूयात्। ततो वरस्य पादौ प्रक्षाल्य गन्धपुष्पाक्षतनीराजनवस्त्रादिभिर्यथाविभवं संपूज्य यथाचारं दुग्धादिप्राशनं तेन कार-

यित्वा नारिकेलफलं हस्ते दद्यादित्याचारमाप्तम् । इदानीं सीमान्ते वर-पूजनं यत्कुर्वन्ति तदेवेदं तत्रैवानया रीत्या वरवरणं कर्तव्यम् । इति वरवरणपूर्वकं वरपूजनम् ।

अथ वरस्य वधूगृहगमनम्—वरः कृतनित्यक्रियः स्वलंकृतः स्रग्वी दातृदत्तवस्त्रादिभूषित इष्टदेवताकुलदेवतागुर्वादीन्नमस्कृत्य मम वधूगृह-गमनकर्मणः पुण्याहं भवन्तो ब्रुवन्त्वित्यादिभिः पुण्याहवाचनं कृत्वाऽ-कृत्वा वा यथाविभवमश्वाद्यन्यतमयानमारुह्य सितच्छत्रः स्वर्चितैः सुभू-षितैर्ज्ञातिबान्धवैरियमेव सा येत्यादिमन्त्रपाठपरैर्ब्राह्मणैः पुरंध्रीभिर्जल-कुम्भदर्पणकन्यापुष्पाक्षतदीपमालाध्वजलाजमङ्गलवाद्यघोषैर्नृत्यद्भिर्न-र्तकादिभिश्च युतो वधूगृहं गत्वा द्वारदेशे प्राङ्मुखः स्थित्वा नीराजन-पूर्णकुम्भहस्ताभिः पुरंध्रीभिः प्रत्युद्याताभिर्नीराजितोऽन्तर्गृहं प्रविश्य मण्डपमध्ये हरितेषु दर्भेषु संस्थापिते सोत्तरच्छदे चतुष्पादभद्रपीठे प्राङ्मुख उपविशेत् । अत्र शिष्टाः कन्यावरणं कन्यापूजनं वाग्दानं च कुर्वन्ति ॥

अथ कन्यावरणम्—ज्योतिर्विदादिष्टे विवाहनक्षत्रयुते शुभे काले द्वौ चत्वारोऽष्टौ दश वा ब्राह्मणाः प्रशस्तवेषा वरेण तत्पित्रा वा प्रेषिताः, ॐ अनृक्षरा ऋजवः सन्तु पन्था इति मन्त्रपाठपुरःसरं माङ्ग-ल्यद्रव्यगन्धताम्बूलवस्त्राभरणयुतप्रशस्तवेषाभिः पुरंध्रीभिः सह गीतवा-दित्रघोषेण कन्यागृहमेत्य शुभे वस्त्राच्छादिते पीठे प्राङ्मुखीमलंकृतां सुवेषां कन्यामुपवेश्य गन्धताम्बूलादि हस्ते दत्त्वा तत्पित्रादयो गणपति-पूजनपूर्वकं प्राङ्मुखासीना अमुकप्रवरान्वितामुकगोत्रोत्पन्नायामुकप्रपौत्रा-यामुकपौत्रायामुकपुत्रायामुकशर्मणे वराय, ततोऽमुकप्रवरोपेताममुकगोत्रो-त्पन्नाममुकप्रपौत्रीममुकपौत्रीममुकपुत्रीममुकनाम्नीं कन्यां भार्यात्वाय वृणीमह इति ब्रूयुः । अथ कन्यादाता भार्याज्ञातिबन्धूननुमतिं गृहीत्वा वृणीध्वमिति वदेत् । एवं पुनर्द्विः प्रयुज्य दास्यामीति त्रिरुच्चैर्वदेत् ।

ततो वरपित्रादिर्गन्धाक्षतशुभवस्त्रयुग्मभूषणताम्बूलपुष्पादिभिः कन्यां पूजयेत्संप्रदायागतैर्मन्त्रैः । इति बौधायनोक्तं कन्यावरणम् ॥

अथ वाग्दानम्—कन्यादाता प्राङ्मुख उपविश्य कन्यां वामत उप-वेश्याऽऽचम्य प्राणानायम्य देशकालौ संकीर्त्य करिष्यमाणविवाहाङ्ग-

भूतं वाग्दानमहं करिष्ये तदङ्गं गणेशपूजनं च करिष्ये इति संकल्प्य गन्धादिदक्षिणान्तोपचारैर्गणपतिं संपूज्य यथाचारं कलशपूजनादि कृत्वा स्वस्थाने कन्यापूजयितारमुपवेश्य स्वयं तत्प्राच्यां प्रत्यङ्मुख उपविश्य गन्धताम्बूलादिना पूजयेत् । स च दातारम् । तौ च स्वस्व मान्यान्यथाचारं दापयित्वा गृह्णीयाताम् । ततः कन्यादाता हरिद्राखण्डं पञ्च दृढपूगफलानि गन्धाक्षतसहितानि चाऽऽचाराद्गृहीत्वाऽमुकप्रवरान्वितामुकगोत्रोत्पन्नाममुकप्रपौत्रीममुकपौत्रीममुकपुत्रीममुकनाम्नीं कन्यां ज्योतिर्विदादिष्टे मुहूर्ते दास्ये । वाचा संप्रदद इति चोक्त्वा

अव्यङ्गेऽपतितेऽक्लीबे दशदोषविवर्जिते ।
इमां कन्यां प्रदास्यामि देवाग्निद्विजसंनिधौ ॥

इति पठित्वा वरपित्रादिवस्त्रप्रान्ते तानि पूगफलानि प्रक्षिप्य नयं प्रजामिति प्रतिष्ठामन्त्रेण वस्त्रप्रान्ते बद्ध्वा ग्रन्थिं च दत्त्वा चन्दनादिना चर्चयेत् । ततो हरिद्राखण्डं पञ्च पूगफलानि तथैव वरपित्रादिर्गृहीत्वाऽमुकप्रवरान्वितामुकगोत्रोत्पन्नामुकवरविषये निश्चिता भवन्त्विति दातृवस्त्रप्रान्ते प्रक्षेपादि कुर्यात् । ततः कन्यादाता—

वाचा दत्ता मया कन्या पुत्रार्थं स्वीकृता त्वया ।
कन्यावलोकनविधौ निश्चितस्त्वं सुखी भव ॥

इति वरपितरं प्रति पठेत् । स च—

वाचा दत्ता त्वया कन्या पुत्रार्थं स्वीकृता मया ।
वरावलोकनविधौ निश्चितस्त्वं सुखी भव ॥

इति कन्यापितरं प्रति पठेत् । ब्राह्मणाः शिवा आपः सन्तु । सौमनस्यमस्तु । अक्षतं चारिष्टं चास्तु । दीर्घमायुः श्रेयः शान्तिः पुष्टिस्तुष्टिश्चास्तु । एतद्वः सत्यमस्त्विति वदेयुः । ततः कन्या विवाहसौभाग्याद्यभिवृद्ध्यर्थं शचीपूजनमहं करिष्ये इति संकल्प्य पात्रस्थसिततण्डुलपुञ्जे शचीमावाह्य पञ्चोपचारैः पूजयेत् ।

देवेन्द्राणि नमस्तुभ्यं देवेन्द्रप्रियभामिनि ।
विवाहं भाग्यमारोग्यं पुत्रलाभं च देहि मे ॥

इति शचीं संप्रार्थ्य सुवासिनीभिर्नीराजनादिमाङ्गलिकं कार्यम् । विप्राश्च गन्धताम्बूलादिभिः पूजिता आशीर्मन्त्रान्पठेयुः सौभगपद्रान्यांश्च । ते च—

ॐ समिद्धस्य श्रयमाणः पुरस्ताद्ब्रह्म वन्वानो अजरꣳ सुवीरम्।
आरे अस्मदमतिं बाधमान उच्छ्रयस्व महते सौभगाय॥
ॐ वनस्पते शतवल्शो वि रोह सहस्रवल्शा वि वयꣳ रुहेम।
यं त्वाऽयꣳ स्वधितिस्तेतिजानः प्रणिनाय महते सौभगाय॥
ॐ सं दिव्येन दीदिहि रोचनेन विश्वा आ भाहि प्रदिशः पृथिव्याः।
सं वेध्यस्वाग्ने प्र च बोधयैनमुच्च तिष्ठ महते सौभगाय॥
ॐ बृहस्पते सवितर्बोधयैनꣳ संशितं चित्सन्तराꣳ संशिशाधि।
वर्धयैनं महते सौभगाय॥
ॐ चतुःशिखण्डा युवतिः सुपेशा घृतप्रतीका भुवनस्य मध्ये।
मर्मृज्यमाना महते सौभगाय॥

इत्यादयः। नयं प्रजामित्यादयश्च। ततो गन्धताम्बूलादिभिर्ब्राह्मणान्संपूज्य तेभ्य आशिषो गृह्णीयात्। इति वाग्दानम्।

अथ मधुपर्कः—कन्यादातोदङ्मुख उपविश्य स्वदक्षिणतः पत्नीमुपवेश्याऽऽचम्य प्राणानायम्य देशकालौ संकीर्त्य विवाहार्थमुपस्थितं वरं मधुपर्केणार्हयिष्य इति संकल्प्य कूर्चादिसकलमधुपर्कसामग्रीमासाद्य पूज्यशाखया समावर्तनोक्तरीत्या मधुपर्कपूजां कुर्यात्।

अथ गौरीहरपूजनम्—कन्या स्नाता परिहिताहतवस्त्रा गृहान्तः पूजितस्थाने विदिक्षु मृन्मयैस्त्रिभिस्त्रिभिः कलशैः पिधानोत्तरैः श्रेणीः कृत्वा समन्तात्सूत्रेणाऽऽवेष्ट्य तन्मध्ये सूत्रवेष्टितोपलसहितां दृषदं निधाय तदुपरि श्वेततण्डुलासनपुञ्जे पङ्कजं कृत्वा तत्र पलाद्यन्यतममितां ब्राह्मणकृताग्न्युत्तारणसंस्कारप्राणप्रतिष्ठां हैमीं गौरीहरप्रतिमां स्थापयित्वा तदग्रे पलद्वयतदर्धतदर्धान्यतमपरिमितरजतनिर्मितं कृताग्न्युत्तारणसंस्कारप्राणप्रतिष्ठं नन्दिनं संस्थाप्य कुङ्कुमादिना भित्त्यादौ गौरीहरौ लेखयित्वा :

सिंहासनस्थां देवेशीं सर्वालंकारसंयुताम्।
पीताम्बरधरं देवं चन्द्रार्धकृतशेखरम्॥

करेणाधः सुधापूर्णं कलशं दक्षिणेन तु।
वरदं चाभयं वामेनाऽऽश्लिष्य च तनुप्रियाम् ॥

इति ध्यात्वा

गौरीहरौ महेशानौ सर्वमङ्गलदायकौ।
पूजां गृह्णीतां देवेशौ मङ्गलं कुरुतां सदा ॥

इति मन्त्रेणाऽऽवाहनादिषोडशोपचारैः सौभाग्यादिकामनया पूजयित्वा नन्दिनं पूजयेत्। विसर्जनं तु विवाहान्त आचारात्। ततो देवेन्द्राणीं तत्रैव प्रतिमायामक्षतपुञ्जे वा पूजयित्वा देवेन्द्राणि न० देहि म इति संप्रार्थ्य सौभाग्यादि प्रार्थयमाना तत्रैव तिष्ठेत्। ततः कन्यापिता कन्यया दीपं भज्वालय ब्राह्मणान्सुवासिनीश्च पूजयेत्। तेभ्यो दक्षिणां च दद्यात्। इति गौरीहरपूजनम्।

ततो ब्राह्मणाः स्वलंकृते मण्डपे वेश्मनि वा यथाचारं मङ्गलगीतनृत्यवादित्रादिघोषे क्रियमाणे पूर्वापरभागयोर्हस्तान्तरालं स्थलं विहाय प्रस्थपरिमितैसिततण्डुलैर्द्वौ राशी कृत्वा मध्ये ज्योतिर्विदुक्तकुङ्कुमस्वस्तिकाङ्कितमन्तःपटं राश्योर्मध्य उत्तरदशं धारयेयुः। ततो बन्धुजनः पूर्वराशावश्मनि तण्डुलजीरकयुताञ्जलिकां प्रत्यङ्मुखीं वधूं पश्चिमराशौ पीठे तण्डुलजीरकयुताञ्जलिकं प्राङ्मुखं वरं चावस्थापयेत्। आश्वलायनो वरमेतत्प्राङ्मुखी वधूः प्रत्यङ्मुखो वरः। इत आरभ्य यावदन्तःपटनिःसारणं द्विजा मन्त्रपाठं पुरंध्यो मङ्गलगीतानि कुर्युः। ततो वधूवरौ मनसेष्टदेवतां ध्यायन्तौ समाहितौ तिष्ठताम्। अस्मिन्नवसरेऽवकाशानुरोधेन ज्योतिर्विदो मङ्गलश्लोकान्पठेयुः।

देवो विघ्नविनाशनो गणपतिर्ध्यातश्च चिन्तापहृ-
द्यद्भक्त्या हृतविघ्नका अपि सुरा जाता हरादयः।
योऽत्राविघ्नमुसंज्ञया च कलशे संस्थापितो मण्डपे
सिद्ध्याश्लेषणहर्षितः स उभयोः कुर्यात्सदा मङ्गलम् ॥ १ ॥
वात्सल्यात्पितरौ कपोलयुगुलं स्वस्याऽऽगतौ चुम्बितुं
दृष्ट्वाऽऽकुञ्चितमास्यपद्मममलं संपरिस्मितं सत्वरम्।
अन्योन्यं शिवयोस्ततः सुवदने युक्ते अभूतां तयो-
रित्थं येन विनोदितौ स भगवान्कुर्यात्सदा मङ्गलम् ॥ २ ॥
श्रीमान्काश्यपगोत्रजोऽरुणरुचिर्यः सिंहराशीश्वरः
षट्त्र्यायार्थसुशोभनो गुरुकुजाब्जानां च मित्रं रविः।

दैत्येष्यन्दारिपुः कलिङ्गजननश्चाग्नीश्वरो देवते
मध्ये वर्तुलगेन्द्रिकासुवदनः कुर्यात्सदा मङ्गलम् ॥ ३ ॥
जीवः सिन्धुपतिर्निधिः सुरपतिर्देवो धनुर्मीनयोः
स्वामी त्वाङ्गिरसस्तथोत्तरमुखो दीर्घे स्थितश्चोत्तरे ।
सूर्येन्दुक्षितिजप्रियो बुधसितौ शत्रू च पीतप्रभो
धन्वद्वयादिभयाङ्कके च शुभदः कुर्यात्सदा मङ्गलम् ॥ ४ ॥

एवमन्यानपि मङ्गलश्लोकान्पठेयुः । ततः—

तदेव लग्नं सुदिनं तदेव तारावलं चन्द्रबलं तदेव ।
विद्याबलं दैवबलं तदेव लक्ष्मीपते तेऽङ्घ्रियुगं स्मरामि ॥

ॐ प्रतिष्ठेति ज्योतिर्विदा पठिते विप्राः सद्योऽन्तःपटमुदगपसार्य वधूवराभ्यां परस्परं सुमुहूर्ते निरीक्षणं कारयेयुः । ततो वधूवराभ्यां परस्पर-मञ्जलिस्थतण्डुलजीरकावकिरणं कन्यापूर्वकं कारयेयुराचारात् । ततो द्विजा ऋक्च वेत्यादीनि खण्डानि प्रजापतिः सोमᳩ राजानमसृजतेत्यनुवाकं सिᳩहे व्याघ्र इत्यनुवाकमस्मे देवास इति चतुरो मन्त्रांश्च पठेयुः । तत्तदन्तेऽक्षतारोपणं चाऽऽचारात् ॥

अथ कन्यादानप्रयोगः—कन्यादाता वरदत्तवस्त्राभरणादिरहितां स्वदेयवस्त्राभरणाद्यलंकृतां कृतपीतवस्त्रपरिधानां कन्यां वराय दद्यात् । अश्मानं निष्कास्य पीठे कन्यामुपवेश्य वधूवरयोर्मध्यप्रदेशस्य दक्षिणत उदङ्मुख उपविश्य दक्षिणतः पत्नीमुपवेश्याऽऽचम्य पवित्रपाणिः प्राणानायम्य देशकालौ संकीर्त्यामुकप्रवरान्वितामुकगोत्रोत्पन्नोऽमुकशर्माऽहं मम समस्तपितॄणां निरतिशयसानन्दब्रह्मलोकावाप्त्यादिकन्याप्रतिपादनकल्पोक्तफलावाप्तयेऽनेन वरेणास्यां कन्यायामुत्पादयिष्यमाणसंतत्या द्वादशावरान्द्वादश परान्पुरुषान्पवित्रीकर्तुमात्मनश्च लक्ष्मीनारायणप्रीतये ब्राह्मविवाहविधिना कन्याप्रतिपादनं करिष्य इति संकल्पं कुर्यात् ।

ततः सपत्नीक उत्थायोदङ्मुख एव तिष्ठन्तीं प्रत्यङ्मुखीं कन्यां दक्षिणहस्ते धृत्वा कन्यां कनकसंप० तारणाय चेति पठित्वाऽन्येन येन केनचित्कास्याद्यन्यतमे तैजसे पात्रे धृते प्राङ्मुखेण तिष्ठता वरेण तस्मिन्पात्रे तिष्ठन्त्याः प्रत्यङ्मुख्याः कन्याया दक्षिणे हस्ते धृते हस्तद्वये वा सयवाक्षततुलसीपत्रकुशसहितमुदकं क्षिपंस्त्रयोदश वाक्यानि पठेत् ।

करेणाधः सुधापूर्णं वस्त्रं दक्षिणेन तु ।
वरदं चाभयं वामेनाऽऽश्लिष्य च तनुप्रियाम् ॥

इति ध्यात्वा

गौरीहरौ महेशानौ सर्वमङ्गलदायकौ ।
पूजा गृहीता देवेशौ मङ्गलं कुरुतां सदा ॥

इति मन्त्रेणाऽऽवाहनादिषोडशोपचारैः सौभाग्यादिकामनया पूजयित्वा नन्दिनं पूजयेत् । विसर्जनं तु विवाहान्ते आचारात् । ततो देवेन्द्राणीं तत्रैव प्रतिमायामक्षतपुञ्जे वा पूजयित्वा देवेन्द्राणि न० देहि मे इति संप्रार्थ्य सौभाग्यादि प्रार्थयमाना तत्रैव तिष्ठेत् । ततः कन्यापिता कन्यया दीर्घं मङ्गल्यं ब्राह्मणान्सुवासिनीश्च पूजयेत् । तेभ्यो दक्षिणां च दद्यात् । इति गौरीहरपूजनम् ।

ततो ब्राह्मणाः स्वलंकृते मण्डपे वेश्मनि वा यथाचारं मङ्गलगीतनृत्यवादित्रादिघोषे क्रियमाणे पूर्वापरभागयोर्हस्तान्तराक्षं स्थलं विहाय प्रस्थपरिमितैःसितैस्तण्डुलैर्द्वौ राशी कृत्वा मध्ये ज्योतिर्भिर्लिखितकुङ्कुमस्वस्तिकाङ्कितमन्तःपटं राश्योर्मध्ये उत्तरदशं धारयेयुः । ततो बन्धुजनः पूर्वराशावग्नौ तण्डुलजीरकयुताञ्जलिकां प्रत्यङ्मुखीं वधूं पश्चिमराशौ पाठे तण्डुलजीरकयुताञ्जलिकं प्राङ्मुखं वरं चावस्थापयेत् । आश्वलायनो वरश्चेत्प्राङ्मुखी वधूः प्रत्यङ्मुखो वरः । इत आरभ्य यावदन्तःपटनिःसारणं द्विजा मन्त्रपाठं पुंभ्यो मङ्गलगीतानि कुर्युः । ततो वधूवरौ मनसेष्टदेवतां ध्यायन्तौ समाहितौ तिष्ठेताम् । अस्मिन्नवसरेऽवकाशानुरोधेन ज्योतिर्विदो मङ्गलश्लोकान्पठेयुः ।

देवो विघ्नविनाशनो गणपतिर्ख्यातश्च चिन्तापहृ-
द्यद्भक्त्या हतविघ्नका अपि सुरा जाता हराजादयः ।
योऽत्राविघ्नसुसंज्ञया च कलशे संस्थापितो मण्डपे
सिद्ध्याश्लेषणहर्षितः स उभयोः कुर्यात्सदा मङ्गलम् ॥ १ ॥
वात्सल्यात्पितरौ कपोलयुगुलं स्वस्याऽऽगतौ चुम्बितुं
दृष्ट्वाऽऽकुञ्चितमास्यपद्ममचलं सेषत्स्मितं सत्वरम् ।
अन्योन्यं शिवयोस्ततः सुवदने युक्ते अभूतां
रित्थं येन विनोदितौ स भगवान्कुर्यात्सदा म[illegible]म् ॥
श्रीमान्काश्यपगोत्रजोऽरुणसारथिर्यः सिंहरा[illegible]रः
षट्त्र्यायारिस्थसुशोभनो गुरुकुजाब्जानां च मित्रं रविः ।

दैत्येज्यन्दरिपुः कलिङ्गजननश्चाग्नीश्वरौ देवते
मध्ये वर्तुलगौन्द्रिकासुवदनः कुर्यात्सदा मङ्गलम् ॥ ३ ॥
जीवः सिन्धुपतिर्विधिः सुरपतिर्देवौ धनुर्मीनयोः
स्वामी त्वाङ्गिरसस्तयोश्चरमुखो दीर्घे स्थितश्चोत्तरे ।
सूर्येन्दुक्षितिजप्रियो बुधसितौ शत्रू च पीतप्रभो
धाणद्वयाद्रिभवाङ्कके च शुभदः कुर्यात्सदा मङ्गलम् ॥ ४ ॥

एवमन्यानपि मङ्गलश्लोकान्पठेयुः । ततः—

तदेव लग्नं सुदिनं तदेव ताराबलं चन्द्रबलं तदेव ।
विद्याबलं दैवबलं तदेव लक्ष्मीपते तेऽङ्घ्रियुगं स्मरामि ॥

ॐ प्रतिष्ठेति ज्योतिर्विदा पठिते विप्राः सञ्जोऽन्तःपटमुदगपसार्य वधूवराभ्यां परस्परं सुमुहूर्तं निरीक्षणं कारयेयुः । ततो वधूवराभ्यां परस्परमञ्जलिस्थतण्डुलजीरकावकिरणं कन्यापूर्वकं कारयेयुराचारात् । ततो द्विजा ऋचवचेत्यादीनि खण्डानि प्रजापतिः सोमꣳ राजानमन्नजतेत्यनुवाकं सिꣳहे व्याघ्र इत्यनुवाकमस्मे देवास इति चतुरो मन्त्रांश्च पठेयुः । तदन्तेऽक्षतारोपणं चाऽऽचारात् ॥

अथ कन्यादानप्रयोगः—कन्यादाता वरदत्तवस्त्राभरणादिरहितां स्वदेयवस्त्राभरणाद्यलंकृतां कृतपीतवस्त्रपरिधानां कन्यां वराय दद्यात् । अश्मानं निष्काश्य पीठे कन्यामुपवेश्य वधूवरयोर्मध्यप्रदेशस्य दक्षिणत उदङ्मुख उपविश्य दक्षिणतः पत्नीमुपवेश्याऽऽचम्य पवित्रपाणिः प्राणानायम्य देशकालौ संकीर्त्यामुकप्रवरान्वितामुकगोत्रोत्पन्नोऽमुकशर्माऽहं मम समस्तपितृणां निरतिशयसानन्दब्रह्मलोकावाप्त्यादिकन्याप्रतिपादनकल्पोक्तफलावाप्तयेऽनेन वरेणास्यां कन्यायामुत्पादयिष्यमाणसंतत्या द्वादशावरान्द्वादश परान्पुरुषान्पवित्रीकर्तुमात्मनश्च लक्ष्मीनारायणप्रीतये ब्राह्मविवाहविधिना कन्याप्रतिपादनं करिष्य इति संकल्पं कुर्यात् ।

ततः सपत्नीक उत्थायोदङ्मुख एव तिष्ठन्तीं प्रत्यङ्मुखीं कन्यां दक्षिणहस्ते धृत्वा कन्यां कनकसंप० तारणाय चेति पठित्वाऽन्येन येन केनचित्कास्याद्यन्यतमे तैजसे पात्रे धृते प्राङ्मुखेन तिष्ठता वरेण तस्मिन्पात्रे तिष्ठन्त्याः प्रत्यङ्मुख्याः कन्याया दक्षिणे हस्ते गृहीते हस्तद्वये च सयवाक्षततुलसीपत्रकुशसहितमुदकं क्षिपंस्त्रयोदश वाक्यानि पठेत् ।

आश्वलायनो वरो दाता याजुषो विपरीतं वा तदा बध्वा हस्तोऽध उपरि वरहस्त इत्येवमाश्वलायनरीत्या वरहस्तोऽधो वधूहस्त उपरीत्येवं याजुषरीत्या चोपर्यधाभावो द्रष्टव्यः। ततः कन्या तारयतु। पुण्यं वर्धताम्। शिवा आपः सन्तु। सौमनस्यमस्तु। अक्षतं चारिष्टं चास्तु। दीर्घमायुः श्रेयः शान्तिः पुष्टिस्तुष्टिश्चास्तु। तिथिकरणमुहूर्तनक्षत्रसंपदस्तु। यच्छ्रेयस्तदस्तु। यत्पापं तत्प्रतिहतमस्तु। पुण्याहं भवन्तो ब्रुवन्तु। स्वस्ति भवन्तो ब्रुवन्तु। ऋद्धिं भवन्तो ब्रुवन्तु। श्रीरस्त्विति भवन्तो ब्रुवन्तु।

ततोऽमुकप्रवरान्वितामुकगोत्रोत्पन्नोऽमुकशर्माऽहं मम समस्तपितॄणामित्यादिप्रीतय इत्यन्तं पूर्ववदुक्त्वाऽमुकप्रवरान्वितामुकगोत्रोत्पन्नायामुकप्रपौत्रायामुकपौत्रायामुकपुत्रायामुकशर्मणे कन्यार्थिने श्रीधररूपिणे वरायामुकप्रवरान्वितामुकगोत्रोत्पन्नाममुकप्रपौत्रीममुकपौत्रीममुकस्य मम पुत्रीममुकनाम्नीं कन्यां वरार्थिनीं श्रीरूपिणीं यथाशक्त्यलंकृतां प्रजापतिदेवत्यां प्रजोत्पादनार्थं तुभ्यमहं संप्रददे इत्युक्त्वा सयवाक्षततुलसीपत्रकुशयुत जलं वरहस्ते क्षिपेत्। ततो वरः ॐ स्वस्तीति प्रतिगृह्णीयात्। एवं कन्यां तारयत्वित्यादि स्वस्तीत्यन्तं वारद्वयं पुनः कार्यम्। ततो दाता—

गौरीं कन्यामिमां विप्र यथाशक्तिविभूषिताम्।
गोत्राय शर्मणे तुभ्यं दत्ता विप्र समाश्रय॥
कन्ये ममाग्रतो भूयाः कन्ये मे देवि पार्श्वयोः।
कन्ये मे पृष्ठतो भूयास्त्वद्दानान्मोक्षमाप्नुयाम्॥
मम वंशकुले जाता पालिता वत्सराष्टकम्।
तुभ्यं विप्र मया दत्ता पुत्रपौत्रप्रवर्धिनी॥

इति पठित्वा ततो धर्मे चार्थे च कामे च नातिचरितव्या त्वयेयमिति श्रावयेत्। वरो नातिचरामीत्यङ्गीकुर्यात्। ततो दाता कृतस्य कन्यादानकर्मणः साङ्गतासिद्ध्यर्थं यथाविभवकल्पितमिदमग्निदैवत्यं हिरण्यं दक्षिणात्वेन तुभ्यमहं संप्रददे इति वरहस्ते दत्त्वा न ममेति वदेत्। वरस्तु सप्तदशकृत्वोऽपान्य

ॐ देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां प्रतिगृह्णामि। राजा त्वा वरुणो नयतु देवि दक्षिणेऽग्नये हिरण्यं तेनामृत-

स्वर्गेष्या वयो दात्रे मयो मह्यमस्तु प्रतिग्रहीत्रे क इदं कस्मा अदात्कामः कामाय कामो दाता कामः प्रतिग्रहीता कामं समुद्रमाविश कामेन त्वा प्रतिगृह्णामि कामैतत्ते एषा ते काम दक्षिणोत्तानस्त्वाऽऽङ्गीरसः प्रतिगृह्णातु ।

इति पठित्वा ॐ स्वस्तीति पठेत् । ततो दाता जलपात्रभोजनपात्रगोमहिष्यश्वगजदासीदासभूशय्यालंकारादि यथाविभवं संकल्पपूर्वकं वराय दद्यात् । तत्र दानमन्त्राः—

परापवादपैशुन्यादभक्ष्यस्य च भक्षणात् ।
उत्पन्नं पापं दानेन ताम्रपात्रस्य नश्यतु ॥

इति ताम्रपात्रस्य ।

यानि कानि च पापानि जन्मोत्थानि कृतानि तु ।
कांस्यपात्रप्रदानेन तानि नश्यन्तु मे सदा ॥ इति कांस्यपात्रस्य ।
अगम्यागमनं चैव परदाराभिमर्शनम् ।
रौप्यपात्रप्रदानेन तानि नश्यन्तु मे सदा ॥ इति रौप्यपात्रस्य ।
जन्मान्तरसहस्रेषु यत्कृतं पातकं मया ।
स्वर्णपात्रप्रदानेन तानि नश्यन्तु मे सदा ॥ इति स्वर्णपात्रस्य ।
यज्ञसाधनभूता या विश्वस्याघौघनाशिनी ।
विश्वरूपधरो देवः प्रीयतामनया गवा ॥ इति गौः ।
इन्द्रादिलोकपालानां या राज्यमहिषी प्रिया ।
महिषासुरजननी साऽस्तु मे सर्वकामदा ॥ इति महिष्याः ।
महार्णवसमुत्पन्न उच्चैःश्रवसपुत्रक ।
सोपस्करस्त्वं विप्राय दत्तः शान्तिं प्रयच्छ मे ॥
इति खलीनाद्युपस्करसहितस्याश्वस्य ।

सुप्रतीक गजेन्द्र त्वं सरस्वत्याऽभिषेचितम् ।
इन्द्रस्य वाहनं शश्वत्सर्वदेवैः सुपूजितम् ॥
विप्र तुभ्यं ददामीमं तेन शान्तिं प्रयच्छ मे ॥ इति गजस्य ।
इयं दासी मया तुभ्यं श्रीवत्स प्रतिपादिता ।
सदा कर्मकरी ह्यस्या यथेष्टं भद्रमस्तु मे ॥ इति दास्याः ।

ॐ परि त्वा गिर्वणो गिर इमा भवन्तु विश्वतः।
वृद्धायुमनुवृद्धयो जुष्टा भवन्तु जुष्टयः॥

तान्यो महो मरुत एव याम्नो विष्णोरेष स्य प्रभृते हवामहे।
हिरण्यवर्णान्ककुभान्यतः स्रुचो ब्रह्मण्यन्तः शंस्यं राध ईमहे॥
दशावनिभ्यो दश कक्ष्येभ्यो दश योक्त्रेभ्यो दश योजनेभ्यः।
दशाभीशुभ्यो अर्चता जरेभ्यो दश धुरो दश युक्तावहद्भ्यः॥
ते अद्रयो दश यन्त्रास आशवस्तेषामाधानं पर्येति हर्यतम्।
त ऊ सुतस्य सोमस्यान्धसोऽशोः पीयूषं प्रथमस्य भेजिरे॥
ते सोमादो हरी इन्द्रस्य निंसतेंऽशुं दुहन्तो अध्यासते गवि।
तेभिर्दुग्धं पपिवान्त्सोम्यं मध्विन्द्रो वर्धते प्रथते वृषायते॥
वृषावो अंशुर्नाकलारिषाथ नेळावन्तः सदमित्स्थ नाशिताः।
रैवत्येव महसा चारव स्थ न यस्य ग्रावाणो अजुषध्वमध्वरम्॥

ततः कण्ठदेशस्थं सूत्रमधो निष्काश्य कुङ्कुमाक्तं कृष्णोर्णास्तुकायुतं च कृत्वा तेन दृढं हरिद्राखण्डं बद्ध्वा तद्वधूवामप्रकोष्ठे वरो बध्नीयात्

ॐ नीललोहितं भवति कृत्यासक्तिर्व्यज्यते।
एधन्ते अस्या ज्ञातयः पतिर्बन्धेषु बध्यते॥

अनेन मन्त्रेण। ततः कटिदेशस्थं सूत्रं निष्काश्य कुङ्कुमाक्तं कृष्णोर्णास्तुकायुतं च कृत्वा तेन दृढं हरिद्राखण्डं बद्ध्वा वरस्य दक्षिणप्रकोष्ठे वधूर्बध्नीयात्तेनैव मन्त्रेण। अथ वधूवरौ परस्परमायुर्वर्धनकरमक्षतारोपणं कुर्याताम्। तद्यथा—तैजसे पात्र आनीते गव्ये क्षीरे किंचिद्घृतमासिच्य पात्रान्तर आर्द्राक्षतशुक्लशालितण्डुलानोप्य वरः क्षालिताञ्जलिः क्षालितवध्वञ्जलौ तेन घृतयुतक्षीरेण स्वहस्तद्वयाङ्गुलिभिर्द्विरुपस्तीर्य द्विवारं तथैव तण्डुलानोप्य तथैव क्षीरेण द्विरभिघारयेत्। ततो वराञ्जलावप्येवं दाताऽन्यो वा कुर्यात्। ततो दातैव तदञ्जल्योः सुवर्णं निधाय वराञ्जलिवध्वञ्जली संयुतौ कृत्वा कन्यां तारयतु। दक्षिणाः पान्तु। बहुदेयं चास्तु। पुण्यं वर्धताम्। शान्तिः पुष्टिस्तुष्टिश्चास्तु। तिथिकरणमुहूर्तनक्षत्रसंपदस्तु। इति वाक्यानि पठेत्। ततो वधूः—ॐ भगो मे कामः समृध्यतामित्यञ्जलिस्थानक्षतान्वरमूर्धन्यारोपयेत्। वरः—ॐ यज्ञो मे कामः समृध्यतामिति स्वाञ्जलिस्थानक्षतान्वधूमूर्धनि। एवं वधूः—ॐ श्रियो मे कामः समृध्यताम्। वरः—ॐ धर्मो मे कामः समृध्यताम्। वधूः—ॐ

प्रजा मे कामः समृध्यताम्। वरः—ॐ यशो मे कामः समृध्यताम्। ततो वधूर्वराञ्जलिं द्विरुपस्तीर्य द्विस्तण्डुलैरापूर्य द्विरभिघारयेत्। ततो दाताऽन्यो वा पूर्ववद्वध्वञ्जलिमापूरयेत्। ततो दातैव पूर्ववद्धिरण्यं निधाय वध्वञ्जलिं वराञ्जलौ निधाय पूर्ववद्वाक्यानि पठेत्। ततो वरो यशो मे० इति वधूमूर्धन्यञ्जलिस्थानक्षतानारोपयेत्। ततो वधूः—भगो मे० इति वरमूर्धन्यञ्जलिस्थानक्षतानारोपयेत्। वरः—धर्मो मे कामः समृध्यताम्। वधूः-श्रियो मे कामः समृध्यताम्। वरः—यशो मे कामः समृध्यताम्। वधूः-प्रजा मे कामः समृध्यताम्। ततो वरः स्वशिरःस्थं पुष्पमादाय घृतयुक्तक्षीरे आप्लाव्य तेन वध्वा ललाटे तिलकं कुर्यात्। एवं वधूरपि स्वशिरःस्थेन पुष्पेण वरललाटे तिलकम्। ततो वधूः स्वकण्ठस्थां पुष्पमालां वरकण्ठे क्षिपेत्। वरः स्वकण्ठस्थां वधूकण्ठे। ततो वरपक्षसुवासिन्यो वधूवरौ प्राङ्मुखावुपवेश्य नीराजनपूर्वकमाचारप्राप्तमप्रयुक्तं संज्ञकं वस्त्रद्वयं सकञ्चुकं मङ्गलसूत्रं च वध्वै समर्प्य तयोरेकं परिधाप्याऽपरमुत्तरीयं कारयेयुः। ततः कञ्चुकीं परिधापयेयुः। ततो वरः—

माङ्गल्यतन्तुनाऽनेन भर्तृजीवनहेतुना।
कण्ठे बध्नामि सुभगे सा जीव शरदां शतम्॥

इति मन्त्रेणेष्टदेवतां संस्मरन्मङ्गलसूत्रं वधूकण्ठे बध्नीयात्। आयुष्यं वर्चस्यमित्यादिमन्त्रैस्तां भूषयेच्च। ततो हरिद्राखण्डयुतानि पञ्च पूगी(ग)फलानि दद्यान्यचाराद्गृह्य ...युतानि पात्रे निधाय वधूवरावाबाहनादिदक्षिणान्तोपचारैर्गणानां त्वा० आ नू न इन्द्रेति मन्त्राभ्यां विवाहव्रतरक्षणार्थं गणपतेः पूजां कुर्याताम्। अत्र ब्राह्मणेभ्यो गणपतिप्रीतये यथाविभवं दक्षिणा देया। ततः पुरोधा विवाहव्रतरक्षकं गणपतिमन... ...द्राखण्डयुतां साक्षतपूगद्वयं तयोर्वस्त्रप्रान्ते पृथक्पृथग्बध्नी... ...ो विवाहव्रतसमाप्त्यन्तं तद्ग्रन्थिद्वयं न विसृजेताम्।

...तः पुरोधा नीललोहितं० बृहत्सामेति मन्त्रेण च तयोरुत्तरीयान्तौ मिथो बध्नीयात्। ततः सभार्यो दाता वृद्धाः पुरंध्र्यो ज्ञातयो यान्यत्राथ क्रमाद्यथाचारमाशीर्भिरक्षतारोपणं कुर्युः। ततो वधूः पात्रस्थसिततण्डुलपुञ्जत्रय उदकसंस्थं नाममन्त्रैर्महालक्ष्मीं पार्वतीं शचीं च क्रमेणाऽऽवाह्य दक्षिणान्तोपचारैः पूजयेत्। ततो वधूः सौभाग्याद्यभिवृद्ध्यै महालक्ष्मीपार्वतीशचीप्रीत्यर्थं हरिद्राजीरकसौभाग्यद्रव्यपूरितवंशपात्रवायनानि सुवासिनीः संपूज्य ताभ्यो दद्यात्। तत्र मन्त्राः—

लक्ष्मीप्रिया च लक्ष्मीदा लक्ष्मीव सुजनप्रिया ।
सौभाग्यदा वरस्त्रीणां हरिद्रे श्रीः सदाऽस्तु मे ॥ इति हरिद्रायाः ।
जरा नो जायते यस्मान्मण्डनं शुभकर्मसु ।
तस्माज्जीरकदानेन प्रीयतां गिरिजा मम ॥ इति जीरकस्य ।
कञ्चुकीवस्त्रयुग्मैश्च तथा कर्णावतंसकैः ।
कण्ठसूत्रैश्च भूषाभिः प्रीयतां निमिनन्दिनी ॥ इ० सौभा० द्र० पू० ।

एतानि सदक्षिणानि देयानि । ततो द्विजैराशिषो देयाः । नवो नवो भ० यथा इ तद्र० मा नो अरातिर० भद्रं कर्णेभिः० ४ ।

ततः सतूर्यघोषो वरो वध्वा सह वेद्यां प्राङ्मुख उपविशेत् । वधू-स्ततो गौरीहरसमीपं गत्वोपविशेत् ।

अथ विवाहहोमः--वर आचम्य प्राणानायम्य देशकालौ संकीर्त्य मत्प्रतिगृहीतवधूद्देश्यकभार्यात्वसिद्धिपूर्वकाग्न्यौपासनत्वसिद्धिद्वारा श्री-परमेश्वरप्रीत्यर्थं विवाहहोमं करिष्य इति संकल्पं कृत्वा स्थण्डिलोल्लेख-नादि कृत्वा तत्र योजकनामानमग्निं प्रतिष्ठापयामीति मथितं वधूवरयो-र्वेद्यारोहणात्पूर्वमेव सुवासिन्या श्रोत्रियागारादाहृत्य वेद्या उत्तरतोऽर्धो-भागे स्थापितं लौकिकाग्निं वा प्रतिष्ठाप्य मन्वास्य ध्यात्वा समिद्भयमा-दाय श्रद्ध एहीत्यादि प्राणायामान्तं कृत्वा विवाहहोमकर्मणि या यक्ष्य-माणा इत्यादिप्याहुत्यन्तमुक्त्वा प्रधानहोमेऽग्निं वरुणं चैकैकयाऽऽज्या०। अग्निं गार्हपत्यमेकयाऽऽज्याहुत्या० । अग्निमेकयाऽऽज्या० । दिवं वायुम-श्विनौ सवितारं बृहस्पतिं विश्वान्देवांश्चैकैकयाऽऽज्या० । अग्निं वरुणं चैकैकयाऽऽज्या० । अयासमग्निमेक० । प्रजापतिमेक० । लाजहोमेऽग्निं तिसृभिर्लाजाहुतिभिर्यक्ष्ये । अग्निं स्विष्टकृतमेकया हुतशेषाज्या० क्ष्य इति वदेत् ।

ततो जयहोमे चित्तं चित्तिमित्यादि कामं गन्धर्वमाधीरप्सरसो भुव-नस्य पतिं चैकैकयाऽऽज्या० क्ष्य इत्यन्तमुक्त्वा प्रायश्चित्तहोमेऽग्निं त्रिभि-रित्यादि । पात्रासादने प्रादेशमात्रदक्षमानं व्रीह्यादिबीजानि सपल्लवमुदक-पूर्णं सुभूषितं कलशं दर्वीमाज्यस्थालीं प्रणीताप्रणयनं प्रोक्षणीपात्रमुप-वेषं संमार्गदर्भानिध्मं बर्हिरवज्वलनदर्भानाज्यं लाजांश्च युगपदेवाऽऽसा-दयेत् ।

ततो ब्रह्मोपवेशनादि । पात्रसंमार्गकाले वध्वञ्जलिसंमार्गार्थं कंश्चित्संमार्गदर्भानवशेषयेत् । आज्यपर्यग्निकरणकाले लाजानामपि तेन सह पर्यग्निकरणम् । परिधिपरिधानान्ते लाजान्दृव्योऽभिघार्याऽऽज्याग्न्योर्मध्येनाऽऽनीयाऽऽज्यस्योत्तरतो बर्हिष्यासादयेत् ।

ततः—ॐ सुमङ्गलीरियं वधूरिमाᳬ समेत पश्यत ।
सौभाग्यमस्यै दत्त्वायाथास्तं विपरेतन ॥

इति वधूमीशानदेशतो बान्धवैः समानीयमानां सुमुहूर्ते समीक्षते । इत आरभ्य पाणिग्रहणान्तं कर्म सुमुहूर्त एव कर्तव्यं प्रधानत्वात् । ततो वधूरग्नेरीशानदेशे उपविश्य कर्माङ्गमाचमनं कृत्वाऽग्रेणाग्निं दक्षिणतो गत्वा पत्युर्दक्षिणतः प्राङ्मुख्युपविश्य दक्षिणेनैव हस्तेन पतिमन्वारभते ।

अथ वरस्तदन्वारब्धः परिषेकादिव्याहृतिहोमान्तं कृत्वा प्रधानहोमं कुर्यात् ।

ॐ अग्निरैतु प्रथमो देवतानाᳬ सोऽस्यै प्रजां मुञ्चतु मृत्युपाशात् ।
तदयᳬ राजा वरुणोऽनुमन्यतां यथेयᳬ स्त्री पौत्रमघं नरोदात्स्वाहा ।
अग्नये वरुणाय चेदं न मम ।

ॐ इमामग्निस्त्रायतां गार्हपत्यः प्रजामस्यै नयतु दीर्घमायुः ।
अशून्योपस्था जीवतामस्तु माता पौत्रमानन्दमभिप्रबुध्यतामियᳬ स्वाहा ॥

अग्नये गार्हपत्यायेदं न मम ।

ॐ मा ते गृहे निशि घोष उत्थादन्यत्र त्वद्रुदत्यः संविशन्तु ।
मा त्वम्विकेशी उर आवधिष्ठा जीवपत्नी पतिलोके विराज
प्रजां पश्यन्ती सुमनस्यमानाᳬ स्वाहा । अग्नय इ० ।

ॐ द्यौस्ते पृष्ठᳬ रक्षतु वायुरूरू अश्विनौ च स्तनं धयतस्ते
पुत्रान्सविताऽभिरक्षतु । आवाससः परिधानाद्बृहस्पतिर्विश्वे देवा अभिरक्षन्तु पश्चात्स्वाहा ।

दिवे वायवेऽश्विभ्यां सवित्रे बृहस्पतये विश्वेभ्यो देवेभ्यश्चेदं० ।

ॐ अप्रजस्तां पौत्रमृत्युं पाप्मानमुत वाऽघम् । शीर्ष्णः स्रजमिवोन्मुच्य द्विषद्भ्यः प्रतिमुञ्चामि पापᳬ स्वाहा । अग्नय इ० ॥

ॐ देवकृतं ब्राह्मणं कल्पमानं तेन हन्मि योनिषदः पिशाचान् ।
क्रव्यादो मृत्यूनधरान्पादयामि दीर्घमायुस्तव जीवन्तु पुत्राः स्वाहा । अग्नय इ० ।

इति षट्प्रधानाहुतीर्वारुणीजिह्वायां ज्वालामध्य एव वा जुहुयादिमं मे वरुणेत्यादिपञ्चाहुतीर्हुत्वोत्तरपरिधिसंधिमग्रेणाऽऽसादितमश्मानं निधाय

ॐ आतिष्ठेममश्मानमश्मेव त्वꣳ स्थिरा भव ।
अभितिष्ठ पृतन्यतोऽवबाधस्व पृतनायतः ॥

तत्र दक्षिणपादोपक्रमेण वधूं प्राङ्मुखीमास्थापयति । ततोऽश्मानं निष्काशयेत् ।

अथ पाणिग्रहणम्—वरो ज्योतिर्विदादिष्टे मुहूर्तेऽपरेणाग्निं दर्भराशिद्वयं पूर्वापरमुदगग्रमास्तीर्य

ॐ सरस्वति प्रेदमव सुभगे वाजिनीवति ।
तां त्वा विश्वस्य भूतस्य प्रजायामस्याग्रतः ॥
ॐ गृभ्णामि ते सुप्रजास्त्वाय हस्तं मया पत्या जरदष्टिर्यथाऽसत् ।
भगो अर्यमा सविता पुरन्धिर्मह्यं त्वाऽदुर्गार्हपत्याय देवाः ॥

इति द्वाभ्यां पूर्वदर्भराशाववस्थितः प्रत्यङ्मुखो वरोऽपरदर्भराशाववस्थितायाः प्राङ्मुख्या भार्यायाः साङ्गुष्ठं सलोममुत्तानं हस्तं गृह्णीयात् । ततस्तस्या आत्मानमग्रेण स्थिताया दक्षिणमंसं धृत्वा प्रसव्यं स्वस्य दक्षिणतः प्रत्यङ्मुखी यथा स्यात्तथा प्रतिनिवर्त्य

ॐ अघोरचक्षुरपतिघ्न्येधि शिवा पशुभ्यः सुमनाः सुवर्चाः ।
जीवसूर्वीरसूः स्योना शं नो भव द्विपदे शं चतुष्पदे ॥
तां नः पूषञ्छिवतमामेरयस्व यस्यां बीजं मनुष्या वपन्ति ।
या न ऊरू उशती विस्रयाते यस्यामुशन्तः प्रहरेम शेपम् ॥
सोमः प्रथमो विविदे गन्धर्वो विविद उत्तरः ।
तृतीयोऽग्निष्टे पतिस्तुरीयोऽहं मनुष्यजाः ॥
सोमोऽददाद्गन्धर्वाय गन्धर्वोऽग्नयेऽददात् ।
पशूंश्च मह्यं पुत्रांश्चाग्निर्ददात्यथो त्वाम् ॥
अमूहमस्मि सा त्वं द्यौरहं पृथिवी त्वम् ।
सामाहमृक्त्वं तावेहि संभवाव सह रेतो दधावहै ॥

पुंस्ते पुत्राय वेत्तवै रायस्पोषाय सुप्रजास्त्वाय सुवीर्याय ।
येमां त्वमिन्द्र मीढ्वः सुपुत्राᳪ सुभगां कुरु ।
दशास्यां पुत्रानाधेहि पतिमेकादशं कुरु ॥

इति षड्भिर्मन्त्रैस्तामभिमन्त्रयते । ततो भार्यां यथास्थानमुपवेश्य तदञ्जलौ दर्व्याऽऽज्येनोपस्तीर्य

ॐ इमाँल्लाजानावपाम्यग्नौ समृद्धिकरणान्मम ।
तुभ्यं च संवननं तदग्निरनुमन्यतामयम् ॥

इति मन्त्रावृत्त्या द्विवारं वर एव लाजानावपति । त्रिः पञ्चावत्तिनः । ततस्तूष्णीमभिघार्य शूर्पस्थान्प्रत्यज्य

ॐ इयं नार्युपब्रूतेऽग्नौ लाजानावपन्ती ।
दीर्घायुरस्तु मे पतिरेधन्तां ज्ञातयो मम स्वाहा ॥

आसीन एव दर्वीस्थानीयाञ्जलिना जुहोति । अग्नय इ० । तत —

ॐ उदायुषा स्वायुषोदोषधीनाᳪ रसेनोत्पर्जन्यस्य शुष्मेणोदस्थाममृताᳪ अनु । इति भार्यामुत्थाप्य

ॐ विश्वा उत त्वया वयं धारा उदन्या इव । अतिगाहेमहि द्विषः ॥

इति स्वयमेव मन्त्रमुक्त्वा भार्यासहितः पात्रसहितमग्निं प्रदक्षिणं परिक्रामति । ततः पुनरुपस्तरणलाजावपनादिपरिक्रमणान्तं द्वितीयं तृतीयं च । तत आज्येनैव स्विष्टकृतं हुत्वा जयादीञ्जुहुयात् । ततः शुल्बप्रहरणादि संस्थाजपान्तं कर्म समापयेत् । नात्र निवृदश्वहोमः । ततोऽपरेणाग्निमाचारात्सप्ताक्षतपुञ्जान्प्राक्संस्थानुदक्संस्थान्वा कृत्वा दक्षिणं पादं प्रक्रम्य सव्येनानुप्रक्राम मा सव्येन दक्षिणमतिक्रामीरिति भार्यां संशास्य तस्या दक्षिणं पादं प्रगृह्याप्रगृह्य वा सप्तस्वक्षतपुञ्जेषु यथाक्रमं भार्यया विष्णुक्रमान्क्रमयति । मन्त्रवक्ता वर एव । ॐ एकमिषे विष्णुस्त्वाऽन्वेतु । इति प्रथमम् । ॐ द्वे ऊर्जे विष्णु० तु । द्वितीयम् । ॐ त्रीणि व्रताय वि० तु । तृतीयम् । ॐ चत्वारि मायोभवाय वि० तु । चतुर्थम् । ॐ पञ्च पशुभ्यो वि० तु । पञ्चमम् । ॐ षड्रायस्पोषाय वि० तु । षष्ठम् । ॐ सप्त सप्तभ्यो होत्राभ्यो वि० तु० । सप्तमम् ।

ततः—ॐ सखायौ सप्तपदा बभूव सख्यं ते गमेयं सख्याचे मा योषं सख्यान्मे मा योष्ठाः ।

इति तथैवावस्थापितभार्यायां वरो जपति । ततोऽस्या दक्षिणं पादं स्वदक्षिणेन पादेनाऽऽक्रम्य दक्षिणेन हस्तेनास्या दक्षिणमंसमुपर्युपर्यन्व-वमृश्य

ॐ मम हृदये हृदयं ते अस्तु मम चित्तं चित्तेनान्वेहि मम वाचमेकमना जुषस्व बृहस्पतिस्त्वा नियुनक्तु मह्यं मामेवानुसंरभस्व मयि चित्तानि सन्तु ते मयि सामीच्यमस्तु ते मह्यं वाचं नियच्छतात् ।

इति तस्या हृदयदेशमभिमृशति ।

ॐ प्राणानां ग्रन्थिरसि समाविस्रसः ।

इति नाभिदेशमभिमृशति ।

ततस्तामपरेणाग्निं प्राङ्मुखीमुपवेश्य तस्याः पुरस्तात्प्रत्यङ्मुखस्थित-स्त्वापो हि ष्ठा० ३ हिरण्यवर्णाः० ४ पवमानः सु० स्पा पुनातु इति सकुशपल्लवेनाऽऽसादितकलशोदकेन भार्यां मार्जयति । ततो वृद्धब्राह्मणा ज्ञातिबान्धवाः सुवासिन्यश्चाऽऽशीःपूर्वकं वधूमूर्धन्यासादितानि व्रीह्या-दिबीजानि ॐ या जाता ओषधय इत्यादिभिर्मन्त्रैर्यथाचारमारोपयन्ति ।

ततोऽग्नेः पश्चादुपविश्य विभूतिं धृत्वाऽग्निं संपूज्य कृतस्य विवाहहोम-कर्मणः साङ्गतासिद्ध्यर्थमाचार्यादिभ्यः पूजनपूर्वकं दक्षिणां दत्त्वा यथाविभवं ब्राह्मणान्सुवासिनीश्च भोजयेत् । ततोऽस्मे देवास इत्याद्या आशिषो द्विजा दद्युः । ततो वरः कर्मसाद्गुण्याय विष्णुं स्मरेत् । इति विवाहहोमः ।

ततो वधूवराविक्षुविकाराल्लँवणं चानश्नन्तौ वस्त्राभरणादिभिर्यथा-विभवमात्मानमलंकुर्वाणौ वर्जितमैथुनावधःशायिनौ सह वसतः । एतच्च त्रिरात्रव्रतं पाणिग्रहणदिनमारभ्य ज्ञेयम् ।

अथ वधूप्रवेशः—विवाहहोमानन्तरं वधूबान्धवाः पितृगृहाज्ज्योति-र्विदादिष्टे सुमुहूर्ते तां भार्यां वरं च रथादियानेन वरगृहं नयेयुः । विवा-

ह्याग्निं सर्वेषु तस्मिन्पात्रे भस्मना सह निक्षिप्य जायापत्योः पृष्ठतो हरन्ति। अयं चाग्निर्विवाहहोममारभ्य यावज्जीवं धार्यः। अथ वरः स्वगृहद्वारं प्राप्य दक्षिणं पादमग्रेऽविहर देहलिं मा धिष्ठा इति भार्यां संशास्ति। सा दक्षिणं पादमग्रे कृत्वा देहलीमनधिष्ठायैव गच्छति।

ततो गृहं प्रविश्य तत्पूर्वार्धे शालायामग्न्यायतनं परिकल्प्य तत्पश्चात्सभार्यः प्राङ्मुख उपविश्याऽऽचम्य प्राणानायम्य देशकालौ संकीर्त्य मम विवाहाग्नेर्गृहप्रवेशोत्पादनद्वारा श्रीपरमेश्वरप्रीत्यर्थं गृहप्रवेशाख्यं कर्म करिष्य इति संकल्पं कुर्यात्। ततो गणेशं संपूज्योद्धननादिसंस्कृत आयतने विवाहाग्निं तूष्णीं प्रतिष्ठाप्य प्रज्वलितं कुर्यात्। ततोऽपरेणाग्निं लोहितमानडुहं चर्म प्राचीनग्रीवमुत्तरलोमाऽऽस्तीर्य तदभावे कुशानास्तीर्य

ॐ इह गावो निषीदन्त्विहाश्वा इह पूरुषाः।
इहो सहस्रदक्षिणोऽपि पूषा निषीदतु॥

इति तस्मिञ्जायापती प्राङ्मुखावुदङ्मुखौ वोपविशतः। प्राङ्मुखत्वपक्षे पत्युर्दक्षिणतो भार्या। उदङ्मुखत्वपक्षे तस्य पृष्ठतो वामभागे वा। उभयोर्मन्त्रः। इत आरभ्य नक्षत्रोदयपर्यन्तं वाग्यतावासाते। नक्षत्रोदये सति प्राङ्मुखावुदङ्मुखौ वा भूत्वा दिश उपतिष्ठेते।

ॐ देवीः षडुर्वीरुरणः कृणोत विश्वेदेवास इह वीरयध्वम्।

ततो नक्षत्राणि— ॐ मा हास्म हि प्रजया मा तनूभिरिति।
ॐ मारधाम द्विषते सोमराजन्निति चन्द्रमसम्।

ततः सप्तर्षीन्—
ॐ सप्तर्षयः प्रथमां कृत्तिकानामरुन्धतीं ये ध्रुवतां ह निन्युः।
षट्कृत्तिकामुख्ययोगं वहन्तीयमस्माकं भ्राजत्वष्टमी॥ इति।
ॐ ध्रुवक्षितिर्ध्रुवयोनिर्ध्रुवमसि ध्रुवतास्थितम्।
त्वं नक्षत्राणां मेथ्यसि स मा पाहि पृतन्यतः॥
ॐ नमो ब्रह्मणे ध्रुवायाच्युतायास्तु नमो ब्रह्मणः पुत्राय प्रजापतये

नमो ब्रह्मणः पुत्रेभ्यो देवेभ्यस्त्रयस्त्रिंशेभ्यो नमो ब्रह्मणः पुत्रपौत्रेभ्योऽङ्गिरोभ्यो यस्त्वा ध्रुवमच्युतꣳ सुपुत्रꣳ सपौत्रं ब्रह्म वेद ध्रुवा अस्मिन्पुत्राः पौत्रा भवन्ति शिष्यान्तेवासिनो वसनं कम्बलानि कꣳसꣳ हिरण्यꣳ स्त्रियो राजानोऽन्नमभयमायुः कीर्तिर्वर्चो यशो बलं ब्रह्मवर्चसमन्नाद्यमित्येतानि मयि सर्वाणि ध्रुवाण्यच्युतानि सन्तु । ध्रुवं त्वा ब्रह्म वेद ध्रुवोऽहमस्मिँल्लोकेऽस्मिꣳश्च जनपदे भूयासमच्युतं त्वा ब्रह्म वेद माऽहमस्माल्लोकादस्माच्च जनपदाच्च्योषि द्विषन्मे भ्रातृव्योऽस्मादस्माल्लोकादस्माच्च जनपदाच्च्यवतामचेष्टं त्वा ब्रह्म वेद माऽहमस्माल्लोकादस्माच्च जनपदाच्चेष्टिषि द्विषन्मे भ्रातृव्योऽस्मादस्माच्च जनपदाच्चेष्टतामव्यथमानं त्वा ब्रह्म वेद माऽहमस्माल्लोकादस्माच्च जनपदाद्व्यथिषि द्विषन्मे भ्रातृव्योऽस्माल्लोकादस्माच्च जनपदाद्व्यथतां नभ्यं त्वा सर्वस्य वेद नभ्यमहमस्य जनपदस्य भूयासं मध्यं त्वा सर्वस्य वेद मध्यमहमस्य जनपदस्य भूयासं तन्ति त्वा सर्वस्य वेद तन्तिरहमस्य जनपदस्य भूयासं मेथीं त्वा सर्वस्य वेद मेथ्यहमस्य जनपदस्य भूयासं नाभिं त्वा सर्वस्य वेद नाभिरहमस्य जनपदस्य भूयासं यथा नाभिः प्राणानां विपूवानेवमहं विपूवानेकशतं तं पाप्मानमृच्छतु योऽस्मान्द्वेष्टि यं च वयं द्विष्मो भूयाꣳसि मामेकशतान्पुण्यान्यागच्छन्तु ।

इति ध्रुवमुपतिष्ठते । नक्षत्रादीनामभ्रादिना प्रतिबन्धेनादर्शनेऽपि तस्यां तस्यां दिश्युपस्थानं कर्तव्यम् । तत उपस्थानदेश एव मनस आह्लादकेन वचसा भार्यां संभाष्य पुनः शालां प्रविश्य भार्यया सहापरेणाग्निं प्राङ्मुख उपविशति ।

अथ गृहप्रवेशस्थालीपाकप्रयोगः—वरः सभार्य आचम्य प्राणानायम्याग्निं प्रज्वाल्य ध्यात्वा समिच्चयमादाय श्रद्ध एहीत्यादिप्राणायामान्तं कृत्वा गृहप्रवेशाङ्गभूताग्नेयस्थालीपाकयागकर्मणि ये यक्ष्यमाणे देवते ते परिग्रहीष्यामि । अग्निमेकया चर्वाहुत्या यक्ष्ये । अग्निं स्विष्टकृतमेकया हुतशेषचर्वाहुत्या यक्ष्ये । एते देवते सद्यो यक्ष्य इत्युक्त्वा व्याहृतिभिरग्नौ समिधोऽभ्याधायाग्निं परिस्तीर्योत्तरेणाग्निं दर्भानास्तीर्य तेषु शूर्पं कृष्णाजिनमुलूखलं मुसलं चरुस्थालीं मेक्षणं तण्डुलप्रस्कन्दनार्थं पात्रं दर्वीमाज्यस्थालीं प्रोक्षणीपात्रं हविरासादनार्थं दर्भानुपवेषं संमार्गदर्भानवज्वलनदर्भानाज्यं समिधं चाऽऽसादयेत् । प्रोक्षणीः संस्कृत्याऽऽसादि-

तानि प्रोक्ष्योलूखले व्रीहीनोप्य पत्न्याऽवहत्य प्रक्षाल्योत्तरेणाऽऽसाद्य चरुस्थाल्यां व्रीहितण्डुलानोप्य मेक्षणेनाऽऽलोड्याग्नौ श्रपयित्वा दर्वी मेक्षणं च संमृज्याऽऽज्यविलापनादिपवित्राभ्याधानान्तं कुर्यात् । तत आसादितान्दर्भानग्नेः पश्चादास्तीर्य तत्राऽऽज्यं निधाय शृतं चरुं दर्व्याऽऽज्येनाभिघार्योदगुद्वास्याग्नेः पश्चादास्तृते बर्हिष्याज्यस्योत्तरत आसाद्याग्निं परिषिच्य तूष्णीमासादितां समिधमाधाय मेक्षणेनोपहत्य प्रदीप्तेऽग्नौ जुहोति । अग्नये स्वाहा । इति भार्यान्वारब्धो जुहोति । अग्नय इ० । पुनर्भूय उपहत्य, अग्नये स्विष्टकृते स्वाहा । उत्तरार्धस्य पूर्वार्धे जुहोति । अग्नये स्विष्टकृत इ० । ततः परिस्तरणानि विसृज्य व्यस्तसमस्तव्याहृतिभिश्चतस्रः प्रायश्चित्ताहुतीर्हुत्वोत्तरपरिषेकं कृत्वा संस्थाजपेनाग्निमुपस्थाय तं संपूज्य ललाटे विभूतिं धृत्वा हविःशेषेण ब्राह्मणं विद्यावन्तं भोजयेत् । ततः कृतस्य कर्मणः साङ्गतासिद्ध्य आचार्यायाऽऽसादितमृषभं तन्मूल्यं वा दत्त्वाऽन्येभ्यो भूयसीं च दत्त्वा यथाविभवं ब्राह्मणान्संभोज्य कर्मसाद्गुण्याय विष्णुं संस्मरेत् । इति गृहप्रवेशस्थालीपाकप्रयोगः ।

अथौपासनहोमप्रयोगः—पाणिग्रहणोत्तरं गृहप्रवेशनीयारम्भानन्तरं वा यावज्जीवमस्तमितनक्षत्रदर्शनप्रदोषान्यतमे मुख्यकाले चतुर्धा विभक्ताया रात्रेराद्यभागात्मके गौणकाले वा सायंहोमः । प्रातर्होमस्तूपःपुरोदयोदितपक्षिरावप्रवदनकालान्यतमे मुख्यकाले पञ्चधा विभक्तादिवसस्य प्रथमभागद्वयात्मके गौणकाले वा । सायमेवोपक्रमः । सायं प्रातरेकमेव द्रव्यम् । एक एव कर्ता । पर्वणि स्वयमेव जुहुयात् । सपत्नीकः कर्ताऽऽचम्य प्राणानायम्य देशकालौ संकीर्त्य श्रीपरमेश्वरप्रीत्यर्थं सायमौपासनहोमं व्रीहिभिर्होष्यामीति संकल्पं कुर्यात् । यवपक्षे तु यवैरिति । ततश्चत्वारि शृङ्गेति ध्यात्वाऽग्निं परिस्तीर्य होमद्रव्यमग्नेरुत्तरतो निधाय तदुपरि प्रागग्रां प्रादेशमात्रीमेकां समिधं निधाय दक्षिणेन हस्तेन दर्भानादायौपासनाग्नौ प्रज्वालितैः पर्यग्निकृतान्बर्हिर्निरस्याप उपस्पृश्याग्नेः पश्चात्कूर्चे होमद्रव्यं निदधाति । ततः पूर्वपरिषेकं कुर्यात् । ततो दक्षिणं हस्तं संमृज्य यस्त्वा हृदेत्यग्निमभ्यर्च्य तूष्णीं समिधमग्नावाधाय द्वादशपर्वपरिमितं होमद्रव्यं दक्षिणहस्तेन गृहीत्वा, अग्नये स्वाहा । अग्नय इ० । इत्युत्तरपार्श्वेन जुहोति । ततः पूर्वाहुतिनोऽनिक्रमप्रदेशेपितं द्रव्यं

सर्वमादाय प्रजापतिं मनसा ध्यायन्, प्रजापतये स्वाहा । प्रजापतय इ० । तथैवोत्तरपार्श्वेन जुहोति । ततः परिस्तरणान्यग्नेरुत्तरतो विसृज्यो-त्तरपरिषेकं कुर्यात् ।

ॐ अग्निर्मूर्धा दिवः ककुत्पतिः पृथिव्या अयम् ।
अपाꣳ रेताꣳसि जिन्वति ॥
त्वामग्ने पुष्करादध्यथर्वा निरमन्थत ।
मूर्ध्नो विश्वस्य वाघतः ॥
अयमग्निः सहस्रिणो वाजस्य शतिनस्पतिः ।
मूर्धा कवी रयीणाम् ॥

इति त्रिभिर्मन्त्रैरग्निमुपस्थाय प्रजापते न० इति प्रजापतिमुपतिष्ठते । ततः संस्थाजपं कृत्वाऽग्निं संपूज्य भस्म धृत्वा

श्रद्धां मेधां यशः प्रज्ञां विद्यां बुद्धिं श्रियं बलम् ।
आयुष्यं तेज आरोग्यं देहि मे हव्यवाहन ॥

इत्यग्निं संप्रार्थ्य नमस्कृत्यानेन सायमौपासनहोमेन श्रीपरमेश्वरः प्रीयतामिति कर्मेश्वरायार्पयेत् ।

प्रातरौपासनहोमं तु प्रातरौपासनहोमं व्रीहिभिर्होष्यामीति संकल्पः । सूर्याय स्वाहा । सूर्यायेदं० । प्रजापतये स्वाहा । प्रजापतय इ० । उद्व-यन्त० तच्चक्षुरिति त्रिभिर्मन्त्रैः सूर्योपस्थानं कृत्वा प्रजापत्युपस्थानादि समानम् । अनेन प्रातरौपासनहोमेन श्रीपरमेश्वरः प्रीयतामिति विशेषः ॥ इत्यौपासनहोमप्रयोगः ।

अथैरिणीपूजनं दानं च—मण्डपप्रतिष्ठादिनात्पाणिग्रहणदिनाद्वा चतुर्थे दिवसे रात्रौ तत्र भद्रादिसंभवे दिने शिष्टाचारप्राप्ते दस्मात्रेऽभावे तत्स-मार्थे वा कन्यादात्रैरिण्याख्यवंशपात्रदानं कार्यम् ।

सवस्त्रफलताम्बूलं दंपत्योर्वंशवर्धनम् ॥
ऐरिण्याख्यं वंशपात्रं पक्वान्नैः परिपूरितम् ।
करकै रुद्रसंख्यैस्तु सुवर्णेन समन्वितैः ।
एतावदैरिणीरूपं कर्तव्यं किल सूरिभिः ॥ इति ।'

रुद्रसंख्यैरेकादशसंख्यैः । एवं संपाद्य सभार्य आचम्य प्राणा-नायम्य विवाहसंपूर्णफलावाप्तये वरस्य तत्पितृमात्रादीनां तत्पक्षीयाणां

च यथाविभवं गन्धपुष्पवस्त्रादिभिः पूजनमहं करिष्य इति संकल्प्य वरादिभ्यो यथाविभव वस्त्रादिकं दत्त्वा कृतकन्यादानसंपूर्णफलावाप्तिवंशाभिवृद्धिद्वारोमामहेश्वरप्रीत्यर्थमैरिणीपूजनं वरमात्रे तत्समाय वैरिण्याख्यवंशपात्रदानं च करिष्य इति संकल्प्य

ऐरिणी त्वमुमादेवी महेशो गिरिजापतिः ।
अतस्त्वां पूजयिष्यामि ऐरिणीं सर्वकामदाम् ॥
सवस्त्रां च सदीपां च शूर्पैः षोडशभिर्युताम् ।
वरमात्रे प्रदास्यामि कन्यादानस्य सिद्धये ॥

इत्युक्त्वा तस्मिन्वंशपात्र उमामहेश्वरौ संपूज्य तद्वंशपात्रं वरमात्रे तत्समाय वा दद्यात् । तत्र मन्त्राः—

वंशो वंशकरः श्रेष्ठो वंशो वंशसमुद्भवः ।
अनेन वंशदानेन तुष्टो वृद्धिं करोतु मे ॥
वंशपात्रमिदं पुण्यं वंशजातिसमुद्भवम् ।
वंशानामुत्तमं दानमतः शान्तिं प्रयच्छ मे ॥
वंशपात्राणि सर्वाणि मया संपादितानि वै ।
उमाकान्ताय दत्तानि मम गोत्राभिवृद्धये ॥
वंशवृद्धिकरं दानं सौभाग्यादिसमन्वितम् ।
वस्त्रेणाऽऽच्छादितं पूर्णं फलहेमसमन्वितम् ॥
सर्वपापक्षयकरं नानाद्रव्यैस्तु पूरितम् ।
दानानामुत्तमं दानमतः शान्तिं प्रयच्छ मे ॥ इति ।

ततः सदीपं वंशपात्रं तत्पितृमात्रादीनां शिरसि स्वयं धारयेत् । स्वस्ति नो मिमीताम् । स्वस्ति न इन्द्र इति द्वाभ्यां प्रतिमन्त्रम् । ततो दातैव कन्यां गृहीत्वा वरपित्राद्युत्सङ्गे पृथक्पृथगुपवेश्य प्रार्थयेत् ।

सप्तवर्षा त्वियं कन्या पुत्रवत्पालिता मया ।
इदानीं तव पुत्राय दत्ता स्नेहेन पाल्यताम् ॥ इति ।

वर्षानुरोधेनोहः कर्तव्यः । वरमात्राद्युत्सङ्गे वधूमाता कन्यां तथैवोपवेश्य प्रार्थयेत् । ततो वरमात्रा वधूमात्रादितत्पक्षीयसुवासिनीभ्यः सकञ्चुकक्षुद्रवंशशूर्पवायनानि बध्वा दापनीयानि आचारात् । ततो दाता कर्मसाद्गुण्याय विष्णुं संस्मरेत् । एतच्च सर्वं सापत्नीकेनाभुक्त्वैव कार्यम् । इत्यैरिणीपूजनं दानं च ।

अथ चतुर्थीकर्म—पाणिग्रहणदिनमारभ्य या चतुर्थी रात्रिस्तस्यां त्रिभागावशिष्टायां वरः सपत्नीकः स्नात्वा प्राङ्मुख उपविश्याऽऽचम्य प्राणानायम्य देशकालौ संकीर्त्य ममास्या भार्यायाः सोमगन्धर्वाग्न्युपभुक्तत्वदोषपरिहारद्वारा श्रीपरमेश्वरप्रीत्यर्थं चतुर्थीहोमं करिष्य इति संकल्पं कुर्यात्।

ततो गणेशं सपूज्य शिखिनामानमग्निमभिध्यायन्नग्निं प्रज्वाल्य चत्वारीति ध्यात्वा समिद्द्वयमादाय श्रद्धे एहीत्यादिप्राणायामान्तं कृत्वा चतुर्थीहोमकर्मणि या यक्ष्यमाणा इत्याद्व्याहृत्यन्तमुक्त्वाऽग्निं प्रायश्चित्तिं वायुं प्रायश्चित्तिमादित्यं प्रायश्चित्तिमादित्यं प्रा० वायुं प्रा० अग्निं प्रा० अग्निं प्रा० वायुं प्रा० आदित्यं प्रायश्चित्तिं चाऽऽज्येन, मूर्ध्नि संस्रावहोमेऽग्निं वायुं सूर्यं प्रजापतिं च संस्रावाज्येन यक्ष्ये। अङ्गहोमे वरुणं द्वाभ्यामित्यादि समिदभ्याधानान्तं कुर्यात्। पात्रासादने संपातावनयनार्थं पात्रमुदकुम्भं दर्वीमाज्यस्थालीं प्रणीताप्रणयनं प्रोक्षणीपात्रमुपवेषं संमार्गदर्भानिध्मं बर्हिरवज्वलनदर्भानाज्यं चेत्यासाद्य ब्रह्मवरणादिव्याहृतिहोमान्तं कृत्वा नव प्रधानाहुतीर्जुहुयात्।

ॐ अग्ने प्रायश्चित्ते त्वं प्रायश्चित्तिरसि ब्राह्मणस्त्वा नाथकाम उपधावामि। याऽस्यै घोरा तनूस्तामितो नाशय स्वाहा।

अग्नये प्रायश्चित्तय इ०।

ॐ वायो प्रायश्चित्ते त्वं प्रायश्चित्तिरसि ब्राह्मणस्त्वा नाथकाम उपधावामि। याऽस्यै निन्दिता तनू०।

वायवे प्रायश्चित्तय इ०।

आदित्य प्रायश्चित्ते० याऽस्यै पतिघ्नी तनू०। आदित्याय प्रायश्चित्तय इ०।

एता एव पुनर्व्युत्क्रमेण, आदित्य प्रा०। वायो प्रा०। अग्ने प्रा०। पुनः पूर्वानुक्रमेण, अग्ने प्रा०। वायो प्रा०। आदित्य प्रा०। नवप्रधानाहुतीनां होमान्ते होमान्ते आज्यबिन्दून्पूर्वासादिते संपातावनयार्थे पात्रे प्रक्षिपेत्। नवाहुतिहोमानन्तरं तत्संपाताज्यं दर्व्या भार्याया मूर्ध्नि जुहोति—ॐ भूर्भगं त्वयि जुहोमि स्वाहा। अग्नय इ०। ॐ भुवो यशस्त्वयि

जुहोमि स्वाहा। वायव इ०। ॐ सुवः श्रियं त्वयि जुहोमि स्वाहा। सूर्यायेदं०। ॐ भूर्भुवः सुवस्त्वयि त्वयि जुहोमि स्वाहा। प्रजापतय इदं०।

इत्याहुतिचतुष्टयं मूर्ध्नि हुत्वेमं म इत्यादिसंस्याजपान्तं समानम्। नात्र स्विष्टकृद्धोमः।

तत आसादितं जलपूर्णं कुम्भमग्नेः समीपे निधायोदकुम्भसहितं तं प्रदक्षिणीकृत्यापरेणाग्निं शयनस्थानं कल्पयित्वा परिश्रित्य तत्र प्राक्शिरस्कामुदक्शिरस्कां वा भार्यां शाययेत्।

ततः—

ॐ अभि त्वा पञ्चशाखेन शिवेनाभिद्विधावता। सहस्रेण यशस्विना। हस्तेनाभिमृशामसि सुप्रजास्त्वाय।

तस्या योनिं दक्षिणेन हस्तेनाभिमृशति।

ॐ सं नाभ्रः सह हृदयानि सं नाभिः सं त्वचः।
सं त्वा कामस्य योक्त्रेण युञ्जान्यविमोचनाय॥

इति संगमं करोति।

ॐ मामनुव्रता भव सहचर्या मया भव।
या ते पतिघ्नी तनूर्जारघ्नीं त्वेतां करोमि शिवा
त्वं मह्यमेधि क्षुरपविर्जारेभ्यः॥

तां पर्यालिङ्गति।

मधु हे मन्त्रिवदं मधु जिह्वा मे मधुवादिनी।
मुखे मे सारघं मधु दत्सु संवननं कृतम्॥
चाक्रवाकं संवननं यन्नदीभ्य उदाहृतम्।
यद्युक्तो देवगन्धर्वस्तेन संवनिनौ स्वके॥

इति द्वाभ्यां तस्या मुखेन मुखं जुषते। ततः कर्मणः साङ्गतासिद्ध्यर्थमाचार्याय दक्षिणां दत्त्वाऽन्येभ्यो भूयसीं दत्त्वा कर्मसाद्गुण्याय विष्णुं संस्मरेत्। इति चतुर्थीकर्म।

अथ देवकपण्डपोद्वासनम्—नचाभुक्त्वा पश्चातिरिक्तसमे दिवसे कुर्यात्। विषमे तु पञ्चमसप्तमयोः कुर्यात्।

यजमानः सपत्नीकः प्राङ्मुख उपविश्य देशकालौ संकीर्त्य विवाहाङ्गत्वेन स्थापितानां देवतानामुद्वासनं मण्डपोद्वासनं च करिष्य इति संकल्प्य गन्धाद्युपचारैर्देवताः संपूज्य भगवत्यादीनां मण्डपदेवतानां तैलोद्वर्तनोष्णोदकस्नानानि कारयित्वा संपूज्य यान्तु देवगणाः स० इति वेष्टनसूत्रमुन्मुच्य पुण्याहवाचनं कुर्यात्। ततो द्विजैरभिषेकः कार्यः। अभिषेकान्ते पुरोधास्तच्छाखादिकं वंशपात्रे निधाय तदुपरि मक्षिस्नाभिषेकजलं सवृदुम्बरस्य वर्हुः शिरसि किंचित्किंचित्स्नावयेत्।

ॐ भेति चेति चेत्येतद्ध सर्वं स्वस्त्ययनं यस्मेति चेति चेति तद्धोऽस्य प्रियः स्यात्तमेतेनानुमन्त्रयेत भेति चेति चेति स्वस्त्येव गच्छाति स्वस्ति पुनरागच्छाति।

इति स्रावणकाले पठेत्। एवं पुनर्द्विः। एतच्चाऽऽचारात्। ततः कर्ता शिरसि बद्धाञ्जलिः—अस्मद्गोत्रे षट्सु षट्सु मासेषु शोभनानि सन्त्विति भवन्तो ब्रुवन्त्विति द्विजान्वदेत्। ते च त्वद्गोत्रे षट्सु षट्सु मासेषु शोभनानि सन्त्विति प्रतिब्रूयुः। ततो द्विजान्गन्धपुष्पफलतांम्बूलदक्षिणाभिः संपूज्य तदाशिषो गृह्णीयात्। एवं वरपित्राऽपि देवकोत्थापनं कार्यम्। अन्यदपि स्वस्वकुलधर्मानुसारि सर्वं कुर्यात्। इति मण्डपोद्वासनम्।

अथ द्विभार्यस्याग्निद्वयसंसर्गविधिः। कर्ता द्वितीयविवाहहोमकाले वेद्यां स्थण्डिलं कृत्वोल्लेखनादिसंस्कारान्विधाय तत्र पूर्वभार्याया गृह्याग्निं योजकनामानमग्निं प्रतिष्ठापयामीति प्रतिष्ठाप्य तत्र द्वितीयविवाहहोमः कार्यः स गृह्याग्निः। प्रतिगृहीतायां यथ्वा भार्यात्वसिद्धिद्वारेत्येतावानेवोल्लेखः। गृह्याग्नेरसानिध्यार्द्धौकिकाग्नौ क्रियायां तु भवत्येव तस्याप्युल्लेखः। यस्मिन्काले द्वावप्यग्नी संनिहितौ भवतस्तत आरभ्य द्वादशाहं त्रयोदशाहं वोभावप्यग्नी होमादिभिः पृथक्परिचरेत्। ततस्तदग्रिमे दिने मातर्होमद्वयानन्तरमग्निद्वयसंसर्गं कुर्यात्। इदं च परिचरणं द्वादशाहमध्ये त्रयोदशाहमध्ये वा स्थालीपाकस्यामासौ ज्ञेयम्। यदि त्वन्वारम्भणस्थालीपाकः कर्तव्यो भवति तदा तं कृत्वैव कार्यः।

ततः प्राङ्मुखः पत्नीभ्यां सहोपविश्याऽऽचम्य प्राणानायम्य देशकालौ संकीर्त्य मम गृह्याग्निसाध्यानां कर्मणां तन्त्रेणानुष्ठानसिद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थं गृह्याग्निद्वयसंसर्गमहं करिष्य इति संकल्प्य तदङ्गं

गणपतिपूजनं पुण्याहवाचनं मातृकापूजनं नान्दीश्राद्धं च विदध्यात्।
इन्द्रादयः प्रीयन्तामिति तत्र विशेषः।

ततः स्थण्डिलद्वयमुदक्संस्थं कृत्वा स्वं स्वमग्निं पत्नीभ्यामानीतं स्थण्डिलयोरुत्तरतः पृथङ्निधाय दक्षिणस्थण्डिलस्योल्लेखनादिसंस्कारं विधाय तत्र द्वितीयविवाहाग्निं संस्थाप्य प्रज्वाल्य परिस्तीर्योत्तरतो दर्भान्संस्तीर्य स्रुवं दर्वीमाज्यस्थालीं प्रोक्षणीपात्रमुपवेषं संमार्गदर्भानवज्वलनदर्भानाज्यं समिधं चाऽऽसाद्य पवित्रकरणाद्याज्यसंस्कारान्तं कृत्वाऽऽसादितां समिधमभ्याधाय स्रुवेण दर्व्यां चतुर्गृहीत्वा द्वितीयभार्यान्वारब्धः, ततः रादियां(वा)अन्यतमसमिधं शुद्धोदकेन प्रोक्ष्य तस्यां समिधि द्वितीयभार्यान्वारब्धः. ॐ अयं ते योनि० रयिम्। इति तं समारोपयेत्। ततस्तां समिधं द्वितीयभार्याहस्ते दत्त्वोत्तरस्थण्डिलस्योद्धननादि कृत्वा तत्र प्रथमविवाहाग्निं संस्थाप्य प्रज्वाल्य ॐ आजुह्वानः सु प्र० सीदत। उद्बुध्यस्वा० तन्तुमेतम्। इति समारूढाग्निना समिधमभ्याधाय परिस्तीर्य परिषिच्यालङ्कृत्य पूर्वसंस्कृतादाज्यादन्यदाज्यं संस्कृतं तस्मात्पूर्वाज्याद्वा स्रुवेण दर्व्यां चतुर्गृहीतं गृहीत्वा यो ब्रह्मा ब्रह्मण इत्यष्टर्चेनाऽऽयुष्यकल्पपठितेन घृतसूक्तेन पत्नीभ्यामन्वारब्धस्तदाज्यमभिमृशति।

ॐ यो ब्रह्मा ब्रह्मण उज्जभार प्राणैश्वरः कृत्तिवासाः पिनाकी।
ईशानो देवः स न आयुर्दधातु तस्मै जुहोमि हविषा घृतेन।
विभ्राजमानः सरिरस्य मध्याद्रोचमानो घर्मरुचिर्य आगात्।
स मृत्युपाशादपनुद्य घोरादिहाऽऽयुषे नो घृतमत्तु देवः।
ब्रह्मज्योतिर्ब्रह्मपत्नीषु गर्भं यमादधात्पुरुरूपं जयन्तम्।
सुवर्णरम्भं ग्रहमर्कमर्च्यं तमायुषे वर्धयामो घृतेन।
श्रियं लक्ष्मीमम्बिकामौपलाङ्गां षष्ठीं च यामिन्द्रसेनेत्युदाहुः।
तां विद्यां ब्रह्मयोनिं सरूपामिहाऽऽयुषे तर्पयामो घृतेन॥
दाक्षायण्यः सर्वयोन्यः सयोन्यः सहस्रशो विश्वरूपा विरूपाः।
ससूनवः सपतयः सयूथ्या आयुषे नो घृतमिदं जुषन्ताम्॥
दिव्या गणा बहुरूपाः पुराणा आयुश्छिदो नः प्रमथन्तु वीरान्।
तेभ्यो जुहोमि बहुधा घृतेन मा नः प्रजां रीरिषो मोत वीरान्॥
एषः पुरस्तात्र इद बभूव यतो बभूव भुवनस्य गोपाः।
यमप्येति भुवनं साम्पराये स नो हविर्घृतमिहाऽऽयुषेऽत्तु देवः॥
वसून्रुद्रानादित्यान्मरुतोऽथ साध्यानृभून्यक्षान्गन्धर्वांश्च पितॄंश्च विश्वान्।

भृगूनसर्पांश्चाङ्गिरसोऽथ सर्वान्घृतꣳ हुत्वा स्वायुष्याद्याम शश्वत् ॥

इत्यभिमृश्यैतेनैव सूक्तेन प्रत्यृचं स्वाहान्ते सदाज्यं जुहोति। ब्रह्मण इदं०। देवायेदं०। ज्योतिष इदं०। विधाय इदं०। दाक्षायणीभ्य इदं०। दिव्येभ्यो गणेभ्य इदं०। देवायेदं०। वसुभ्यो रुद्रेभ्य आदित्येभ्यो मरुद्भ्यः साध्येभ्य ऋभुभ्यो यक्षेभ्यो गन्धर्वेभ्यः पितृभ्यो भृगुभ्यः सर्वेभ्योऽङ्गिरोभ्य इदं०। इति क्रमेण त्यागः। पूर्वत्र समन्त्रकपरिषेकः। ओत्तरः परिषेकः कार्यः। ततश्चत्वारि गृह्णेति ध्यात्वा समिद्द्वयमादाय धद्ध एहीत्यादि प्राणायामान्तं कृत्वा गृह्याग्निद्वयसंसर्गहोमकर्मणि यः वक्ष्यमाणा इत्यादिव्याहृत्यन्तमुक्त्वा प्रधानहोमेऽग्नि पुरोनुवाक्यायाज्याभ्यामेकया चर्वाहुत्या यक्ष्ये। अग्निं जातवेदसौ पृथिव्यादीनग्निं वैश्वानरं चैकैकयाऽऽज्याहुत्या यक्ष्ये। निर्ऋतिं पञ्चभिराज्याहुतिभिर्यक्ष्ये। उदकस्पर्शः। इन्द्रमेकयाऽऽज्याहुत्या०। भूमिकर्षकरूपाग्निं षड्भिराज्याहुतिभि०। कामदुघां सीतां चैकैकयाऽऽज्याहुत्या यक्ष्ये। इत्युक्त्वाऽङ्गहोमे वरुणं द्वाभ्यामित्याद्यास्मन्वाग्निग्रहणान्तं कृत्वोत्तरेणाग्निं दर्भान्संस्तीर्य तत्र स्रुवं दर्वीमाज्यस्थालीं प्रणीताप्रणयनं प्रोक्षणीपात्रं चरुस्थालीं मेक्षणं शूर्पं कृष्णाजिनमुलूखलं मुसलमुपवेषं संमार्गदर्भानिध्मं बर्हिरवज्वलनदर्भानाज्यं चाऽऽसादयेत्।

ततो ब्रह्मवरणादि। चरुकल्पेन चरुं श्रपयित्वा स्रुवदर्व्यौ संमृज्याऽऽज्यसंस्कारं कुर्यात्। तत्र पर्यग्निकरणकाले चरुणा सहाऽऽज्यं पर्यग्नि कुर्यात्। ततः परिधीन्परिधाय शृतं चरुमभिघार्योदगुद्वास्य बर्हिषि निधाय परिषेकादिव्याहृतिहोमान्तं कृत्वा प्रधानहोमं कुर्यात्।

दर्व्यामुपस्तीर्य मेक्षणेन मध्यात्पूर्वार्धाच्च चरोरङ्गुष्ठपर्वमात्रमवदाय स्रुवेणावत्तमभिघार्य शेषं प्रत्यज्य पत्नीभ्यामन्वारब्धः—ॐ समितꣳ संकल्पे० व्याकरम्। ॐ अग्ने पु० धेहि स्वाहेति पुरोनुवाक्यायाज्याभ्यां जुहोति। अग्नय इदं०। ॐ पुरीष्यस्त्व० सदः स्वाहा। अग्नय इदं०

ॐ भवतं नः समनसौ० मद्य नः स्वाहा। जातवेदोभ्यामिदं०।

ॐ मातेव पुत्रं० मुञ्चन्तु स्वाहा। पृथिव्यादिभ्य इदं०।

ॐ यदस्य पारे० वैश्वानरः स्वाहा। अग्नये वैश्वानरायेदं०।

ॐ नमः सुते नि० रोहयेमꣳ स्वाहा। निर्ऋतय इदं०।

ॐ यत्ते देवी० प्रमुक्तः स्वाहा। निर्ऋतय इदं०।

ॐ यस्यास्ते अस्याः क्रूर० विश्वतः स्वाहा । निर्ऋतय इदं० ।
ॐ अनुन्वन्तम० तुभ्यमस्तु स्वाहा । निर्ऋतय इदं० ।
ॐ देवीम० विचष्टे स्वाहा । निर्ऋतय इदं० । पञ्चमूदकस्पर्शः ।
ॐ निवेशनः संगमनो० पर्यीनाः स्वाहा । इन्द्रायेदं० ।
ॐ संवरत्रा दधातन० मक्षितः स्वाहा । भूमिकर्षकरूपायाग्नय इदं० ।
ॐ निष्कृताहावमवटं० अक्षितः स्वाहा । भूमिकर्षकरूपायाग्नय इदं० ।
ॐ सीरा युञ्जन्ति० सुम्नया स्वाहा । भूमिकर्षकरूपायाग्नय इदं० ।
ॐ युनक्त सीरा० मायाःस्वाहा । भूमिकर्षकरूपायाग्नय इदं० ।
ॐ लाङ्गलं पवीरवं० वाहनं स्वाहा । भूमिकर्ष० इदं० ।
ॐ शुनं नः फाला० मस्मासु धत्तं स्वाहा । भूमिकर्ष० इदं० ।
ॐ कामं कामदुघे धुक्ष्व० प्रजाभ्यः स्वाहा । कामदुह इदं० ।
ॐ घृतेन सीता मधुना समक्ता० भ्यावद्दत्स्व स्वाहा । सीताया इदं० ।
ततो दर्भ्यामुपस्तीर्य मेक्षणेनैव चरोरुत्तरार्धादङ्गुष्ठपर्वतोऽधिकम-वदाय द्विरभिघार्य न हविः प्रत्यभिघारयति । ॐ यदस्य कर्मणोऽत्यरी-रिचं० समर्धयित्रे स्वाहा । इत्यैशान्यां जुहोति । अग्नये स्विष्टकृत इ० ।

ततो मेक्षणमनुप्रहृत्य संस्रावेणाभिजुहोति । ततः शुल्बप्रहरणादि समानम् । अत्र दक्षिणा धेनुः । दक्षिणादानोत्तरमग्नेर्ग्नि दर्भस्तम्बं निधाय ब्रह्म जज्ञानं प्रथमं० विवः । पिता विराजा० वर्धयन्तः । इति द्वाभ्यां तत्र हुतशेषं संस्थापयेत् । ततोऽग्निं संपूज्य भस्म धृत्वा भूयसीं दत्त्वा यथाविभवं ब्राह्मणान्संभोज्य कर्मसाद्गुण्याय विष्णुं स्मरेत् । इत्य-ग्निद्वयसंसर्गविधिः ।

इति विवाहः ।

---

अथ पक्षहोमशेषहोमयोर्विधिः ।

आपन्निमित्तं प्रतिपत्सायंकालमारभ्य चतुर्दशीसायंकालपर्यन्तममुक-संख्याकान्सायमौपासनहोमानपकृष्य तन्त्रेण व्रीहिभिर्होष्यामीति सायम् । आपन्निमित्तं द्वितीयाप्रातःकालमारभ्य पौर्णमासीप्रातःकालपर्यन्तममु-कसंख्याकान्प्रातरौपासनहोमानपकृष्य तन्त्रेण व्रीहिभिर्होष्यामीति प्रातः । शेषहोमविधौ त्वमुकदिनसायंकालमारभ्य चतुर्दशीसायंकाल-पर्यन्तममुकसंख्याकान्सायमौपासनहोमांस्तन्त्रेण व्रीहिभिर्होष्यामीति सा-

यम् । अमुकदिनप्रातःकालमारभ्यामुकपर्वप्रातःकालपर्यन्तममुकसं० मातरौपासन० मीति प्रातः ।

इति पक्षहोमशेषहोमयोर्विधिः ॥

---

अथाऽऽशौचे होमविधिः ।

जननशावाशौचयोर्ऋत्विगादिना सायंप्रातर्होमौ कारयेत् । स्वयं द्रव्यत्यागं कुर्यात् । ऋत्विगभावे त्वाशौचपातात्पूर्वं होमान्त उक्तप्रकारेणाग्निसमारोपणं कुर्यात् । सूतकनिवृत्तावुद्धननादि भूसंस्कारं विधाय तत्र स्वयोनित उत्पन्नमग्निं प्रतिष्ठाप्य तत्र समारूढमग्निमुक्तप्रकारेणावरोप्य प्राणानायम्य देशकालौ संकीर्त्य मम नित्यहोमातिक्रमजन्यदोषपरिहारद्वारा श्रीपरमेश्वरप्रीत्यर्थं प्रायश्चित्तपूर्वकमतिक्रान्तहोमान्करिष्य इति संकल्प्याऽऽज्यं संस्कृत्य दर्व्याऽऽज्यमादाय जुहोति ।

ॐ मनो ज्योतिर्जुषतामाज्यं विच्छिन्नं यज्ञꣳ समिमं दधातु ।
या इष्टा उषसो निम्रुचश्च ताः संदधामि हविषा घृतेन
स्वाहा ॥ मनसे ज्योतिष इदं न मम ।

ततो होमार्थं व्रीह्यादिद्रव्यमादाय परिसमूहनादि कृत्वाऽतीतकालारक्रमेण द्वे द्वे आहुती हुत्वा पश्चात्तत्कालहोमं च कृत्वा परिषेकविसर्गान्तं कर्मशेषं समापयेत् ।

इत्याशौचे होमविधिः ।

---

अथ चतुर्होतृसारस्वतहोमप्रयोगः ।

कर्ता शुक्लचतुर्दश्यां प्रातरौपासनहोमानन्तरमौपासनाग्नेः पश्चात्सपत्नीक उपविश्याऽऽचम्य प्राणानायम्य देशकालौ संकीर्त्य दर्शपूर्णमासस्थालीपाकाद्यारम्भप्राणश्चतुर्होतारं सग्रहं होष्यामीति संकल्प्योत्तरेणाग्निं दर्भान्संस्तीर्य तेषु स्रुवं दर्वीं वा स्रुवमाज्यस्थालीं प्रोक्षणीपात्रमुपवेषं संमार्गदर्भानवज्वलनदर्भानाज्यं समिधं चाऽऽसाद्य पवित्रकरणादि पवित्रे अग्नावाधायेत्यन्तं कृत्वाऽग्निमलंकृत्य स्रुचि दर्व्यां वा सकृद्गृहीत्वाऽऽसादितां समिधमभ्याधाय पृथिवी होता० बृहस्पतिरुपवक्तेति मनसोक्त्वा

वाचस्पते वाचो० मिन्द्रियाय स्वाहेत्यग्नेर्दक्षिणतस्तिष्ठञ्जुहोति । वाचस्पतये ब्रह्मण इदं० ।

ततः सारस्वतहोमौ । दर्शपूर्णमासस्थालीपाकावारप्समाणः सारस्वतौ होमौ होष्यामीति संकल्प्योत्तरेणाग्निं दर्भान्संस्तीर्य तेषु स्रुवं दर्वीं वा स्रुचमा० प्रोक्ष० उप० अवज्वल० समिद्द्वयमाज्यं चाऽऽसाद्य पवित्रकरणादि पवित्रे अग्नावाधायेत्यन्तं कृत्वाऽग्निमलंकृत्य स्रुवेण स्रुचि दर्व्यां वाऽष्टवारं द्विर्वा गृहीत्वाऽऽसादितं समिद्द्वयमग्नावभ्याधाय पूर्णा पश्चा० मादयन्ताः२ स्वाहेत्यग्नाज्येनाग्नेर्दक्षिणतस्तिष्ठञ्जुहोति । पूर्णमासायेदं० । यत्ते देवा अ० कृवीरन्२ स्वाहेत्यवशिष्टेनाऽऽज्येन तथैव जुहोति । अमावास्याया इदं० ।

इति चतुर्होतृसारस्वतहोमप्रयोगः ।

---

अथान्वारम्भणस्थालीपाकप्रयोगः ।

दर्शपूर्णमासस्थालीपाकावारम्भमाणोऽन्वारम्भणस्थालीपाकं करिष्य इति संकल्प्याग्निं परिस्तीर्य ध्यात्वा समिधमादाय अद्य पहीत्यादिमाणायामान्तं कृत्वाऽन्वारम्भणस्थालीपाककर्मणि या वक्ष्यमाणा देवतास्ताः सर्वाः परिग्र० भि । अग्नाविष्णू एकया चर्वाहुत्या यक्ष्ये । सरस्वतीमेकया चर्वा० । सरस्वन्तमेकया च० । अग्निं भगिनमेकया चर्वाहुत्या यक्ष्ये । वैशेषिकजयापहोमे चित्तं चित्तिमित्यादि प्रजापतिं चैकैकयाऽऽज्याहुत्या यक्ष्य इत्यन्तमुक्त्वा स्विष्टकृद्धोमेऽग्निं स्विष्टकृतं हुतशेषेण यक्ष्य इत्यादि समिदभ्याधानान्तं कृत्वाऽग्निं परिस्तीर्योत्तरेणाग्निं दर्भान्संस्तीर्य तेषु स्रुवं दर्वीमाज्यस्थालीं प्रोक्षणीपात्रमुपवेषं हविरासादनार्थान्दर्भाञ्छूर्पं कृष्णाजिनमुलूखलं मुसलं चरुस्थालीचतुष्टयं मेक्षणचतुष्टयं संमार्ग० अवज्वल० आज्यं समिधं चाऽऽसादयेत् । अथवैकैव चरुस्थाल्येकमेव मेक्षणम् ।

ततोऽग्नेः पश्चात्स्वस्य पुरतः शूर्पं निधाय तस्मिन्पवित्रे संस्थाप्य दक्षिणहस्तेन प्रतिदैवतं तूष्णीं चतुरश्चतुरो मुष्टींस्तां तां देवतामभिध्यायन्निरुप्यान्वावापं कृत्वाऽग्रेरुत्तरतो हविः संस्थाप्य प्रोक्षणीः संस्कृत्य पवित्रेण पाणिना हविरद्भिः प्रोक्ष्य पात्राण्युत्तानानि कृत्वा त्रिः सर्वाभिः प्रोक्षति । ततः पत्न्यग्नेरुत्तरतः कृष्णाजिनावधूननादिफलीकरणान्तमाभूतस्थालीपाकवत्कुर्यात् ।

ततो होमकर्ता निरुप्तहविषः समं भागचतुष्टयं कृत्वाऽयमग्नाविष्णुभ्यामयं सरस्वत्या अयं सरस्वतेऽयमग्नये भगिन इति क्रमेणाभिमृश्य चतसृषु स्थालीषूदकमानीय तत्र क्रमेण भागचतुष्टयमोप्याग्नौ स्थालीरधिश्रयति । एकस्थालीपक्षे तत्रैवोदकं हविश्चोप्याधिश्रयणम् । न वा निर्वापादि किंतु पत्न्याऽवघातमात्रं कारणीयम् । पर्यग्निकरणं त्वस्त्येव । ततः स्रुवं दर्वीं मेक्षणं च संमृज्याऽऽज्यसंस्कारं कुर्यात् । तत्र हविषा सहाऽऽज्यस्य पर्यग्निकरणमिति विशेषः । तत आसादितान्दर्भानग्नेः पश्चादास्तीर्य तत्राऽऽज्यं निधाय शृतं चरुमभिघार्याऽऽसादितोद्धरणपात्रमुपस्तीर्य तं समग्रमुद्धृत्यायमग्नाविष्णुभ्यामयं सरस्वत्या अयं सरस्वतेऽयमग्नये भगिन इति क्रमेणोदक्संस्थं देवता निर्दिशेत् । ततोऽदितेऽनुमन्यस्वेत्यादिभिः परिषिच्य तूष्णीं समिधमाधाय प्रधानहोमं कुर्यात् । अग्नाविष्णुभ्यां स्वाहा । अग्नाविष्णुभ्यामिदं० । सरस्वत्यै स्वाहा । सरस्वत्या इदं० । सरस्वते स्वाहा । सरस्वत इदं० । अग्नये भगिने स्वाहा । अग्नये भगिन इदं० ।

ततो दर्व्या वैशेषिकजयोपहोमं कुर्यात् । स्रुवेण दर्व्यां द्वादशगृहीतं गृहीत्वा द्वादश जयाञ्जुहोति । पुनः सकृद्गृहीत्वा ॐ प्रजापतिर्जं० भूत्स्वाहेति जुहोति । प्रजापतय इदं० । ततश्चरोरुत्तरार्धात्सकृदुपहत्याग्नये स्विष्टकृते स्वाहा । अग्नये स्विष्टकृत इदं० । ततः परिस्तरणानि विसृज्य समस्तव्याहृतिभिः प्रायश्चित्तहोमं हुत्वोत्तरपरिषेकं कृत्वा संस्थाजपेनोपस्थायाग्निं संपूज्य भस्म धृत्वाऽऽचार्याय मिथुनौ गावौ दक्षिणां दत्त्वाऽन्येभ्यो भूयसीं दत्त्वा ब्राह्मणान्भोजयित्वा कर्मसाद्गुण्याय विष्णुं संस्मरेत् । एते चतुर्दृढहोमसारस्वतहोमान्वारम्भणस्थालीपाकाः कृताकृताः । सूत्रेऽनुक्तत्वात् ।

इत्यन्वारम्भणस्थालीपाकप्रयोगः ।

---

अथ दर्शपूर्णमासस्थालीपाकप्रयोगः ।

गृह्याग्नेः पश्चादुपविश्याऽऽचम्य प्राणानायम्य देशकालौ संकीर्त्य दर्शपूर्णमासस्थालीपाकाभ्यां यक्ष्ये । तत्रेदानीं पूर्णमासस्थालीपाकेन यक्ष्य इति पौर्णमास्याम् । दर्शस्थालीपाकेन यक्ष्य इत्यमावास्यायाम् ।

एवं सङ्कल्प्याग्निं प्रज्वाल्य ध्यात्वा समित्त्रयमादाय श्रद्ध एहीत्यादि प्राणायामान्तं कृत्वा पूर्णमासस्थालीपाककर्मणि ये यक्ष्यमाणे देवते ते परिग्रहीष्यामि । अग्निमेकया चर्वाहुत्या यक्ष्ये । अग्निं स्विष्टकृतमेकया हुतशेषाहुत्या यक्ष्ये । एते देवते सद्यो यक्ष्य इत्युक्त्वा व्याहृतिभिरन्वाधानसमिधोऽभ्यादध्यात् । दर्शे दर्शस्थालीपाककर्मणीति विशेषः । ततोऽग्निं परिस्तीर्याऽऽसादितान्दर्भानग्नेः पश्चादास्तीर्य तत्राऽऽज्यं निधाय शृतं चरुं दर्व्याऽऽज्येनाभिघार्योदगुद्वास्याग्नेः पश्चादास्तृते बर्हिष्याज्यस्योत्तरत आसाद्याग्निं परिषिञ्चेत् ।

ततस्तूष्णीमासादिता समिधमाधाय मेक्षणेनोपहत्य प्रदीप्तेऽग्नौ जुहोति । अग्नये स्वाहा । अग्नय इदं० । पुनर्भूय उपहत्य, अग्नये स्विष्टकृते स्वाहा । अग्नये स्विष्टकृत इदं० ।

ततः परिस्तरणानि विसृज्य व्यस्तसमस्तव्याहृतिभिश्चतस्रः प्रायश्चित्ताहुतीर्हुत्वोत्तरपरिषेकं कृत्वा संस्थाजपेनाग्निमुपस्थाय तं संपूज्य ललाटे विभूतिं धृत्वा भूयसीं दक्षिणां ब्राह्मणेभ्यो दत्त्वा ब्राह्मणान्संभोज्य विष्णुं स्मरेत् ।

इति दर्शपूर्णमासस्थालीपाकप्रयोगः ।

---

अथाऽऽग्रयणस्थालीपाकप्रयोगः ।

स च शरदि वसन्ते कार्यः । उक्तकाले प्रातरौपासनं हुत्वाऽग्नेः पश्चात्सपत्नीक उपविश्याऽऽचम्य प्राणानायम्य देशकालौ संकीर्त्य मम सपत्नीकस्य नवानां व्रीह्यादिधान्यानां प्राशनाधिकारसिद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थं पञ्चाज्यानीहोमपूर्वकं व्रीह्याग्रयणस्थालीपाकं करिष्य इति सङ्कल्प्याग्निं प्रज्वाल्य ध्यात्वा समित्त्रयमादाय श्रद्ध एहीत्यादि प्राणायामान्तं कृत्वाऽऽग्रयणस्थालीपाककर्मणि या यक्ष्यमाणा देवतास्ताः सर्वाः परिग्रहीष्यामि । अज्यानीहोम इन्द्रमाज्याहुत्या यक्ष्ये । द्यावापृथिव्यावाज्याहुत्या० । ग्रीष्मं हेमन्तं वसन्तं शरदं वर्षाश्चाऽऽज्याहु० । इदुवत्सरं परिवत्सरं संवत्सरं चाऽऽज्याहु० । देवान्पितॄंश्चाऽऽज्याहुत्या यक्ष्ये । इन्द्राग्नी विश्वान्देवान्द्यावापृथिव्यौ चैकैकया नवव्रीहिचर्वाहुत्या यक्ष्ये । स्विष्टकृद्धोमे—अग्निं स्विष्टकृतं हुतशेषचर्वाहुत्या यक्ष्ये ।

एता देवताः सद्यो यक्ष्य इत्युक्त्वा समिधोऽग्न्याधायोत्तरेणाग्निं दर्भान्संस्तीर्य तेषु स्रुचं स्रुवमाज्यस्थालीं प्रोक्षणीपात्रमुपवेषं संमार्गद० अप० आज्यं पञ्च समिधश्चाऽऽसाद्य तूष्णीं परिषिच्य स्रुचि स्रुवेण पञ्च गृहीत्वा पञ्च समिधोऽभ्याधाय, ॐ शतायुधाय० विश्वा स्वाहा। इन्द्रायेदं० । ये चत्वारः० सर्वे स्वाहा । द्यावापृथिवीभ्यामिदं० । ग्रीष्मो हेमन्त० स्याम स्वाहा । ग्रीष्माय हेमन्ताय वसन्ताय शरदे वर्षाभ्यश्चेदं०। इदुवत्सराय० अहताः स्याम स्वाहा । इदुवत्सराय परिवत्सराय संवत्सराय चेदं० । भद्रान्नः श्रेयः० स्योनः स्वाहा । देवेभ्यः पितृभ्य चेदं० । इति पञ्चाज्याहुतीरग्नेर्दक्षिणतश्चिरितुग्हुत्वा स्थालीपाकपात्रतः प्रोक्षणीपात्रमादाय प्रोक्षणीः संस्कृत्य हविष्प्रोक्षणादि चतुःशरावपरिमितचरुश्रपणान्तं कुर्यात् ।

ततश्चर्वभिघारणादि बर्हिष्यासादनान्तं कृत्वाऽदित इत्यादिभिरग्निं परिषिच्याऽऽसादिकामेकां समिधमभ्यादध्यात् । ततो मेक्षणेन चरोरुपहृत्य, इन्द्राग्निभ्या५ स्वाहा। इन्द्राग्निभ्यामिदं० । ततः पुनस्तथैवोपहृत्य विश्वेभ्यो देवेभ्यः स्वाहा । विश्वेभ्यो देवेभ्य इदं० । पुनस्तथैवोपहृत्य द्यावापृथिवीभ्या५ स्वाहा । द्यावापृथिवीभ्यामिदं० । ततो मेक्षणेनोत्तरार्धाच्चरोरुपहृत्याग्नये स्विष्टकृते स्वाहा । अग्नये स्विष्टकृत इदं० ।

ततः परिस्तरणानि विसृज्य दर्व्या व्यस्तसमस्तव्याहृतिभिश्चतस्रः प्रायश्चित्ताहुतीर्हुत्वाऽदितेऽन्वमᳪस्था इत्यादिभिरुत्तरपरिषेकं कृत्वा संस्थाजपेनाग्निमुपस्थायाग्निं संपूज्य भस्म धृत्वाऽऽचार्याय दक्षिणां दत्त्वा कर्मसाद्गुण्याय विष्णुं संस्मरेत् ।

ततो हुतशेषमिश्रितेन सव्यञ्जनेन नवान्नेन ब्राह्मणान्संभोज्य स्वयं प्राणाहुतिभ्यः प्राग्भद्रान्नः श्रेयः० स्योन इति मन्त्रमुक्त्वा प्राणाहुत्यादिविधिना नवान्नमिष्टबन्ध्वादियुतो भुञ्जीत । इति व्रीह्याग्रयणस्थालीपाकप्रयोगः ।

अथ यवाग्रयणम् । तच्च वसन्ते । तत्र यवाग्रयणस्थालीपाकं करिष्य इति संकल्पवाक्यम् । नूतनयवमयश्चरुः । एतमु त्यं मधुना संयुतं यवमिति भद्रान्नः श्रेय इत्यस्य स्थाने मन्त्र इति विशेषः । अन्यत्समानम् । एतच्च यवाग्रयणं कृताकृतम् ।

अथ श्यामाकाग्रयणम् । श्यामाकाग्रयणस्थालीपाकं करिष्य इति

संकल्पः। नूतनश्यामाकमधकरुः। सोमो देवता। स्विष्टकृद्द्वितीयम्। अग्नि. प्रथम. प्रा० चर्षणिरिति नूतनश्यामाकान्नाशनमन्त्रः। अन्य-त्समानम्।

इत्याग्रयणस्थालीपाकप्रयोगः।

---

अथ पुनराधानप्रयोगः।

यस्मिन्नग्नौ विवाहहोमोऽसावौपासनाग्निः। तस्मिन्सायंप्रातर्होमेनाऽऽहिताग्निर्भवति। यद्दर्शपूर्णमासपार्वणस्थालीपाकः क्रियते तेन दर्शपूर्णमासयाजिनश्च चेति। अत्र सर्वाणि गृह्याणि प्रजासंस्काररूपाणि भवन्ति। तत्र सत्यग्नौ प्रतिबन्धादिना द्वादशाह होमविच्छेदे प्रायश्चित्तम्। आज्यं संस्कृत्य मनो ज्योतिर्जुषतामित्येकयाऽऽज्याहुतिं हुत्वा व्यस्तसमस्तक्रमेण होमः कार्यः। द्वादशाहादूर्ध्वं पुनराधेयः।

इति पुनराधानप्रयोगः।

---

अथाग्निनाशप्रायश्चित्तम्।

उद्धननादिभूसंस्कारं विधाय तत्र लौकिकाग्निं प्रतिष्ठाप्याऽऽज्यं संस्कृत्य ततोऽग्निनाशप्रायश्चित्तं करिष्य इति संकल्प्य तूष्णीमेका समिधं हुत्वा मनो ज्योतिरित्येकयाऽऽज्याहुतिं हुत्वा व्याहृतिचतुष्टयं वा हुत्वा दम्पत्योर्मध्येऽन्यतरस्योपवासः। प्रातरनुगत आसायमुपवासः। सायमनुगत आप्रातरुपवासः। विवाहमध्ये तदूर्ध्वमपीदमेव कार्यम्।

इत्यग्निनाशप्रायश्चित्तम्।

---

अथ पुनराधाननिमित्तानि।

आलस्यादिना सर्वथा नष्टेऽन्याग्निनाऽग्निसंसर्गेण भार्याया ग्रामसीमातिक्रमेण दर्शपूर्णमासतृतीयस्थालीपाकाकरणेन समारूढसमिन्नाशेन पतितरजस्वलादिसंसर्गेण चाग्न्युपघाते सति पुनराधानं कार्यम्। तत्र कालातिक्रमे सति प्रायश्चित्तम्। यजमानः कृतनित्यक्रियः पत्न्या सह प्राणानायम्य देशकालौ संकीर्त्य मम नास्तिक्यादिनैतावत्कालपर्यन्तं गृह्याग्निविच्छेदजनितप्रत्यवायपरिहारद्वारा श्रीपरमेश्वरप्रीत्यर्थममुकप्रत्याम्नायेनैतावत्प्रायश्चित्तमहमाचरिष्य इति संकल्प्याग्निविच्छेदकालग-

पत्न्या प्रायश्चित्तं दंपती सह कुरुतः । तत्र नास्तिक्याद्द्वादशाहपर्यन्तं पराकः । ततोऽब्दपर्यन्तं मासं पयोव्रतम् । अब्दे पूर्णे द्वैमासिकं त्रैमासिकं वा व्रतम् । ततः प्रतिवर्षमेतदर्धं वाऽऽवृत्तिरिति । प्रमादादाग्निविच्छेदे प्राणायामशतम् । द्वाविंशतिरात्रपर्यन्तमेकदिनमुपवासः । मासद्वयपर्यन्तं त्रिरात्रमुपवासः । अब्दे प्राजापत्य इति । आलस्याद्द्वादशाहं विच्छेदे तु त्र्यहमुपवासः । मासातिक्रमे द्वादशाहमुपवासः । षण्मासातिक्रमे मासं पयोव्रतम् । संवत्सरातिक्रमे मासमुपवासः पयोभक्षणं कूष्माण्डहोमो वेत्यादि देशकालकर्तृतारतम्येन योजनीयम् ।

ततो लुप्तानां सायंप्रातर्होमानां दर्शपूर्णमासस्थालीपाकानां च पर्याप्तमिदं व्रीह्याद्यन्यतमं होमद्रव्यमाज्यं च तन्निष्क्रयद्रव्यं वाऽमुकेभ्यो ब्राह्मणेभ्यः संप्रदद इति संवत्सराग्निविच्छेदकालगणनया दद्यात् ।

## अथ पुनःसंधानप्रयोगः ।

ततः सपत्नीकः पुनराचमनप्राणायामदेशकालसंकीर्तनादीनि कृत्वाऽमुकनिमित्तेन विच्छिन्नस्य गृह्याग्नेः पुनःसंधानं करिष्य इति संकल्प्य गणेशं संपूज्य कृतभस्मोत्सर्गोपलेपनमग्न्यायतनं परिश्रित्य फलाद्यन्यतमेन ताम्रशकलयुक्तेन पूर्ववदुल्लिख्याभ्युक्ष्य गोत्सेचनोदकविधानानि कृत्वाऽन्यादनोद्धृत्याभ्युक्ष्य सिकताभिरश्वत्थोदुम्बरशाखाभिः प्लक्षशाखाभिर्वा प्रच्छाद्याऽऽखूत्करादिभौमान्पालाशोदुम्बरादिवानस्पत्यांश्च संभारान्स्तृणीयमग्न्यायतने प्रक्षिप्य श्रोत्रियागारादुत्पन्नमग्निमाहृत्य भूर्भुवः सुवरोमित्यग्न्यायतने प्रतिष्ठाप्य प्रज्वाल्य ध्यात्वा समिधमादाय अग्न एहीत्यादि प्राणायामान्तं कृत्वा विच्छिन्नगृह्याग्नेः पुनःसंधानहोमकर्मणि या यक्ष्यमाणा इत्यादिव्याहृत्यन्तमुक्त्वा वैशेषिकप्रधानहोमे मिन्द्रवन्तमग्निमाज्येनाग्निमिन्द्रं बृहस्पतिमश्विनौ चाऽऽज्येन तन्तुमन्तमग्निमग्निराज्येनाभ्यावर्तिनमग्निं चतुराज्येनाग्निं वायुं सूर्यं प्रजापतिं प्रत्येकमाज्येनायास्यग्निमाज्येन मनस्वन्तमग्निमाज्येन प्रजापतिमाज्येन सप्तवन्तमग्निमाज्येन वाचस्पतिं ब्रह्माणमाज्येन यक्ष्ये । अङ्गहोमे वरुणं द्वाभ्यामित्यादि व्याहृतिहोमान्तं कृत्वा वैशेषिकप्रधानहोमं कुर्यात् ।

ॐ यन्म आत्मनो मिन्दाऽभूदग्निस्तत्पुनराहार्जातवेदा विचर्षणिः स्वाहा ।

मिन्दवतेऽग्नय इदं न मम ।

ॐ पुनराग्निश्चक्षुरदात्पुनरिन्द्रो बृहस्पतिः ।
पुनर्मे अश्विना युवं चक्षुराधत्तमक्ष्योः स्वाहा ॥
अग्नय इन्द्राय बृहस्पतयेऽश्विभ्यां चेदं न मम ।
ॐ तन्तुं तन्वन्रजसो भानुमन्विहि ज्योतिष्मतः पथो रक्ष धिया कृतान् ।
अनुल्वणं वयत जोगुवामपो मनुर्भव जनया दैव्यं जनꣳ स्वाहा ॥
तन्तुमतेऽग्नय इदं न मम ।
ॐ उद्बुध्यस्वाग्ने प्रतिजागृहीनमिष्टापूर्ते सꣳसृजेथामयं च ।
पुनः कृण्वꣳस्त्वा पितरं युवानमन्वाताꣳसीत्त्वयि तन्तुमेतꣳ स्वाहा ॥
तन्तुमतेऽग्नय इदं न मम ।
ॐ त्रयस्त्रिꣳशत्तन्तवो ये वितत्निरे य इमं यज्ञꣳ स्वधया ददन्ते
तेषां छिन्नं प्रत्येतद्दधामि स्वाहा घर्मो देवाꣳ अप्येतु स्वाहा ।
तन्तुमतेऽग्नय इदं० ।
ॐ अग्नेऽभ्यावर्तिन्नभि न आवर्तस्वाऽऽयुषा वर्चसा सन्या मेधया
प्रजया धनेन स्वाहा ।
अग्नयेऽभ्यावर्तिन इदं० ।
ॐ अग्ने अङ्गिरः शतं ते सन्त्वावृतः सहस्रं त उपावृतः ।
तासां पोषस्य पोषेण पुनर्नो नष्टमा कृधि पुनर्नो रयिमा कृधि स्वाहा ॥
अग्नयेऽङ्गिरस इदं न मम ।
ॐ पुनरूर्जा निवर्तस्व पुनरग्न इषाऽऽयुषा ।
पुनर्नः पाहि विश्वतः स्वाहा । अग्नय इदं० ।
ॐ सह रय्या निवर्तस्वाग्ने पिन्वस्व धारया ।
विश्वप्स्न्या विश्वतस्परि स्वाहा । अग्नय इदं० ।
भूः स्वाहा । अग्नय इदं० । भुवः स्वाहा । वायव इदं० । सुवः स्वाहा ।
सूर्यायेदं० । भूर्भुवः सुवः स्वाहा । प्रजापतय इदं न मम ।
ॐ अयाश्चाग्नेऽस्यनभिशस्तीश्च सत्यमित्त्वमया असि ।
अयासा मनसा धृतोऽयसा हव्यमूहिषे या नो धेहि भेषजꣳ स्वाहा ।
अयसेऽग्नय इदं न मम ।

ॐ मनो ज्योतिर्जुषतामाज्यं विच्छिन्नं यज्ञꣳ समिमं दधातु ।
या इष्टा उषसो निम्रुचश्च ताः संदधामि हविषा घृतेन स्वाहा ॥
मनसे ज्योतिष इदं० ।

ॐ प्रजापते न० यीणाꣳ स्वाहा । प्रजापतय इदं० ।

ॐ सप्त ते अग्ने समिधः सप्त जिह्वाः सप्तर्षयः सप्त धामप्रियाणि ।
सप्त होत्राः सप्तधा त्वा यजन्ति सप्त योनीरापृणस्वा घृतेन स्वाहा ॥
सप्तवतेऽग्नय इदं न मम ।

ॐ चित्तिः स्रुक् । चित्तमाज्यम् । वाग्वेदिः । आधीतं बर्हिः । केतो अग्निः । विज्ञातमग्निः । वाक्पतिर्होता । मन उपवक्ता । प्राणो हविः । सामाध्वर्युः । वाचस्पते विधे नामन् । विधेम ते नाम । विधेस्त्वमस्माकं नाम । वाचस्पतिः सोमं पिबतु । आऽस्मासु नृम्णं धात्स्वाहा । वाचस्पतये ब्रह्मण इदं० ।

इत्यष्टादशाऽऽहुतीर्हुत्वेमं मे वरुणेत्यादि संस्रावजपान्तं कृत्वोक्तरीत्या त्रिवृदन्नहोमं कृत्वा पुण्याहवाचनं विधायाग्निः प्रीयतामिति वदेत् । ततः पार्वणस्थालीपाकवदाग्नेयस्थालीपाकं सद्य एव कृत्वा वाससी धेनुमनड्वाहं तन्निष्क्रयद्रव्यं वा ब्राह्मणाय दक्षिणां दद्यात् । ततो यथाविभवं ब्राह्मणान्संभोज्य भूयसीं दत्त्वा कर्मसाद्गुण्याय विष्णुं संस्मरेत् ।

इति पुनःसंधानप्रयोगः ।

---

अथ सभार्यस्य प्रवासविधिः ।

सभार्यः प्रयास्यन्नग्निं समारोप्य गच्छेत् ।

अथ समित्समारोपः—प्रत्यक्षस्याग्नेः सकाशाद्देवतारूपस्याग्नेरानयनं समारोपणं समिधमग्नौ प्रताप्य शुचिर्धारयति ।

ॐ अयं ते योनिर्ऋत्वियो यतो जातो अरोचथाः ।
तं जानन्नग्न आरोहाथा नो वर्धया रयिम् ॥ इति ।

अथाऽऽत्मसमारोपः—हस्तं वह्नौ प्रताप्य मुखेन नासिकया वोच्छ्वासाकर्षणं यजमान एव करोति ।

ॐ पुनरग्निश्चक्षुरदात्पुनरिन्द्रो बृहस्पतिः ।
पुनर्मे अश्विना युवं चक्षुराधत्तमक्ष्योः स्वाहा ॥
अग्नय इन्द्राय बृहस्पतयेऽश्विभ्यां चेदं न मम ।
ॐ तन्तुं तन्वन्रजसो भानुमन्विहि ज्योतिष्मतः पथो रक्ष धिया कृतान् ।
अनुल्बणं वयत जोगुवामपो मनुर्भव जनया दैव्यं जनᳪ स्वाहा ॥
तन्तुमतेऽग्नय इदं न मम ।
ॐ उद्बुध्यस्वाग्ने प्रतिजागृह्येनमिष्टापूर्ते सᳪसृजेथामयं च ।
पुनः कृण्वᳪस्त्वा पितरं युवानमन्वाताᳪसीत्त्वयि तन्तुमेतᳪ स्वाहा ॥
तन्तुमतेऽग्नय इदं न मम ।
ॐ त्रयस्त्रिᳪशत्तन्तवो ये वितत्निरे य इमं यज्ञᳪ स्वधया ददन्ते
तेषां छिन्नं प्रत्येतद्दधामि स्वाहा घर्मो देवाᳪ अप्येतु स्वाहा ।
तन्तुमतेऽग्नय इदं० ।
ॐ अग्नेऽभ्यावर्तिन्नभि न आवर्तस्वाऽऽयुषा वर्चसा सन्या मेधया
प्रजया धनेन स्वाहा ।
अग्नयेऽभ्यावर्तिन इदं० ।
ॐ अग्ने आङ्गिरः शतं ते सन्त्वावृतः सहस्रं त उपावृतः ।
तासां पोषस्य पोषेण पुनर्नो नष्टमा कृधि पुनर्नो रयिमा कृधि स्वाहा ॥
अग्नयेऽङ्गिरस इदं न मम ।
ॐ पुनरूर्जा निवर्तस्व पुनरग्न इषाऽऽयुषा ।
पुनर्नः पाहि विश्वतः स्वाहा । अग्नय इदं० ।
ॐ सह रय्या निवर्तस्वाग्ने पिन्वस्व धारया ।
विश्वप्स्न्या विश्वतस्परि स्वाहा । अग्नय इदं० ।
भूः स्वाहा । अग्नय इदं० । भुवः स्वाहा । वायव इदं० । सुवः स्वाहा ।
सूर्यायेदं० । भूर्भुवः सुवः स्वाहा । प्रजापतय इदं न मम ।
ॐ अयाश्चाग्नेऽस्यनभिशस्तीश्च सत्यमित्त्वमया असि ।
अयासा मनसा धृतोऽयसा हव्यमूहिषे या नो धेहि भेषजᳪ स्वाहा ।
अयसेऽग्नय इदं न मम ।

ॐ मनो ज्योतिर्जुषतामाज्यं विच्छिन्नं यज्ञꣳ समिमं दधातु ।
या इष्टा उषसो निम्रुचश्च ताः संदधामि हविषा घृतेन स्वाहा ॥
मनसे ज्योतिष इदं० ।

ॐ प्रजापते न० रयीणाꣳ स्वाहा । प्रजापतय इदं० ।

ॐ सप्त ते अग्ने समिधः सप्त जिह्वाः सप्तर्षयः सप्त धाम प्रियाणि ।
सप्त होत्राः सप्तधा त्वा यजन्ति सप्त योनीरापृणस्वा घृतेन स्वाहा ॥
सप्तवतेऽग्नय इदं न मम ।

ॐ चित्तिः स्रुक् । चित्तमाज्यम् । वाग्वेदिः । आधीतं बर्हिः । केतो अग्निः । विज्ञातमग्निः । वाचस्पतिर्होता । मन उपवक्ता । प्राणो हविः सामाध्वर्युः । वाचस्पते विधे नामन् । विधेम ते नाम । विधेस्त्वमस्माकं नाम । वाचस्पतिः सोमं पिबतु । आऽस्मासु नृम्णं धात्स्वाहा ।
वाचस्पतये ब्रह्मण इदं० ।

इत्यष्टादशाऽऽहुतीर्हुत्वेमं मे वरुणेत्यादि संस्थाजपान्तं कृत्वोक्तरीत्या स्विष्टकृद्धोमं कृत्वा पुण्याहवाचनं विधायाग्निः प्रीयतामिति वदेत् । ततः पार्वणस्थालीपाकवदाग्नेयस्थालीपाकं सद्य एव कृत्वा वाससी धेनुमनड्वाहं तन्निष्क्रयद्रव्यं वा ब्राह्मणाय दक्षिणां दद्यात् । ततो यथाविभवं ब्राह्मणान्संभोज्य भूयसीं दत्त्वा कर्मसाद्गुण्याय विष्णुं संस्मरेत् ।

इति पुनःसंधानप्रयोगः ।

---

अथ सभार्यस्य प्रवासविधिः ।

सभार्यः प्रवास्यन्नग्निं समारोप्य गच्छेत् ।

अथ समित्समारोपः—प्रत्यक्षस्याग्नेः सकाशाद्देवतारूपस्याग्नेरानयनं समारोपणं समिधमग्नौ प्रताप्य शुचिर्धारयति ।

ॐ अयं ते योनिर्ऋत्वियो यतो जातो अरोचथाः ।
तं जानन्नग्न आरोहाथा नो वर्धया रयिम् ॥ इति ।

अथाऽऽत्मसमारोपः—हस्तं वह्नौ प्रताप्य मुखेन नासिकया वो च्छ्वासाकर्षणं यजमान एव करोति ।

ॐ या ते अग्ने यज्ञिया तनूस्तयेह्यारोहाऽऽत्माऽऽत्मानम् । अच्छा वसूनि कृण्वन्नस्मे नर्यापुरूणि । यज्ञो भूत्वा यज्ञमासीद स्वां योनिम् । जातवेदो भव आजायमान. स क्षय एहि ।

आत्मसमारूढाग्नेर्मन्थादौ सन्निरस्त्रानिमज्जने सत्यग्नेर्नाशः । समित्स मारोपणं तु यजमानोऽन्वर्युर्वा करोति । अनुचरणे ग्रामातिक्रमणे च दम्पत्योरन्वारम्भः । यत्र तिष्ठेत्तत्र स्वयोनित उत्पन्नमग्निमाहृत्य संस्कृत्याऽऽयतने स्थापयति ।

अथ समिद्गन्यारोपः ।

ॐ आजुह्वानः सुप्रतीकः पुरस्तादग्ने स्वां योनिमासीद साधुया ।
अस्मिन्त्सधस्थे अध्युत्तरस्मिन्विश्वे देवा यजमानश्च सीदत ॥
उद्बुध्यस्वाग्ने प्रतिजागृहीनमिष्टापूर्ते सश्सृजेथामयं च ।
पुनः कृण्वश्स्त्वा पितरं युवानमन्वाताश्सीत्त्वयि तन्तुमेतम् ॥

इति द्वाभ्यां मन्त्राभ्यामात्मसमारूढस्याग्नेरवरोपः । उद्धननादिना संस्कृतायतनेऽग्निमानीय मन्त्राक्रं तत्र मुखेन न्यासिकया वा श्वासम-वरोपयति ।

ॐ उपावरोह जातवेदः पुनस्त्वं देवेभ्यो हव्यं वह नः प्रजानन् ।
आयुः प्रजाश रयिमस्मासु धेह्यजस्रो दीदिहि नो दुरोणे ॥
इति समारोपस्य प्रवासविधिः ।

---

अथान्तरितस्थालीपाकप्रयोगः ।

यदि पर्वणि स्थालीपाको न कृतस्तदाऽऽग्रामन्वाधानावधिरेतस्य गौणः कालः । गौणकालेऽपि न कृतस्तदाऽऽगामिपार्वणेन सह कार्यः । अन्तरितस्थालीपाकममुकस्थालीपाकेन सह करिष्य इति संकल्पैक चरौ स्थालीपाकतन्त्रेण श्रपयित्वा यथादैवतं विभज्य सकृदवदाय जुहोति । अग्नये पथिकृते स्वा० । अग्नये स्वा० । अग्नये स्विष्टकृते स्वा० । इत्याहुतित्रयं हुत्वाऽन्यत्समानम् ।

यदि द्वितीयो गौणकाले न कृतस्तदा द्वौ विच्छिन्नौ तृतीयस्थालीपाकेन सह कार्यौ । अन्तरितावमुकस्थालीपाकावमुकस्थालीपाकेन सह तन्त्रेण करिष्य इति संकल्प्यैकं चरुं श्रपयित्वा यथादैवतं विभज्य दर्व्योपहत्य सकृदवदाय जुहोति–अग्नये पथिकृते० । अग्नये वैश्वानराय० । अग्नये० । अग्नये स्विष्टकृते० । इत्याहुतिचतुष्टयं हुत्वाऽन्यत्समानम् ।

यदि तृतीयस्थालीपाकं गौणे न करोति तदा पुनराधानं कुर्यात् । पौर्णमास्यां पथिकृदमावास्यायां वैश्वानर इति द्रष्टव्यम् ।

इत्यन्तरितस्थालीपाकप्रयोगः ।

---

## अथ ब्रह्मकूर्चहोमप्रयोगः ।

कर्ता तीर्थादिपवित्रदेशे स्नातः शुक्लवासा जितेन्द्रियः शुचिराचम्य प्राणानायम्य देशकालौ संकीर्त्योत्सर्जनोपाकर्मणी कर्तुमात्मनः शरीरशुद्ध्यर्थं ब्रह्मकूर्चहोमं पञ्चगव्याशनं च करिष्य इति संकल्पं कुर्यात् । ततः स्थण्डिलं कृत्वा तद्धोमयेनोपलिप्योद्धननादिसंस्कारं विधाय तत्र विण्नामानं लौकिकमग्निं प्रतिष्ठाप्य प्रज्वाल्य ध्यात्वा समिद्द्वयमादाय श्रद्धे पद्धीत्यादि प्राणायामान्तं कृत्वा ब्रह्मकूर्चहोमकर्मणि या यक्ष्यमाणा० ध्यामि । अग्निं पञ्चगव्याहुत्या यक्ष्ये । सोमं पञ्च० । विष्णुं तिसृभिः पञ्च० । रुद्रं पञ्च० । अपोदकस्पर्शः । सवितारं पञ्च० । ब्रह्म पञ्च० । परमात्मानं प्रणवेन पञ्चगव्यचतुर्थभागेन यावत्य आहुतयो भवन्ति तावतीभिः पञ्चगव्याहुतिभिर्यक्ष्य इत्यन्तमुक्त्वा समिधोऽन्वाधायाग्निं परिस्तीर्य दर्वीं सप्तपत्रान्सप्ताग्रान्हरितानक्षतान्केनचिद्दर्भेण बद्धान्दर्भानाज्यस्थालीं पञ्चगव्यार्थं पात्रादन्यतमं पात्रमुपवेषं संमा० अव० आज्यं० पञ्चगव्यानि समिधं चाऽऽसाद्य पवित्रे कृत्वा प्रोक्षणीः संस्कृत्य पात्राणि प्रोक्ष्य दर्वीं दर्भांश्च संमृज्य पञ्चगव्यं निष्पाद्याऽऽज्यविलापनादिपवित्राभ्याधानान्तं कुर्यात् । पर्यग्निकरणकाले पञ्चगव्यस्यापि पर्यग्निकरणम् । ततोऽदितेऽनुमन्यस्वेति परिषेकं कृत्वाऽऽसादितां समिधमाधाय पूर्ववत्प्रधानाहुतीर्हुत्वाऽवशिष्टं पञ्चगव्यं प्रणवेनाऽऽलोड्य प्रणवेनाभिमन्त्र्य प्रणवेन सर्वं पिबेत् । ततो हस्तपादमुखप्रक्षालनं कृत्वा पवित्रे त्यक्त्वा द्विराचम्यान्ये पवित्रे धृत्वा व्यस्तसमस्तव्याहृतिभिस्तत्र आहु-

तौर्जुहुयात् । एतद्धोमाकरणे नाऽऽज्यसंस्कारः । पञ्चगव्यस्य पर्यग्निकरणं भवत्येव । ततः परिस्तरणानि विसृज्योत्तरपरिषेकं कुर्यात् ।

इति ब्रह्मकूर्चहोमप्रयोगः ।

---

अथोपाकरणप्रयोगः ।

कर्ता कृतनित्यक्रियः पवित्रपाणिराचम्य प्राणानायम्य देशकालौ संकीर्त्याधीतानां छन्दसामध्येष्यमाणानां चास्थानोच्चारादिजनितयातयामतानिरासपूर्वकाप्यायनसिद्धिपुनर्वेदग्रहणाधिकारसिद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थं वेदोपाकरणाख्यं कर्म करिष्य इति संकल्पं कुर्यात् । द्वितीयाद्युपाकरणे त्वध्येष्यमाणानां छन्दसामित्याद्येव संकल्पः । शिष्यसत्त्वे तैर्भिः शिष्यैः सहेत्यूहः । उपाकरणसंकल्पः सर्वैरपि कार्यः । उपाकर्मप्रथमप्रयोगाङ्गभूतं गणपतिपूजनं पुण्याहवाचनं मातृ० नं नान्दीश्राद्धं च तत्पित्रादिभिः कारयेत् । प्रथमोपाकर्म भद्राव्यतीपाताधिमासास्ताादिषु न भवति ।

तत आचार्य उपाकर्माङ्गभूतहोमार्थं स्थण्डिलस्य गोमयोपलेपनोद्धननादिसंस्कारं विधाय बलवर्धननामानमग्निं प्रतिष्ठाप्य प्रज्वाल्य ध्यायेत् ।

ततः समिद्द्वयमादाय श्रद्धं पहीत्यादि प्राणायामान्तं कृत्वोपाकरणहोमकर्मणि या यक्ष्यमाणा इत्यादिव्याहृत्यन्तमुक्त्वा प्रधानहोमे प्रजापतिं काण्डर्षिं सोमं काण्डर्षिमग्निं काण्डर्षिं विश्वान्देवान्काण्डर्षीन्सांहितीऋग्वेदं यजुर्वेदं सामवेदमथर्ववेदं सदसस्पतिं चाऽऽज्येन यक्ष्ये । यज्ञोपवीतहोमे परमात्मानं यज्ञोपवीतेन यक्ष्ये । अथोपहोमे चित्तं चित्तिमित्यादि । पात्रासादन आज्यासादनोत्तरमुपवीतासादनम् । व्याहृतिहोमान्ते—प्रजापतये काण्डर्षये स्वाहा । प्रजापतये काण्डर्षय इदं० । सोमाय काण्डर्षये स्वाहा । सोमाय काण्डर्षय इदं० । अग्नये काण्डर्षये स्वाहा । अग्न० र्षय इदं० । विश्वेभ्यो देवेभ्यः काण्डर्षिभ्यः स्वाहा । विश्वेभ्यो देवेभ्यः काण्डर्षिभ्य इदं० । इति चतुरः काण्डर्षीञ्जुहुयात् ।

ततः—सावित्र्यै स्वाहा । सावित्र्या इदं० । ऋग्वेदाय स्वाहा । ऋग्वे·

दाये० । यजुर्वेदाय स्वाहा । यजुर्वेदाये० । सामवेदाय स्वाहा । सामवेदाये० । अथर्ववेदाय स्वाहा । अथर्ववेदाये० । सदसस्पतये स्वाहा । सदसस्पतय इ० ।

ततो दर्व्या यज्ञोपवीतं गृहीत्वा यज्ञोपवीतं पर० तेजः स्वाहेत्यग्नौ जुहोति । परमात्मन इदं० । सर्वैर्यथाचारं यज्ञोपवीतानि ब्राह्मणेभ्यो दत्त्वा विधिना धार्याणि । तत इषे त्वेत्यनुवाकः । आप उन्दन्त्वित्यनुवाकः । घर्मः शिरस्तदयमग्निरित्यनुवाकः । अनुमत्यै पुरोडाशमष्टाकपालं निर्वपतीति संहिताप्रथमकाण्डस्याष्टमप्रश्नाद्यानुवाकः । सह वै देवानामिति खण्डद्वयम् । खण्डद्वयाध्ययने पूर्वमुत्तरं च नमो ब्रह्मण इति शान्तिं पठेत् । नात्र ब्रह्मयज्ञविधिः । तत आचार्य उपाकृता वै वेदास्त्र्यहमेकाहं वाऽनध्यायः कार्य इति शिष्यान्वदेत् । ततश्चित्तं च स्वाहेत्यादिपूर्णपात्रदानान्तं कृत्वाऽग्निं संपूज्य विभूतिं धृत्वा विष्णुं संस्मरेत् । नात्र स्विष्टकृद्धोमः । ततस्त्र्यहमेकाहं वा स्वाध्यायदिनेषु विरम्य कृतान्ताद्ध्येतव्यम् ।

इत्युपाकरणप्रयोगः ।

---

अथोत्सर्जनप्रयोगः ।

कर्ता जलसमीप आसनमुपविश्याऽऽचम्य प्राणानायम्य देशकालौ संकीर्त्याधीतानां छन्दसामयातयामत्वादिजनितयातयामत्वापनोदनिरासेनाऽऽप्यायनवेदोत्सर्गसिद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थं वेदोत्सर्जनाख्यं कर्म करिष्य इति संकल्पं कृत्वा भस्मगोमयमृत्तिकास्नानानि कुर्यात् । भस्माऽऽदाय ईशानाय नमः शिरसि । तत्पुरुषाय नमो मुखे । अघोराय नमो हृदये । वाम० मो गुह्ये । सद्यो० मः पादयोः । अग्निरिति भस्म० मा नस्तो० म त इति शिरःप्रभृत्यङ्गानि भस्मना विलिप्य स्नात्वाऽऽचामेत् । ततो गोमयमादाय गन्धद्वारां दु० श्रियमिति शिरःप्रभृत्यङ्गानि विलिप्य, अग्रमग्रं च० सर्वदेति पुनस्तथैव विलिप्य स्नात्वाऽऽचामेत् । अश्वक्रान्ते० लोकधारिणीति द्वाभ्यां भूमिमभिमन्त्र्य सहस्रपर० शिनीति दूर्वामभि० उद्धृताऽसि० हुनेति मृत्तिकां गृहीत्वा काण्डात्काण्डात्प्र० या शतेनेति द्वाभ्यां दूर्वामादाय मृत्तिके हन मे० यां गमिषिमि दूर्वां मृदि प्रतिष्ठाप्य

यत इन्द्र इ० इति प्राच्यां मृत्तिकां मक्षिपेत् । स्वस्तिदा० इति दक्षिणस्याम् । स्वस्ति न इन्द्रो० इति प्रतीच्याम् । त्रातारमिन्द्र० इत्युत्तरस्याम् । परं मृत्यो० इत्यूर्ध्वम् । स्योना पृथि० इत्यधः । गन्धद्वारां० मृत्तिकां गृहीत्वा उदु त्यं जा० इति सूर्याय दर्शयित्वा श्रीर्मे भजतु अलक्ष्मीर्मे नश्यतु इति शिरसि प्रदक्षिणं मृत्तिकां विलिप्य सहस्रशीर्षा इति शिरसि । विष्णुमुखा० इति मुखे । महाँ२ इन्द्रो० इति बाह्वोर्मन्त्रावृत्त्या । सोमानं० इति कुक्ष्योर्मन्त्रावृत्त्या । शरीरं य० इति शरीरे । नाभिर्मे० सदिति नाभ्याम् । आपान्तम० ब्रह्म जज्ञानं० इति कट्योः । विष्णो रराटमसीति पृष्ठे । वरुणस्य स्कम्भनमसीति मेढ्रे । आनन्दनन्दा० पस इत्यण्डयोः । ऊरवोरोज इत्यूर्वोः । जङ्घाभ्या प० इति जङ्घयोः । चरणं पवित्रमिति चरणयोः । इदं विष्णुस्त्रीणि पदेति द्वाभ्यां पादतलयोः । सजोषा इन्द्र० इति दूर्वासहितं शेषं शिरसि निदध्यात् । सुमित्रा न इत्यञ्जिरात्मानमासिच्य दुर्मित्रा इत्यादिभिर्द्वेष्यं ध्यायन्भूमौ क्षिपेत् । एतानि भस्मगोमयमृत्तिकास्नानानि कृताकृतानि ।

ततो हिरण्यशृङ्गं वरुणं० इति तीर्थाधिपतिं वरुणं संप्रार्थ्य यन्मे मनसा० पुनः पुनरितीन्द्रादिदेवताः संप्रार्थ्य नमोऽग्नयेऽप्सुमते० नमोऽस्त्वप इति मन्त्रोक्तदेवता नमस्कृत्य यदपां क्रूरं य० इति हस्ताभ्यां जलदोषं दूरीकृत्य सागरस्य तु निश्वासो० वेश्वरेति नमस्कृत्य, अपामानाद० पत्तामिति मन्त्रद्वयं पठित्वा शिखां विस्रस्य पुरतः कृत्वाऽर्काभिमुखः स्नानं कुर्यात् ।

तत इमं मे गङ्गे० सुपोमयेति गङ्गादिनदीः संप्रार्थ्य ऋतं च सत्यं० सुत इत्युचाशु पठित्वा तदन्ते प्राणमायच्छेत् । एवमन्यौ द्वौ प्राणायामौ विधाय द्विराचम्य पवित्रे धृत्वा, आपो हि ष्ठा० ३ नः । हिरण्यवर्णाः० ४ पव । पवमान० सु० पुनातु । इति जलस्थो मार्जनं कुर्यात् । द्विराचम्य यत्पृथिव्यां० मर्पणः, पुनन्तु वस० गोत्रा २ एष पुण्य० पवयम् २ द्यावापृथिव्योः० त्रिशारि ४ इति सर्वत्रान्ते स्नात्वा पुनर्द्विरारं तूष्णीं स्नात्वाऽर्द्ध ज्वलति० होमि स्वाहेति मन्त्रावृत्त्या द्विराचम्य, अकार्यवा० रजो भूमि० इति द्वाभ्यां स्नानं कृत्वा तूष्णीं द्विराचामेत् ।

ततो ब्रह्मादयो ये देवास्तान्देवांस्तर्पये० । भूर्देवास्त० । भुवो देवां० ।

हेनाक्षेनार्चनम् । पितृष्वपि स्वाहाशब्द एव न स्वधाशब्दः । ततो ब्रह्माणं तर्पयामीत्येवं फलोदकेन तर्पणं कृत्वा ब्रह्मणे नमः प्रजापतये नम इत्याद्यूहेन ब्रह्मादीनुपस्थाप्य सर्वान्विसर्जयेयुः ।

ततोऽपरेण वेदिमुत्सर्जनाङ्गभूतहोमार्थं स्थण्डिलं कृत्वा गोमयेनोपलिप्योद्धननादिना संस्कृत्य बलवर्धननामानमग्निं प्रतिष्ठापयामीति प्रतिष्ठाप्य प्रज्वाल्य ध्यायेत् । ततः समिन्त्रयमादाय अद्य एहीत्यादि प्राणायामान्तं कृत्वोत्सर्जनहोमकर्मणि या वक्ष्यमाणा इत्यादि यज्ञोपवीतधारणान्तमुपाकरणवत्सर्वं कुर्यात् । ततः सर्व इषे त्वेत्यनुवाकमधीयते काण्डादीन्वा पूर्ववत् । तत आचार्य उत्सृष्टा वै वेदास्त्र्यहमेकाहं वाऽनध्यायः कार्य इति शिष्यान्वदेत् । ततश्चित्तं च स्वाहेत्यादिपूर्णपात्रदानान्तं कृत्वाऽग्निं संपूज्य विभूतिं धारयेत् । ततः सर्वे जलसमीपं गत्वा काण्डात्काण्डात्प्र० वयमिति मन्त्रद्वयान्ते एकैकां बह्वीर्वा दूर्वा रोपयन्ति । ततो जलाशयं विलोडनेनोर्मिमन्तं कृत्वा जलाशयाद्बहिः प्राचीमुदीचीं वा दिशं यावज्जलं शीघ्रं धावनं कृत्वा गृहमागच्छेयुः । ततः सर्वेऽपूपैः सक्तुभिरोदनेनान्यैश्च व्यञ्जनैः पूजनपूर्वकं ब्राह्मणान्भोजयेयुः । तत्रापूपाः प्रथमं परिवेषणीयास्ततः सक्तवस्तत ओदनस्ततोऽन्यानि व्यञ्जनानीति परिवेषणे क्रमः । नैवात्र त्रिहृद्धहोमः । ततः शिष्या आचार्याय हिरण्यं गां वा दक्षिणां दत्त्वा प्रमादादिति विष्णुं स्मरेयुः । आचारात्सर्वे सुवृष्ट्यर्थं पर्जन्यसूक्तानि पठेयुः ।

इत्युत्सर्जनप्रयोगः ।

---

## अथ सभादीपदानम् ।

अस्मिन्दिने पतिमत्यो नार्यः सभादीपदानं कुर्वन्ति । एतच्चाऽऽचारप्राप्तम् । देशकालौ संकीर्त्य मम सौभाग्याद्यभिवृद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थं सभादीपदानं करिष्ये इति संकल्प्य गणपतिपूजनं विप्रपूजनं च कृत्वा—

भो दीप ब्रह्मरूपस्त्वं ज्योतिषां प्रभुरव्ययः ।
सौभाग्यं देहि मे पुत्रानैश्वर्यं च देहि मे ॥

श्रावणे मास्युपाकर्मप्रारम्भे विप्रसंनिधौ ।
व्रीहितण्डुलपिष्टेन पलाशीत्या विनिर्मितम् ॥
घृतवर्तिसमायुक्तं विमले कांस्यभाजने ।
स्थापितं तण्डुलप्रस्थयुक्पूगीफलसंयुतम् ॥
मातुलिङ्गश्रीफलादिपञ्चसंख्यफलैर्युतम् ।
अवैधव्यसुपुत्रत्वदीर्घायुःश्रीसुखाप्तये ॥
अभीष्टस्यास्तु मे प्राप्तिर्भवेऽस्मिंश्च भवान्तरे ।
श्रावण्यां श्रवणर्क्षे च सभायामग्निसंनिधौ ।
सभादीपं प्रदास्यामि तुभ्यं विप्र सदक्षिणम् ॥

इति सदक्षिणं विप्राय दद्यात् । प्रतिगृह्णामीति विप्रः । एवं पञ्चवर्षपर्यन्तं श्रावण्यां पौर्णमास्यां दीपदानं कृत्वोद्यापनं कुर्यात् ।

पञ्चवर्षपर्यन्तं कृतस्य सभादीपदानकर्मणः संपूर्णतायां उद्यापनं करिष्ये इति संकल्प्य गणपतिं संपूज्य पञ्चप्रस्थसंमितानि पञ्च धान्यानि पञ्चसु पात्रेषु भूमौ वा निधाय मध्यस्थधान्यराशौ प्रस्थपरिमितं तण्डुलपूरितं पात्रं निधाय तत्र दीपं संस्थाप्य तत्समीपे यथासंभवं सुवर्णनिर्मिते रजतनिर्मिते वा दीपपात्रे यथासंभवसुवर्णनिर्मितां वर्तिकां निधाय तत्समीपे कार्पासवर्तिकां घृताभ्यक्तां निधाय दीपद्वयं प्रज्वाल्य दीपपात्रद्वयं यज्ञोपवीतेन वेष्टयित्वा वस्त्रद्वयं समीपे संस्थाप्य दीपं विप्रं च संपूज्य सभादीपदानपूर्णतायां इमं सोपस्करं सदक्षिणं सभादीपं संप्रददे न ममेति दद्यात् ।

इति सभादीपदानम् ।

---

## अथ वेदपारायणोपाकरणप्रयोगः ।

कर्ता कृतनित्यक्रियः प्राङ्मुख उपविश्याऽऽचम्य प्राणानायम्य देशकालौ संकीर्त्य मम सकलपापक्षयपुत्रधनधान्यस्वर्गाद्यभीप्सितसकलकामनासिद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थं स्वशाखात्मकवेदस्य पारायणं करिष्ये इति संकल्पं कुर्यात् । ततस्तदङ्गं गणेशपूजनं पुण्याहवाचनं मातृ० नान्दीश्राद्धं च कुर्यात् । ततोऽमुकप्रवरान्वितामुकगोत्रोत्पन्नोऽमुकशर्माऽहममुकप्र० तामुकगो० अमुकशाखाध्यायिनममुकशर्माणं वेदपारायणार्थमृत्विजं त्वा वृण इत्यृत्विग्वरणं कुर्यान्मधुपर्कं च ।

ततः पारायणकर्ताऽऽचम्य प्राणानायम्य देशकालौ संकीर्त्यामुककर्मणा कृतोऽहमृत्विक्कर्म करिष्य इति संकल्प्य स्थण्डिलकरणादि क्रियाश्च वलवर्धननामानमग्निं प्रतिष्ठापयामीति लौकिकाग्निं स्थापयेत् । ततोऽग्निं ध्यात्वा समिद्द्वयमादाय अग्न एहीत्यादि प्राणायामान्तं कृत्वा वेदपारायणोपाकरणहोमकर्मणि या वक्ष्यमाणा इत्यादि व्याहृत्यन्तमुक्त्वा प्रधानहोमे प्रजापतिं काण्डर्षिमित्यादि सदसस्पतिं चाऽऽज्येन यक्ष्य इत्यन्तमुक्त्वा जयोपहोमे चित्तं चित्तिमित्यादि व्याहृतिहोमान्तं कृत्वा प्रजापतये काण्डर्षये स्वाहेत्यादिप्रधानाहुतीर्हुत्वा जयोपहोमादि सर्वं होमशेषं समापयेत् । नात्र त्रिवृदन्नहोमः । ततो ब्राह्मणान्संपूज्य कर्मसाद्गुण्याय विष्णुं संस्मृत्य दर्भासनोपविष्टो दर्भपाणिः प्राङ्मुख उपविश्याऽऽचम्य प्राणानायम्य प्रणवमुच्चार्य वाग्यत इषे त्वेत्यादिकं यथापाठं साङ्गं वेदपारायणमारभेत । प्रश्नान्तेऽनुवाकान्ते वा विरमेत् । प्रत्यहं प्रहरद्वयपर्यन्तं यावत्पारायणं भवति तावत्कर्तव्यम् । अतित्वरायां सार्धप्रहरद्वयपर्यन्तम् । आरण्यकप्रपाठकेषु मध्ये विरामेऽपि तत्तत्पाठकस्योत्तरां शान्तिं कुर्यात् । द्वितीयदिने पूर्वां शान्तिं कृत्वा कृतान्तादारभेत । कर्मसमाप्त्यन्तं ब्रह्मचर्यमधःशयनं स्वल्पं हविष्याशनं च कार्यम् । शक्तौ सत्यामुपोषणम् । पतितरजस्वलादिसंभाषणं तत्समक्षमध्ययनं च न कुर्यात् । ऋत्विक्कर्तृके पारायणेऽपि पारायणकारयितुरपि नियमाः कार्या एव ।

इति वेदपारायणोपाकरणप्रयोगः ।

---

अथ वेदपारायणोत्सर्जनप्रयोगः ।

पारायणकर्ता समाप्ते पारायणे प्राचीमुदीचीं वा दिशमुपनिष्क्रम्यापां समीपे शुचौ देश उपविश्याऽऽचम्य प्राणानायम्य देशकालौ संकीर्त्य मया कृतस्य वेदपारायणस्य साङ्गतासिद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थं वेदपारायणोत्सर्जनाख्यं कर्म करिष्य इति संकल्पं कुर्यात् । यदा तु स्वकर्तृकमेव पारायणं तदा गृह्याग्नौ होमस्य कर्तव्यत्वात्तदर्थं गमनवेलायामेव पूर्ववदग्निं समारोप्य तेन सहैव गच्छेत् । ततस्तदङ्गं गणपतिपूजनं पुण्या० मातृ० नान्दी० च कुर्यात् । तत ऋत्विक्पूर्वोक्तरीत्या स्नानविधिं देवर्षिपितृपूजनं च कुर्यात् । ततोऽपरेण वेदिमग्निमुपसमाधायेत्यादि प्राणायामान्तं कृत्वा वेदपारायणोत्सर्जनहोमकर्मणि या वक्ष्यमाणा

इत्यादि व्याहृत्यन्तमुक्त्वा प्रधानहोमे प्रजापतिं काण्डर्षिमित्यादि सदसस्पतिं चाऽऽज्येन यक्ष्य इत्यन्तमुक्त्वा जयोपहोमे चित्तं चित्तिमित्यादि व्याहृतिहोमान्तं कृत्वा प्रजापतये काण्डर्षये स्वाहेत्यादिप्रधानाहुतीर्हुत्वा जयोपहोमादिसर्वं होमशेषं समापयेत् । नैवात्र त्रिवृदन्नहोमः । ततो यजमान ऋत्विग्द्वारा पारायण ऋत्विजे सुवर्णगोदानवस्त्राद्यन्यतमां यथाविभवं दक्षिणां दत्त्वाऽपूपैः सक्तुभिरोदनेनान्यैश्च भक्ष्यैर्ब्राह्मणान्पूजनपूर्वकं भोजयित्वा भूयसीं दत्त्वाऽग्निं संपूज्य विभूतिं धृत्वा लौकिकाग्नौ होमशेषमग्निं गच्छ गच्छेति विसृज्य प्रमादादिति विष्णुं स्मरेत् ।

इति वेदपारायणोत्सर्जनप्रयोगः ।

---

अथ नित्यस्नानतर्पणयोः प्रयोगः ।

कर्ता प्रातरुत्थापनादि दन्तधावनान्तं नित्यविधिं कृत्वा स्नानसामग्रीं गृहीत्वा जलसमीपं गत्वोद्धृतजलेन मुखं पाणी पादौ च प्रक्षाल्योदकं स्पृष्ट्वा मलापकर्षणस्नानं कृत्वा बद्धशिखो दर्भपाणिः प्राङ्मुख आचम्य प्राणानायम्य देशकालौ संकीर्त्य मम सकलपापक्षयपूर्वककर्माधिकारसिद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थं प्रातःस्नानमहं करिष्य इति संकल्प्य तीर्थं संप्रार्थ्येमं मे गङ्गे इति पाणिनोदकमावर्त्यर्तं च सत्यं चाभीद्धादिति त्र्यावृत्त्या तृचेनाघमर्षणमन्त्रेण जले त्रीन्प्राणायामान्कृत्वाऽऽपो हि ष्ठेति तिसृभिर्हिरण्यवर्णाः शुचयः पावका इति चतसृभिः पवमानः सुवर्जन इत्यनुवाकेन च सर्वमन्त्रान्ते एकवारं प्राङ्मुखः स्नात्वा द्विराचम्य स्नानाङ्गं तर्पणं कुर्यात् । देवे तर्पण एकैकाञ्जलिरृषितर्पणेऽञ्जलिद्वयं पित्र्येऽञ्जलित्रयम् । ब्रह्मादयो ये देवास्तान्देवांस्तर्पयामि । भूर्देवां० भुवर्देवां० सुवर्देवां० भूर्भुवः सुवर्देवांस्तर्पयामि । निवीती विश्वामित्रादयो य ऋषयस्तानृषींस्तर्पयामि । भूर्ऋषीं० । भुवर्ऋषीं० । सुवर्ऋषींस्तर्पयामि । इत्यृषीन्संतर्प्य प्राचीनावीती वैशम्पायनादयो ये पितरस्तान्पितॄंस्तर्पयामि । भूः पितॄनित्यादिना पितॄन्संतर्पयेत् । ततो वस्त्रपरिधानं कृत्वा संध्यावन्दनादि नित्यकर्म विधाय ब्रह्मयज्ञविधिना ब्रह्मयज्ञं कुर्यात् । गृहे स्नानं तु गृहद्वाराभिमुखम् । गृहे स्नान आदावेव संकल्पं कृत्वा स्त्रीतामूष्णा आनीय मलापकर्षस्नानादि कुर्यात् । अत्राघमर्षणं मार्जनं तर्पणं च नास्ति । स्नानान्त एवाऽऽचमनम् ।

इति नित्यस्नानतर्पणयोः प्रयोगः ।

---

## अथ ब्रह्मयज्ञप्रयोगः ।

कृतोदिते सूर्ये प्रातर्होमानन्तरमकृतप्रातराशो ग्रामात्प्राच्यामुदीच्यामैशान्यां वा दिशि यावति देशे स्वग्रामच्छदींषि स्वगृहच्छदींषि वा न दृश्यन्ते तावति दूरे नदीतीरे देवखातादितीर्थेऽन्यस्मिन्नपि शुद्धे देशे वा गत्वा हस्तौ पादौ प्रक्षाल्याऽऽचम्य प्रदक्षिणमावृत्योपवीती भूत्वा जलं नमस्कृत्य प्रयतः प्राङ्मुख उपविश्याऽऽचम्य प्राणानायम्यापः स्पृष्ट्वा देशकालौ संकीर्त्य श्रीपरमेश्वरप्रीत्यर्थं ब्रह्मयज्ञेन यक्ष्य इति संकल्प्य हस्तौ जलेन प्रक्षाल्य त्रिराचम्य सोदकेनाङ्गुष्ठमूलेन द्विरोष्ठौ संमृज्याऽऽर्द्राङ्गुलिभिरोष्ठौ सकृदुपस्पृश्य दक्षिणहस्तेन सव्यं पाणिं पादौ च प्रोक्ष्याऽऽर्द्राङ्गुलिभिः शिरश्चक्षुषी नासिके श्रोत्रे हृदयमालभ्य प्रत्यालम्भमपः संस्पृश्यैतत्कर्माङ्गमाचमनं कृत्वा प्रभूतान्प्रागग्रान्दर्भानास्तीर्य पाण्योः पवित्रे धृत्वा दक्षिणोत्तरौ पाणी पादौ च कृत्वैवंभूतस्तेषु दर्भेषु प्राङ्मुख एवाऽऽसीनः प्रणवमुच्चार्य भूर्भुवः सुवरिति तिस्रो व्याहृतीः पठित्वा, भूस्तत्सवितुर्वरेण्यम् । भुवो भर्गो० महि । सुवर्धि० यात् । भूर्भुवस्तत्सवि० महि । सुवर्धि० यात् । भूर्भुवः सुवस्तत्सवि० महि । धियो० यात् । इत्येवं व्याहृतिवर्जितां वा पच्छोऽर्धर्चशोऽनवानं गायत्रीमधीत्य द्यावापृथिव्योः संधिमीक्षमाणः संमील्य वा यथा युक्तमात्मानं मन्येत तथा युक्त इषे त्वेति काण्डं प्रपाठकमात्रमनुवाकमात्रं वा मनसा यथाशक्त्यधीत्य प्रज्ञातं निधाय नमो ब्रह्मण इति परिधानीयामृचं त्रिः पठित्वा प्रणवमुच्चारयेत् । अत्र ब्रह्म भूर्भुवः सुवः, ॐ शान्तिः शान्तिः शान्तिः, इति । ततोऽप उपस्पृश्य पूर्वोक्तं कर्माङ्गमाचमनं कृत्वा प्रमादादिति विष्णुं स्मरेत् । ततो गृहमागत्य मुष्टिमात्रमन्नमपि कस्मैचिद्ब्राह्मणाय दक्षिणां दद्यात् । एवमेव दिनान्तरे विरामोत्तरवेदमारभ्य पठेत् । एवंरीत्या संहितां ब्राह्मणमारण्यकं च पठेत् । शिक्षा कल्पो व्याकरणं ज्यौतिषं छन्दो निरुक्तमित्यङ्गानि तत्तद्दिने वेदाध्ययनोत्तरमेव क्रमेण प्रज्ञातदेशादारभ्याध्येतव्यानि । पुराणेतिहासादीनां वेदार्थोपबृंहकत्वादङ्गेष्वेवान्तर्भावादेतत्पाठोऽपि प्रज्ञातप्रदेशादारभ्यैव दिनान्तरे कार्यः । आरण्यकप्रपाठकेषु मध्ये विरामेऽपि तत्तत्प्रपाठकस्यो-

त्तरां शान्तिं कृत्वाऽनन्तरं नमो ब्रह्मण इति परिदध्यात्। द्वितीयदिने गायत्रीपाठानन्तरं तत्तत्प्रपाठकस्य पूर्वां शान्तिं कृत्वा कृतान्त्यादारभेत। अनध्याये स्वल्पो ब्रह्मयज्ञः कार्यः।

इति ब्रह्मयज्ञप्रयोगः।

---

## अथ तर्पणविधिः।

ततो देवर्षिपितृतर्पणं कुर्यात्। मध्याह्नसंध्योत्तरं वा तर्पणम्। अकृतब्रह्मयज्ञस्तु मध्याह्नसंध्योत्तरं ब्रह्मयज्ञं कृत्वा तर्पणं कुर्यात्। तद्यथा— शुचौ देशे प्राङ्मुख उपविश्य देशकालौ संकीर्त्य देवर्षिपितृतृप्त्यर्थं तर्पणं करिष्य इति संकल्प्य शुद्धदेशे प्रागग्रान्दर्भानास्तीर्य ताम्रपात्रमक्षतसंयुक्तं जलेन पूरयित्वाऽञ्जलौ प्रागग्रान्दर्भान्गृहीत्वा यज्ञोपवीती देवतीर्थेनाऽऽस्तृतेषु प्रागग्रेषु कुशेष्वग्रभागेऽक्षतव्रीहितण्डुलसंयुक्तेन जलेनैकैकाञ्जलिं ब्रह्माद्यङ्गिरोन्तेभ्यो देवेभ्यो दद्यात्। ताम्रादिभाजनान्तरे जले वा तर्पयेत्।

तत उदङ्मुखो निवीती कनिष्ठाङ्गुलिद्वयमूलप्रदेशात्मकेन प्राजापत्येन तीर्थेनोदगग्रेष्वास्तृतेषु कुशेषु मध्यभागे यवमिश्रितजलेन विश्वामित्रादीतिहासपुराणान्तेभ्यो द्वौ द्वावञ्जली दद्यात्। सकृन्मन्त्राऽपरस्तूष्णीम्।

ततो न्यञ्चितसव्यजानुर्दक्षिणामुखः प्राचीनावीती पितृतीर्थेन दक्षिणाग्रेष्वास्तृतेषु कुशेषु मूलभागे कृष्णतिलमिश्रितं जलमादाय तेन वैशम्पायनाद्येकपत्न्यन्तेभ्यस्त्रीनञ्जलीन्दद्यात्। सकृन्मन्त्रा द्विस्तूष्णीम्।

ततः पित्रादीन्सर्वान्पितॄंस्तर्पयेत्। तत्र सापत्नमातृव्यतिरिक्तकोद्दिष्टस्त्रीभ्य एकैक उदकाञ्जलिर्देयः। असंभवे सव्यान्वारब्धदक्षिणहस्तेन वा तर्पणम्। शुचिभूमिपात्रालाभे जलतीरे उपविश्योक्तप्रकारेण जल एव तर्पयेत्। तत्र दक्षिणहस्तेन प्रतितर्पणमक्षतानां तण्डुलानां यवानां च ग्रहणम्। सव्यहस्तेन तिलानाम्। जीवत्पितृकेण स्वैरपत्न्यन्तानामेव तर्पणं कार्यम्। तर्पणे श्वेता एव तिला ग्राह्याः। प्रकोष्ठपर्यन्तमेव तस्य प्राचीनावीतम्। ततो ये पितृवंश्या मातृवंश्या ये चान्येऽस्मत्त उदकमर्हन्ति तांस्तर्पयामीति प्रथमपात्रस्थानाञ्जलिं दत्त्वा

सूत्रं सलोमकं यच्च ततः कृत्वा विलोमकम् ।
सावित्र्या दशकृत्वोऽद्भिर्मन्त्रिताभिस्तदुक्षयेत् ॥
विच्छिन्नं चाप्यधो यातं भुक्त्वा निर्मितमुत्सृजेत् ।
पृष्ठदेशे च नाभ्यां च धृतं यद्विन्दते कटिम् ॥
तद्धार्यमुपवीतं स्यान्नातिलम्बं न चोच्छ्रितम् ।
स्तनादूर्ध्वमधो नाभेर्धार्यं स्यान्न कथंचन ॥
ब्रह्मचारिण एकं स्यात् स्नातस्य द्वे बहूनि वा ।
गृहस्थेन तु द्वे धार्ये श्रौते स्मार्ते च कर्मणि ॥
यज्ञोपवीतं परमामिमं मन्त्रमुदीरयन् ।
तृतीयमुत्तरीयं स्याद्वस्त्राभावे तदिष्यते ॥
ब्रह्मसूत्रे तु सव्येंऽसे स्थिते यज्ञोपवीतिता ।
प्राचीनावीतिताऽसव्ये कण्ठस्थे तु निवीतिता ॥
दत्तं यज्ञोपवीतार्थे त्रिवृत्सूत्रं तु कर्मसु ।
कुशमुञ्जबालतन्तुरज्जुर्वा सर्वकर्मसु ॥ इति स्मृत्यर्थसारे ।

प्रकारान्तरं च ब्राह्मणेन तदन्यकृता वा कृतं सूत्रमानीय भूरिति प्रथमां षण्णवतीं मिनोति । भुव इति द्वितीयां सुवरिति तृतीयां मीत्वा पलाशपत्रे संस्थाप्याऽऽपो हि ष्ठेति तिसृभिर्हिरण्यवर्णा इति चतसृभिः पवमानः सुवर्जन इत्यनुवाकेन चाभिषिच्य गायत्र्या वाऽभिषिच्य वामहस्ते कृत्वा त्रिः संताड्य भूरग्निं च पृथिवीं च मां च । त्रींश्च लोकान्संवत्सरं च । प्रजापतिस्त्वा सादयतु । तया देवतयाऽङ्गिरस्वद्ध्रुवा सीद । भुवो वायुं चान्तरिक्षं च मां च । त्रींश्च लोकान्सं० । स्वरादित्यं च दिवं च मां च । त्रींश्च० । भूर्भुवः स्वश्चन्द्रमसं च दिशश्च मां च । त्रींश्च० सीदेत्यन्तेन चतुर्थेन ग्रन्थिं कृत्वा, ओंकारं प्रथमतन्तौ न्यसामि । अग्निं द्वि० । नागांस्तृ० । सोमं च० । पितॄन्पञ्च० । प्रजापतिं षष्ठ० । वायुं स० । सूर्यमष्ट० । विश्वान्देवान्नव० । इति नवसु तन्तुषु यथायथमावाह्य चतुर्थ्यन्तैर्नाममन्त्रैः संपूज्य देवस्य त्वेत्यादायोद्वयं तमसस्परीत्यादित्याय दर्शयित्वा यज्ञोपवीतमिति धारयेत् । इति बौधायनोक्तयज्ञोपवीतनिर्माणविधिः ॥

इति यज्ञोपवीतविधिः ।

मूर्ध्नि सलोमकं यच्च ततः कृत्वा विलोमकम्।
सावित्र्या दशकृत्वोऽद्भिर्मन्त्रिताभिस्तदुक्षयेत्॥
विच्छिन्नं चाप्यधो यातं भुक्त्वा निर्मितमुत्सृजेत्।
पृष्ठदेशे च नाभ्यां च धृतं यद्विन्दते कटिम्॥
तद्धार्यमुपवीतं स्यान्नातिलम्बं न चोच्छ्रितम्।
स्तनादूर्ध्वमधो नाभेर्धार्यं स्यान्न कथंचन॥
ब्रह्मचारिण एकं स्यात् स्नातस्य द्वे बहूनि वा।
गृहस्थेन तु द्वे धार्ये श्रौते स्मार्ते च कर्मणि॥
यज्ञोपवीतं परमामिर्यं मन्त्रमुदीरयन्।
तृतीयमुत्तरीयं स्याद्वस्त्राभावे तदिष्यते॥
ब्रह्मसूत्रे तु सव्येंऽसे स्थिते यज्ञोपवीतिता।
प्राचीनावीतिताऽसव्ये कण्ठस्थे तु निवीतिता॥
इत्थं यज्ञोपवीतार्थे त्रिवृत्सूत्रं तु कर्मसु।
कुशमुञ्जवालतन्तुरज्जुर्वा सर्वकर्मसु॥ इति स्मृत्यर्थसारे।

प्रकारान्तरं च ब्राह्मणेन तत्कन्यकया वा कृतं सूत्रमानीय भूरिति प्रथमां षण्णवतीं मिनोति। भुव इति द्वितीयां सुवरिति तृतीयां मीत्वा पलाशपत्रे संस्थाप्याऽऽपो हि ष्ठेति तिसृभिर्हिरण्यवर्णा इति चतसृभिः पवमानः सुवर्जन इत्यनुवाकेन चाभिषिच्य गायत्र्या वाऽभिषिच्य वामहस्ते कृत्वा त्रिः संताड्य भूरग्निं च पृथिवीं च मां च। त्रींश्च लोकान्संवत्सरं च। प्रजापतिस्त्वा सादयतु। तया देवतयाऽङ्गिरस्वद्ध्रुवा सीद। भुवो वायुं चान्तरिक्षं च मां च। त्रींश्च लोकान्सं०। स्वरादित्यं च दिवं च मां च। त्रींश्च०। भूर्भुवः स्वश्चन्द्रमसं च दिशश्च मां च। त्रींश्च० सीदेत्यन्तेन चतुर्थेन ग्रन्थिं कृत्वा, ओंकारं प्रथमतन्तौ न्यसामि। अग्निं द्वि०। नागांस्तृ०। सोमं च०। पितॄन्पञ्च०। प्रजापतिं षष्ठ०। वायुं स०। सूर्यमष्ट०। विश्वान्देवान्नव०। इति नवसु तन्तुषु यथायथमावाह्य चतुर्थ्यन्तैर्नाममन्त्रैः संपूज्य देवस्य त्वेत्यादिना गन्धद्वयं तपःसत्परीत्यादित्याय दर्शयित्वा यज्ञोपवीतविधिना धारयेत्। इति बौधायनोक्तयज्ञोपवीतनिर्माणविधिः॥

इति यज्ञोपवीतविधिः।

अथ कुशाद्याहरणादिविधिः ।

कुशाः काशा यवा दूर्वा उशीरास्तु सकुन्दकाः ।
गोधूमा व्रीहयो मौञ्जा दश दर्भाः सवल्वजाः ॥
नभोमासस्य दर्शे तु शुचिर्दर्भान्समाहरेत् ।
अयातयामास्ते दर्भा नियोज्याः स्युः पुनः पुनः ॥
मासे नभस्यमावास्या तस्या दर्भोच्चयो मतः ॥ इति च ।

अथ कुशच्छेदनमन्त्रः—

शुचौ देशे शुचिर्भूत्वा स्थित्वा पूर्वोत्तरामुखः ।
ओंकारेण तु मन्त्रेण कुशान्स्पृष्ट्वा द्विजोत्तमः ॥
विरिञ्चिना सहोत्पन्न परमेष्ठिनिसर्गज ।
नुद सर्वाणि पापानि कुश स्वस्तिकरो भव ॥
इमं मन्त्रं समुच्चार्य ततः पूर्वोत्तरामुखः ।
हुंफट्कारेण दर्भास्तु सकृच्छित्त्वा समुद्धरेत् ॥ इति ।
अमूला देवकार्येषु प्रयोज्यास्तु जपादिषु ।
समूलाः कुशाः शस्ता दैवे पित्र्ये च कर्मणि ॥
अनन्तर्गर्भिणी साग्रौ यदि ताभ्यां पवित्रकम् ।
चतुर्भिश्चाभिचारे स्यात्त्रिभिरेवेति केचन ॥
सपवित्रः सदर्भो वा कर्माङ्गाचमनं चरेत् ।
नोच्छिष्टं तद्भवेत्तस्य भुक्तशेषं तु वर्जयेत् ॥
यैः कृतः पिण्डनिर्वापः श्राद्धं वा पितृतर्पणम् ।
विण्मूत्रादिषु ये दर्भास्तेषां त्यागोऽभिधीयते ॥
नीवीमध्ये स्थितास्त्याज्या यज्ञभूमौ स्थितास्तथा ।
न ब्रह्मग्रन्थिनाऽऽचामेन्न दूर्वाभिः कदाचन ॥
स्नाने दाने तथा होमे स्वाध्याये पितृतर्पणे ।
सपवित्रौ सदर्भौ वा करौ कुर्वीत नान्यथा ॥

अथ पवित्रलक्षणम्—

अनन्तर्गर्भितं साग्रं कौशं द्विदलमेव च ।
प्रादेशमात्रं विज्ञेयं पवित्रं यत्र कुत्रचित् ॥

द्व्यङ्गुलं मूलतः कुर्याद्ग्रन्थिरेकाङ्गुलस्तथा ।
चतुरङ्गुलमग्रं स्यात्पवित्रस्य च लक्षणम् ॥

पवित्रे दर्भसंख्या—

चतुर्भिर्दर्भपिञ्जूलैर्द्वाभ्यां वाऽथ पवित्रकम् ।
दैवे कर्मणि कर्तव्यं पित्र्ये तत्त्रिभिरीरितम् ॥
दर्भाभावे स्वर्णरूप्यताम्ररत्नैः क्रिया सदा ॥ इति ।

अथ कुशविधिः—

समित्पुष्पकुशादीनि ब्राह्मणः स्वयमाहरेत् ।
शूद्रानीतैः क्रयक्रीतैः कर्म कुर्वन्पतत्यधः ॥

आदिशब्देन दूर्वादि । लक्षपुष्पार्चनादौ तु क्रयक्रीतनिषेधो न ।
लक्षपुष्पार्चनादौ तु क्रयक्रीतमपीष्यते । इत्युक्तेः ।

अत्राप्यादिशब्देन दूर्वादि ।

अहन्यहनि कर्मार्थं कुशच्छेदः प्रशस्यते ।
कुशा धृता ये पूर्वत्र योग्याः स्युर्नोत्तरत्र ते ॥
कुशान्काशांश्च पुष्पाणि गवार्थं च तृणादिकम् ।
निषिद्धे चापि गृह्णीयादमावास्याहनि द्विजः ॥
मासि मास्याहृता दर्भास्तन्मास्येव चोदिताः ॥ इति ।

इति कुशाद्याहरणादिविधिः ॥

---

इति श्रीमद्र्यंबकोपाभिधेयकाशीनाथसूरिसूनुभास्करसूरिकृतां दीक्षितकृतसंस्काररत्नग्रन्थमूलिका लघ्वी माधमिस्न् संस्कारपद्धतिः समाप्ता ।

# अथ भट्टगोपीनाथदीक्षितविरचितश्रौतस्मार्तैतदुभयपाञ्जि-कोपयुक्तोपोद्घातगतविषयानुक्रमप्रदर्शकपत्रम् ।

ॐ तत्सद्ब्रह्मणे नमः ।

# भट्टगोपीनाथदीक्षितविरचितः—

## उपोद्घातः ।

वात्सल्यात्पितरौ कपोलयुगुलं स्वस्याऽऽगतौ चुम्बितुं
दृष्ट्वाऽऽकुञ्चितमास्यपद्ममलं संपत्स्मितं सत्वरम् ।
अन्योन्यं शिवयोस्ततः सुवदने युक्ते हभूतां तयो-
रित्थं येन विनोदितौ स भगवान्बालो गजास्योऽवतु ॥ १ ॥
विद्यामहागणपतिं देवं व्याडीश्वरं तथा ।
योगेश्वरीं च वाग्देवीं लक्ष्मीनारायणौ रविम् ॥ २ ॥
सत्याषाढं मुनिश्रेष्ठं जातरूपशिरोरुहम् ।
गुरूंश्च मातापितरौ नत्वेदानीं यथामति ॥ ३ ॥
ओकोपाह्वेन कृतुकाद्गोपीनाथेन धीमता ।
सत्याषाढेन रचितं सूत्रं व्याख्यायते मया ॥ ४ ॥
सूत्राब्धिं मया तर्तुमारब्धं मन्दशक्तिना ।
तत्रावलम्बो मम तु पारे गन्तुं गुरुस्मृतिः ॥ ५ ॥

तत्र प्रश्नषट्कं पूर्वव्याख्यातृभिर्व्याख्यातम् । अथाग्निष्टोमादिकर्मप्रतिपादकं सप्तमप्रश्नादिकं सूत्रमव्याख्यातत्वादिदानीं व्याख्यायते । तत्राऽऽदौ तावद्याज्ञिकानां संप्रदायबोधार्थं श्रौतपरिभाषाः स्मार्तगार्ह्यपदार्थाश्च संक्षेपेण प्रदर्श्यन्ते । अत्रापि तावदादौ सर्वकर्मणां वक्ष्यमाणानामग्निष्टोमादीनां पूर्वेषां दर्शपूर्णमासादीनां च धर्मरूपत्वाद्धर्मलक्षणमुच्यते । तत्र धर्मं प्रशंसति श्रुतिः—धर्मो विश्वस्य जगतः प्रतिष्ठा लोके धर्मिष्ठं प्रजा उपसर्पन्ति धर्मेण पापमपनुदति धर्मे सर्वं प्रतिष्ठितं तस्माद्धर्मं परमं वदन्तीति । स्मृतिरपि—

धर्मः संसेवितः शुद्धस्त्रायते महतो भयात् ।
श्रुत्वाऽपि सन्तस्तुष्यन्ति दूराद्धर्मपरं नरम् ॥
धर्मः कृतः श्रुतो दृष्टः कथितश्चिन्तितोऽपि वा ।
तथाऽनुमोदितोऽपीह पुनाति दशपूरुषम् ॥
तस्माद्धर्मो यथाशक्ति यत्नात्सेव्यो नृभिर्बुधैः ॥ इति ।

धर्मसूत्रेऽपि धर्मं प्रकृत्य—एवं वर्तमान उभौ लोकावभिजयतीति । एवं वर्तमानो धर्मेण वर्तमान उभौ पृथिवीद्युलोकौ । वैखानसभरद्वाजावपि—

धर्मेण वर्तमानः परमां गतिमाप्नोतीति । धर्मे प्रमाणं चोदनेत्याह जैमिनिः—चोदनालक्षणोऽर्थो धर्म इति । चोदना विधिर्लक्षणं प्रमाणं यस्य तादृशोऽर्थो बलवदनिष्टाननुबन्धीष्टसाधनं यः स धर्म इत्यर्थः । अर्थो धर्म इत्येतावत्युक्ते भोजनादावतिव्याप्तिरतश्चोदनालक्षण इति । भोजनादेरिष्टसाधनत्वं तु न विधिप्रमाणकमिति तद्वारणम् । श्येनस्यापि विधिप्रमाणकत्वात्तद्वारणायार्थ इति । श्येनस्तु हिंसाजनकतया बलवदनिष्टनरकानुबन्धीति तद्वारणम् । यत्रानिष्टजनकत्वं श्येनफलस्य वैरिमरणानुकूलखड्गघातादिरूपहिंसात्मकाभिचारस्यैवेति तस्यैव विधिबोधितानिष्टसाधनत्वादधर्मत्वं श्येनस्य तु धर्मत्वमेवेति विभाव्यते तदाऽर्थशब्देनेष्टसाधनत्वमात्रं ग्राह्यम् । उक्तं च वार्तिके—

यदि येनेष्टसिद्धिः स्यादनिष्टाननुबन्धिना ।
तस्य धर्मत्वमिष्येत ततः श्येनादिवर्जनम् ॥
यदा तु चोदनागम्यः कार्याकार्यानपेक्षया ।
धर्मः प्रीतिनिमित्तं स्यात्तदा श्येनेऽपि धर्मता ॥ इति ।

एवंविधश्च क्रियारूपो यागहोमादिर्द्रव्यरूपो गोदोहनादिर्गुणरूपो नीचैस्त्वादिश्चेति द्रष्टव्यम् । गोदोहनादि द्रव्यं यागादिः क्रिया नीचैस्त्वादिर्गुणश्च फलसाधनत्वाद्धर्मशब्देनोच्यते न स्वरूपादिना इति श्रेयस्करभाष्ये स्थितम् । तेषां फलसाधनत्वेन रूपेण न प्रत्यक्षादिविषयत्वं किंतु चोदनैव तत्र प्रमाणमित्यर्थः । तथा च भाट्टाः—

द्रव्यक्रियागुणादीनां धर्मत्वं स्थापयिष्यते ।
तेषामैन्द्रियकत्वेऽपि न ताद्रूप्येण धर्मता ॥
श्रेयःसाधनता ह्येषां नित्यं वेदात्प्रतीयते ।
ताद्रूप्येणैव धर्मत्वं तस्मान्नेन्द्रियगोचरः ॥ इति ।

चोदना तु विधिः । तद्वाची लिङादिः । स च प्रवर्तनारूपविधिबोधकः । प्रवर्तना चेष्टसाधन एवेत्यर्थाद्यागादेः श्रेयःसाधनत्वप्रमा भवतीत्येवंरीत्या धर्मप्रमाणत्वं बोध्यम् । एवं च विधिबोधितबलवदनिष्टाननुबन्धीष्टसाधनताकत्वं विधिबोधितेष्टसाधनताकत्वं वा धर्मत्वमिति लक्षणं सिद्धम् । अत्र विधिबोधितत्वं फलस्वर्गनरकादावपीत्युत्तरं दलम् । विषभक्षणादावनिष्टानिष्टसाधनताकत्वेऽपि तस्य विधिबोधितत्वाभावादाद्यं दलम् । ज्योतिष्टोमप्रकरणभक्षणादीनां हीष्टानिष्टसाधनता विधिबोधितेति

तत्र लक्षणसमन्वयः । चोदनालक्षणोऽर्थो धर्म इति धर्मलक्षणं कुर्वता जैमिनिनाऽचोदनालक्षणोऽनर्थोऽधर्म इत्यधर्मलक्षणमपि सूचितम् । अतः धर्मश्चानिष्टसाधनम् । एवं चाविहितनिषिद्धक्रियात्वमित्यधर्मलक्षणं पर्यवस्यति । इष्टानिष्टप्रापके कर्मणी धर्माधर्माविस्युक्तं मत्स्यपुराणे—

धर्मेति धारणे धातुर्महत्त्वे चैव पठ्यते ।
धारणेन महत्त्वेन धर्म एव निरुच्यते ॥
तेनेष्टप्रापको धर्म आचार्यैरुपदिश्यते ।
इतरोऽनिष्टफलदस्त्वाचार्यैरुपदिश्यते ॥ इति ।

संवर्तस्मृतिरपि—

देशे देशे य आचारः पारम्पर्यक्रमागतः ।
आम्नायैरविरुद्धश्च स धर्मः परिकीर्तितः ॥ इति ।

याज्ञवल्क्योऽपि—

इज्याचारदमाहिंसादानस्वाध्यायकर्मणाम् ।
अयं तु परमो धर्मो यद्योगेनाऽऽत्मदर्शनम् ॥ इति ।

स्मृत्यन्तरे—

धृतिः क्षमा दमोऽस्तेयं शौचमिन्द्रियनिग्रहः ।
ह्रीर्विद्या सत्यमक्रोधो दशकं धर्मलक्षणम् ॥ इति ।

यद्यपि धर्मः क्षरति कीर्तनादधर्मो वर्धते गोपनादित्यादौ वैशेषिकतन्त्रे च विहितक्रियाजन्यादृष्टे धर्मशब्दप्रयोगो निषिद्धक्रियाजन्यादृष्टे ऽधर्मशब्दप्रयोगस्तथाऽपि—

धर्मः स्वनुष्ठितः पुंसां विष्वक्सेनकथासु च ।
अधर्ममनुतिष्ठंश्च नरके पतति ध्रुवम् ॥

आचारः परमो धर्मः, अधर्मः स्यादनाचार इत्यादौ तज्जनकविहितनिषिद्धक्रियादावपि तच्छब्दप्रयोगात्तद्वाचकत्वमपि ।

अयं तु परमो धर्मो यद्योगेनाऽऽत्मदर्शनम् ।

इत्यादौ तु ज्ञानेऽपि धर्मशब्दप्रयोगो दृश्यते । धर्मसूत्रे—न धर्माधर्मौ चरत आवां स्व इति न देवगन्धर्वा न पितर इत्याचक्षतेऽयं धर्मोऽयमधर्म इति यत्त्वार्याः प्रशंसन्ति स धर्मो यद्गर्हन्ते सोऽधर्मः सर्वजनपदेष्वेकान्तस-

माहितमाचार्याणां वृत्तं सम्यग्विनीतानां वृद्धानामात्मवतामलोलुपानामदाम्भिकानां वृत्तसादृश्यं भजेतेति। अन्यच्च धर्मसूत्रे—नेमं लौकिकमर्थं पुरस्कृत्य धर्मांश्चरेत्तथाऽऽम्रे फलार्थे निर्मिते छायागन्धावनूत्पद्येते एवं धर्मं चर्यमाणमर्था अनूत्पद्यन्त इति। बौधायनः—उपदिष्टो धर्मः प्रतिवेदं तस्यानुव्याख्यास्यामः स्मार्तो द्वितीयस्तृतीयः शिष्टागम इति। उपदेशो वेदस्तेन कर्तव्यतया विहितो वैतानिक इति यावत्। प्रतिवेदं प्रतिशाखम्। नहि वेदे समुदायरूपेणैककारक एव प्रयोगो विधीयते किंतु नाना। प्रयोगः प्रतिरूपमेवैक एव। तत्र एकशाखया स्वेन व्याख्यातस्तस्यानु तमनु तं प्रातिशाख्यमर्थमन्विष्यर्थः। तच्छाखीयं स्मार्तं तच्छाखीयं शिष्टाचारलक्षणं धर्मं व्याख्यास्यामः। तावपि नियतौ प्रतिशाखमित्यर्थः। मनुरपि—

> विद्वद्भिः सेवितः सद्भिर्नित्यमद्वेषरागिभिः।
> हृदयेनाभ्यनुज्ञातो यो धर्मस्तं व्यवस्यथ॥
> अनाम्नातेषु वेदेषु कथं स्यादिति चेद्भवेत्।
> यं शिष्टा ब्राह्मणा ब्रूयुः स धर्मः स्यादशङ्कितः॥ इति।

बौधायनोऽपि—

> धर्मशास्त्ररथारूढा वेदखड्गधरा द्विजाः।
> क्रीडार्थमपि यद्ब्रूयुः स धर्मः स्यादशङ्कितः॥ इति।

विश्वामित्रोऽपि—

> यमार्याः क्रियमाणं हि शंसन्त्यागमवेदिनः।
> स धर्मो यं विगर्हन्ति तमधर्मं प्रचक्षते॥
> वेदोक्तः प्रथमो धर्मो धर्मशास्त्रेषु चापरः।
> शिष्टाचारः स्मृतो यस्तु त्रिविधं धर्मलक्षणम्॥ इति।

आपस्तम्बः—

> यं शिष्टा ब्राह्मणा ब्रूयुः स धर्मो मानुषः स्मृतः।
> आर्षं धर्मोपदेशं च वेदशास्त्राविरोधिना।
> यस्तर्केणानुसंधत्ते स धर्मं वेत्ति तत्त्वतः॥ इति।

नारदपुराणे—

> पुराणन्यायमीमांसाधर्मशास्त्रार्थचिन्तकाः।

सदाचाररता ये च तदुक्तं यत्नतश्चरेत् ॥ इति ।

अनुपादेयवचना उक्ता हेमाद्रौ स्कान्दे—

वेदाधिगमहीना ये शौचाचारविवर्जिताः ।
नास्तिकाः पण्डितंमन्यास्तेषां वाक्यं विवर्जयेत् ॥
येषां विश्वेश्वरे विष्णौ शिवे भक्तिर्न विद्यते ।
न तेषां वचनं ग्राह्यं धर्मनिर्णयसिद्धये ॥ इति ।

पाद्मेऽपि—

वाचं व्याकुर्वते नैव मीमांसन्ते न चाध्वरम् ।
शुष्कतर्करता ये वै तेषां वाक्यं विवर्जयेत् ॥ इति ।

कालिकापुराणेऽपि—

वेदे च वेदनायां च कर्मण्यपि च वैदिके ।
श्रद्धा नास्ति च येषां वै तेषां वाक्यं विवर्जयेत् ॥ इति ।

वेदना वेदार्थज्ञानम् । याज्ञवल्क्यः—

श्रुतिः स्मृतिः सदाचारः स्वस्य च प्रियमात्मनः ।
सम्यक्संकल्पजः कामो धर्ममूलमिदं स्मृतम् ॥ इति ।

यथा भोजनव्यतिरेकेण जलं नैव पेयमित्येवमादिः कश्चन सम्यक्सं-कल्पजः सम्यङ्निश्चयो नियमोऽपि धर्ममूलं भवति विध्यभावेऽपीत्यर्थः ।

धर्मसूत्रे—

दृष्टो धर्मव्यतिक्रमः साहसं च पूर्वेषां तेषां तेजोविशेषेण प्रत्यवायो न विद्यते तदन्वीक्ष्य प्रयुञ्जानः सीदत्यवर इति ।

याज्ञवल्क्यः—

कर्मणा मनसा वाचा यत्नाद्धर्मं समाचरेत् ।
अस्वर्ग्यं लोकविद्विष्टं धर्म्यमप्याचरेन्न तु ॥ इति ।

स्मृत्यन्तरे—

अनुष्ठितं तु यद्देवैर्मुनिभिर्यदनुष्ठितम् ।
नानुष्ठेयं मनुष्यैस्तु तदुक्तं कर्म चाऽऽचरेत् ॥ इति ।

अभ्युदयो धर्मस्य साक्षात्फलं निःश्रेयसं तु तत्त्वज्ञानद्वारा । तथा च स्मृतिः—

धर्मात्सुखं च ज्ञानं च ज्ञानान्मोक्षोऽभिजायते । इति ।

स च धर्मः स्वस्ववर्णाश्रमोचित एव कर्तव्यः । तथा च स्मृतिः—

वर्णाश्रमोचितं धर्मं कुर्वन्नेव सुखी भवेत् ॥ इति ।

भगवद्गीतास्वपि—

श्रेयान्स्वधर्मो विगुणः परधर्मात्स्वनुष्ठितात् ।
स्वधर्मे निधनं श्रेयः परधर्मो भयावहः ॥ इति ।

गणेशगीतास्वपि—

श्रस्नोऽगुणो निजो धर्मः साङ्गादन्यस्य धर्मतः ।
निजे तस्मिन्मृतिः श्रेष्ठापरत्र भयदः परः ॥ इति ।

अगुण इति पदच्छेदः । मनुः—

वेदोदितं स्वकं कर्म नित्यं कुर्यादतन्द्रितः ।
तद्धि कुर्वन्यथाशक्ति प्राप्नोति परमां गतिम् ॥ इति ।

कूर्मपुराणेऽपि—

यथाशक्ति चरेत्कर्म निन्दितानि विवर्जयेत् ।
विधूय मोहकलिलं लब्ध्वा योगमनुत्तमम् ।
गृहस्थो मुच्यते बन्धात्तत्र कार्या विचारणा ॥ इति ।

तत्र साधारणधर्मानाह बृहस्पतिः—

दया क्षमाऽनसूया च शौचानायासमङ्गलम् ।
अकार्पण्यास्पृहे चैव धर्माः साधारणास्त्विमे ॥ इति ।

विष्णुरपि—

क्षमा सत्यं दमः शौचं शम इन्द्रियनिग्रहः ।
अहिंसा गुरुशुश्रूषा तीर्थानुसरणं दया ॥
आत्मज्ञानमलोभित्वं देवतानां च पूजनम् ।
अकार्पण्यानसूये च धर्मः सामान्य उच्यते ॥ इति ।

असाधारणधर्मानाह बृहस्पतिः--

स्वाध्यायोऽध्यापनं चापि यजनं याजनं तथा।
दानं प्रतिग्रहश्चापि षट् कर्माण्यग्रजन्मनः॥
इज्याध्ययनदानं च प्रजानां प्रतिपालनम्।
शस्त्रास्त्रधारणं सेवा कर्माणि क्षत्रियस्य तु॥
स्वाध्यायो यजनं दानं पशूनां पालनं तथा।
कुसीदकृषिकर्माणि वैश्यस्यैतानि सप्त वै॥
शौचं ब्राह्मणशुश्रूषा सत्यमक्रोध एव च।
शूद्रकर्म तथा मन्त्रो नमस्कारोऽस्य चोदितः॥ इति।

भगवद्गीतास्वपि--

ब्राह्मणक्षत्रियविशां शूद्राणां च परंतप।
कर्माणि प्रविभक्तानि स्वभावप्रभवैर्गुणैः॥
शमो दमस्तपः शौचं क्षान्तिरार्जवमेव च।
ज्ञानं विज्ञानमास्तिक्यं ब्रह्मकर्म स्वभावजम्॥
शौर्यं तेजो धृतिर्दाक्ष्यं युद्धे चाप्यपलायनम्।
दानमीश्वरभावश्च क्षत्रकर्म स्वभावजम्॥
कृषिगोरक्षवाणिज्यं वैश्यकर्म स्वभावजम्।
परिचर्यात्मकं कर्म शूद्रस्यापि स्वभावजम्॥ इति।

गणेशगीतास्वपि--

ब्रह्मक्षत्रियविट्शूद्राः स्वभावाद्भिन्नकर्मिणः।
तानि तेषां तु कर्माणि संक्षेपाद्वेऽधुना वदे॥
अन्तर्बाह्येन्द्रियाणां च वश्यत्वमृजुता क्षमा।
नानातपांसि शौचं च द्विविधं ज्ञानमात्मनः॥
वेदशास्त्रपुराणानां स्मृतीनां ज्ञानमेव च।
अनुष्ठानं तदर्थानां कर्म ब्राह्ममुदाहृतम्॥
दार्ढ्यं शौर्यं च दाक्ष्यं च युद्धे पृष्ठाप्रदर्शनम्।
शरण्यपालनं दानं धृतितेजःस्वभावजम्॥
प्रभुता मनऔन्नत्यं सुनीतिर्लोकपालनम्।
पञ्चकर्माधिकारित्वं क्षात्रं कर्म समीरितम्॥
नानावस्तुक्रयो भूमेः कर्षणं रक्षणं गवाम्।

त्रिधा धर्माधिकारित्वं वैश्यानां कर्म ईदृशम् ॥
दानं द्विजानां शुश्रूषा सर्वदा शिवसेवनम् ।
एतादृशं नरव्याघ्र कर्म शौद्रमुदीरितम् ॥
स्वस्वकर्मरता एते मयदर्थाखिलकारिणः ।
मत्प्रसादात्स्थिरं स्थानं यान्ति ते परमं नृप ॥ इति ।

आत्मनो द्विविधं ज्ञानं शास्त्राचार्योपदेशजं परोक्षं ध्यानजमपरोक्षं च । दार्ढ्यं शस्त्रास्त्रविद्यायां दृढतरोऽभ्यासः । शौर्यं शस्त्रास्त्रप्रयोगसामर्थ्यम् । दाक्ष्यं परप्रयुक्तशस्त्रास्त्राणां निवारणे निपातेऽपि व्यामोहराहित्यम् । एतत्त्रितयफलं युद्धे पृष्ठाप्रदर्शनमपराङ्मुखत्वम् । तदेतदेकं क्षात्त्रं कर्म । शरण्यपालनं शरण्यः शरणागतस्तस्य पालनं शिबिदिलीपादिवत्स्वशरीरार्पणेनापि संरक्षणम् । इदं द्वितीयं कर्म । दानं कर्णदधीचिवत्स्वाङ्गसमर्पणेनातिथिमुख्यपरार्थसंपादनमिदं तृतीयं कर्म । धृतितेजःस्वभावजमित्येतत्पूर्वेषां त्रयाणामपि विशेषणम् । पूर्वोक्तं त्रयमपि स्वभावजेनानागन्तुकेन तेजसा सामर्थ्येन च विना न भवतीत्यतस्तेषामिदं युक्तं विशेषणं धृतितेजःस्वभावजमिति । वेदाध्ययनं तदर्थानुष्ठानं चास्य त्रैवर्णिकत्वादेव प्राप्तमतो नोक्तं दानेन वा तदुपलक्षणीयम् । प्रभुतेरप्यस्यैव सदाख्यानं मनोऽभ्रत्वमिति चतुर्थमिदम् । एवं सुनीतिरित्यस्यैव व्याख्यानं लोकपालनमिति पञ्चममिदम् । एतानि चतुर्णां वर्णानां कर्माणि । नरव्याघ्र नृपेत्येतद्द्वयं वरेण्यराज्ञः संबोधनम् । धर्मसूत्रे— अशूद्राणामदुष्टकर्मणामुपनयनं वेदाध्ययनमग्न्याधेयं फलवन्ति च कर्माणि शुश्रूषा शूद्रस्येतरेषां वर्णानामिति । स्मृत्यन्तरे—

सदाचारपरो विप्रः शुभं यत्र विराजते ।
सदाचारविहीनस्तु नरकायोपकल्पते ॥ इति ।
आचारः परमो धर्मो नृणां श्रेयस्करो महान् ।
इह लोके परा कीर्तिः परत्र परमं सुखम् ॥ इति ।

विष्णुपुराणे—

नास्त्याचारात्परं पुण्यं नास्त्याचारात्परं तपः ।
नास्त्याचारात्परं दानं नास्त्याचारात्परं सुखम् ॥ इति ।

पराशरः—

आचारः परमो धर्म आचारः परमं तपः ।

आचारः परमं ज्ञानमाचारात्किं न साध्यते ॥ इति ।

भविष्योत्तरे भगवद्वचनमपि—

आचारात्प्राप्यते श्रेष्ठ्यमाचारात्कर्म लभ्यते ।
कर्मणा जायते ज्ञानं ज्ञानान्मोक्षस्त्ववाप्यते ।
तस्मात्कर्मणि युक्तात्मा शश्वत्त्वं च भवार्जुन ॥ इति ।

सदाचाराकरणे प्रत्यवायोऽपि तत्रैव—

यस्त्वाचारविहीनोऽपि विद्वान्वेदपरायणः ।
सर्वधर्मबहिष्कार्यो यथा शूद्रस्तथैव सः ॥ इति ।

पराशरः—

आचारः परमो धर्मः श्रुत्युक्तः स्मार्त एव च ।
तस्मादस्मिन्समायुक्तो नित्यं स्यादात्मवान्द्विजः ।
आचाररहितो विप्रो न वेदफलमश्नुते ॥ इति ।

स्मृत्यन्तरे लौकिकाचारोऽप्यावश्यकत्वेनोक्तः किं पुनः शास्त्रीयः—

यद्यपि स्यात्स्वयं ब्रह्मा त्रैलोक्याकर्षणक्षमः ।
तथाऽपि लौकिकाचारं मनसाऽपि न लङ्घयेत् ॥ इति ।

भारत आनुशासनिके पर्वणि—

दुराचारो हि पुरुषो नेहाऽऽयुर्विन्दते महत् ।
त्रसन्ति यस्माद्भूतानि तथा परिभवन्ति च ॥
तस्मात्कुर्यादिहाऽऽचारं यदीच्छेद्भूतिमात्मनः ।
अपि पापशरीरस्य आचारो हन्त्यलक्षणम् ॥
आचारलक्षणो धर्मः सन्तश्चाऽऽचारलक्षणाः ।
साधूनां च यथा वृत्तमेतदाचारलक्षणम् ॥ इति ।

स्मृत्यन्तरे—

सामयाचारिका धर्मा देशजातिकुलोद्भवाः ।
ग्रामाचाराः परिग्राह्या ये च शास्त्राविरोधिनः ।
युगधर्माः परिग्राह्याः सर्वत्रैव यथोचितम् ॥ इति ।

धर्मसूत्रे—अथातः सामयाचारिकान्धर्मान्व्याख्यास्यामो धर्मज्ञः समयः प्रमाणं वेदा इति । समयाचारमाप्ताः सामयाचारिकाः । समयशब्दः स्वयमेव व्याचष्टे धर्मज्ञः समय इति । धर्मज्ञा ऋषयः । ननु तत्र किं प्रमाणमत आह—प्रमाणं वेदा इति । अस्मिन्नर्थे वेदाः प्रमाणमित्यर्थः । सदाचारलक्षणं हारीत आह—

साधवः क्षीणदोषाः स्युः सच्छब्दः साधुवाचकः ।
तेषामाचरणं यत्तु सदाचारः स उच्यते ॥ इति ।

मनुरपि—

यस्मिन्देशे य आचारः पारम्पर्यक्रमागतः ।
वर्णानां सान्तरालानां स सदाचार उच्यते ॥ इति ।

सान्तरालाः सानुलोमाः । सतां लक्षणं बोधायनोऽप्याह—शिष्टाः खलु विगतमत्सरा निरहंकाराः कुम्भीधान्या अलोलुपा दम्भदर्पलोभमोहविवर्जिता इति । आरण्यके पर्वणि—

अक्रुध्यन्तोऽनसूयन्तो निरहंकारमत्सराः ।
ऋजवः शमसंपन्नाः शिष्टा एते प्रकीर्तिताः ॥
त्रैविद्यवृद्धाः शुचयो वृत्तवन्तो यशस्विनः ।
गुरुशुश्रूषवो दान्ताः शिष्टा एते प्रकीर्तिताः ॥ इति ।

एतदर्थकं धर्मसूत्रमपि पूर्वमेवोदाहृतं सर्वजनपदेष्वेकान्तसमाहितमित्यादिकम् । सतामपि रुक्षवाऽऽचारः स्वीकार्यः । अत एव गुरुणोपदिश्यते—यान्यनवद्यानि कर्माणि तानि सेवितव्यानि नो इतराणि । यान्यस्माकं सुचरितानि तानि त्वयोपास्यानि नो इतराणीति । अनवद्यानि अनिन्द्यानि । शिष्टा यत्कर्म कुर्वन्ति यच्च तेषां वृत्तं तदेवानुसरणीयम् । तथा चोपनिषदि—अथ यदि ते कर्मविचिकित्सा वा वृत्तविचिकित्सा वा स्यात् । ये तत्र ब्राह्मणाः संमर्शिनो युक्ता आयुक्ता अलूक्षा धर्मकामाः स्युः, यथा ते तत्र वर्तेरंस्तथा तत्र वर्तेथा इत्यादि श्रूयते । यदि कदाचित्ते तव श्रौते स्मार्ते वा कर्मणि वृत्ते वाऽऽचारलक्षणे विचिकित्सा संशयः स्यात्तद्वेधे तत्र तस्मिन्देशे काले वा ब्राह्मणास्तत्र कर्मादौ युक्ता इति व्यवहितेन संबन्धः कर्तव्यः । संमर्शिनो

विचारक्षमाः । युक्ता अभियुक्ताः कर्माणि वृत्ते वा । आयुक्ता अपरप्रयुक्ता अलूक्षा अरूक्षा अक्रूरमतयः । धर्मकामा अदृष्टार्थिनोऽकामहता इत्येतत्ते यथा तत्र तस्मिन्धर्मणि वृत्ते वा वर्तेरंस्तथा त्वमपि वर्तेथा इति विद्यारण्यश्रीपादैर्व्याख्यातेयं श्रुतिः । उपनिषत्पदनिरुक्तिराचार्यैर्दर्शिता—

उपनीयेममात्मानं ब्रह्मापास्तद्वयं ततः ।
निहन्त्यविद्यां तज्जां च तस्मादुपनिषन्मता ॥ इति ।

स्मृत्यन्तरे—

नित्यं नैमित्तिकं काम्यमिति कर्म त्रिधा भवेत् ।
नित्यनैमित्तिके एव मोक्षार्थी कर्मणी चरेत् ॥ इति ।

गीतासु भगवताऽपि मुमुक्षोरर्जुनस्य फलासक्तिर्निषिद्धा—

योगस्थः कुरु कर्माणि सङ्गं त्यक्त्वा धनंजय ।
सिद्ध्यसिद्ध्योः समो भूत्वा समत्वं योग उच्यते ॥
कर्मण्येवाधिकारस्ते मा फलेषु कदाचन । इति ।

योगलक्षणं पतञ्जलिराह—योगश्चित्तवृत्तिनिरोध इति । संप्रज्ञातासंप्रज्ञातभेदेन द्विविधो योगः । संप्रज्ञातोऽपि वितर्कानुगतो विचारानुगत आनन्दानुगतोऽस्मितानुगत इति चतुर्विधः । तत्रापि वितर्कः सवितर्कनिर्वितर्कभेदेन द्विविधः । एवं विचारोऽपि सविचारनिर्विचारभेदेन । असंप्रज्ञातोऽपि द्विविधः । भवप्रत्यय उपायप्रत्ययश्चेति । भवप्रत्ययो द्विविधः । विदेहानामन्यः प्रकृतिलयानामन्य । उपायप्रत्ययोऽपि त्रिविधः । स्वतोऽव्युत्थानः परतोऽव्युत्थान उभयतोऽप्यव्युत्थान इति बहुविधो योगः । एतेषां लक्षणानि पतञ्जलिसूत्रेभ्य एव ज्ञेयानि । योगस्य ज्ञानोपायत्वं सूचितं भगवता हिरण्यगर्भेण—अथ तद्दर्शनाभ्युपायो योग इति । व्यतिरेकमुखेन दक्षेणापि दर्शितम्—

स्वसंवेद्यं हि तद्ब्रह्म कुमारी स्त्रीसुखं यथा ।
अयोगी नैव जानाति जात्यन्धो हि यथा घटम् ॥ इति ।

योग्येव जानातीति तृतीयपादार्थः । स्मृतिप्रकाशे—

नियमैश्च यमैर्युक्ता आचारेण च संयुताः ।
कर्माणि ये प्रकुर्वन्ति तेषां सिद्धिस्तु शाश्वती ॥ इति ।

यमनियमानां फलान्याह पतञ्जलिः—अहिंसाप्रतिष्ठायां तत्संनिधौ वैरत्याग इत्यादिना । यमनियमलक्षणमपि स एवाऽऽह—अहिंसासत्यास्तेयब्रह्मचर्यापरिग्रहा यमाः । शौचसंतोषतपःस्वाध्यायेश्वरप्रणिधानानि नियमा इति । नित्ये कर्मणि शुद्धिः प्रधानं फलं तूपसर्जनम् । अत एव भुज्यमानेऽपि फले तदनित्यत्वसातिशयत्वादिदोषदर्शनरूपो विवेको न प्रतिबध्यते । तदुक्तं वार्तिककृता—

> नित्येषु शुद्धेः प्राधान्याद्भोगोऽप्यप्रतिबन्धकः ।
> भोगं भद्गुरमीक्षन्ते बुद्धिशुद्ध्यनुरोधतः ॥ इति ।

फलाभिसंधिराहित्येन कर्मकरण एव ज्ञानं ज्ञाने सत्येवामृतत्वप्राप्तिर्नान्यथा । तथा च श्रुतिः—न कर्मणा न प्रजया धनेन त्यागेनैकेऽमृतत्वमानशुरिति । वेदान्तेषु गीतासु चाप्येवमेव प्रतिपादितम् । नित्यनैमित्तिककर्मभ्यामुपात्तदुरितपरिहारोऽपि जायत इत्याहुर्भट्टपादाः—

> नित्यं नैमित्तिकं कुर्यात्प्रत्यवायभयात्सतः ।
> मोक्षार्थी न प्रवर्तेत तत्र काम्ये कदाचन ॥ इति ।

पापक्षयार्थत्वमपि कर्मणा धर्मेण पापमपनुदतीति श्रुतेः । कर्मणा वेदनेच्छासंपादकत्वं वाजसनेयिनः समामनन्ति—तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेनेति । अनाशकेनेति पदच्छेदः । विहितत्वमात्रबुद्ध्या क्रियमाणत्वेन कर्मणा संस्कारकत्वमपि । तथा च गौतमः—यस्यैते चत्वारिंशत्संस्कारा अष्टावात्मगुणाश्च स ब्रह्मणः सायुज्यं सलोकतां चाऽऽप्नोतीति । ते च संस्कारास्तेनैवोक्ताः—गर्भाधानपुंसवनसीमन्तोन्नयनजातकर्मनामकरणान्नप्राशनचौलोपनयनानि चत्वारि वेदव्रतानि स्नानं सहधर्मचारिणीसंयोगः पञ्च महायज्ञा अष्टका पार्वणः श्राद्धं श्रावण्याग्रहायणी चैत्र्याश्वयुजीति सप्त पाकयज्ञसंस्था अन्याधानमग्निहोत्रं दर्शपूर्णमासौ चातुर्मास्यान्याग्रयणेष्टिर्निरूढपशुबन्धः सौत्रामणीति सप्त हविर्यज्ञसंस्था अग्निष्टोमोऽत्यग्निष्टोम उक्थ्यः षोडशी वाजपेयोऽतिरात्रोऽप्तोर्याम इति सप्त सोमयज्ञसंस्था अष्टावात्मगुणा दया सर्वभूतेषु क्षान्तिरनसूया शौचमनायासो माङ्गल्यमकार्पण्यमस्पृहेति । स्नानं समावर्तनम् । सहधर्मचारिणीसंयोगो विवाहः । पार्वणः पार्वणस्थालीपाकः । श्राद्धं मासिकसंज्ञकम् । अमावास्यायामपराह्णे मासिक-

मिति गृह्यविहितम् तस्यैव संस्थात्वात् । तच्च संस्काररत्नमालायामस्माभिः साधितमस्ति ततो द्रष्टव्यम् । श्रवणी पौर्णमासी तत्र कर्तव्यं श्रवणाकर्म । आग्रहायणी मार्गशीर्षी तत्र कर्तव्यं प्रत्यवरोहणम् । चैत्री तत्र कर्तव्यः शूलगवः । आश्वयुजी आश्विनी पौर्णमासी तत्र कर्तव्यमाश्वयुजीकर्म । औपासनहोमस्य संस्थात्वं वैखानसमते । तथा च तत्सूत्रम्—स्थालीपाकोऽष्टका अमाश्राद्धमौपासनहोमः श्रावण्याग्रहायणी चैत्रीति सप्त पाकयज्ञसंस्था वैश्वदेवमेके चैत्रीस्थाने समामनन्तीति । पाकशब्दः प्रशस्तवाच्यल्पवाची च । पाकयज्ञाः प्रशस्तयज्ञा अल्पयज्ञाश्च । तद्रूपाः संस्थाः पाकयज्ञसंस्था इत्यर्थः । प्रशंसायां पाकशब्दस्तं पाकेन मनसेति मन्त्रे दृष्टः । अल्पत्वे योऽस्मत्पाकतर इत्यस्मिन्मन्त्रे । यदि पाकशब्दः पक्तौ वर्तेत तदा सत्याषाढसूत्रानुसारिभिराश्वयुज्याः सूत्रकृता सत्याषाढेनाविहितत्वेन गृह्यान्तरोक्तस्यौपासनहोमस्यैव तत्स्थाने स्वीकार्यत्वेन तत्र च पाकाभावेन पाकयज्ञसंस्थात्वं शास्त्रान्तरोक्तमनुपपन्नं स्यादिति । बह्वृचानामपीदमेवाभिमतम् । अन्यथाऽऽज्यहोमेषु पाकयज्ञानामेतत्तन्त्रमितिवचनासिद्धं तन्त्रत्वं न स्यादिति । यस्मादेतेषु संस्कारा आम्नातास्तेभ्य ब्राह्मणमेवाऽऽयतेऽतः प्रशस्ता अल्पतन्त्रत्वादल्पाश्च । के पुनस्ते संस्कारा उपनयनाद्याः । तस्मात्सर्वेषां पाकयज्ञत्वमिति । पाकयज्ञपदस्य रूढत्वं आह्णायनद्राह्यायणाभ्यामुक्तं पाकयज्ञा एकाग्नौ यज्ञा इति । बोधायनोऽपि कर्मान्तसूत्र आह—कियत्यः पाकयज्ञसंस्थाः कियत्यो हविर्यज्ञसंस्थाः कियत्यः सोमसंस्था इति । हुतः प्रहुत आहुतः शूलगवो बलिहरणं प्रत्यवरोहणमष्टका अपरिमिता वा इत्येके ब्रुवते यत्र किंचान्यत्र विहार क्रियते सर्वास्ताः पाकयज्ञसंस्था इति । विहारादन्यत्रावरिशेषेण यत्किंचित्क्रियते तदन्येत्यर्थः । आश्वलायनोऽपि—त्रयः पाकयज्ञा हुता अग्नौ हूयमाना अनग्नौ प्रहुता ब्राह्मणभोजनं ब्रह्मणि हुतमिति । तदन्तर्गतः पशुर्निरूढस्तस्य बन्धो बन्धनं यस्मिंस्तदाख्यं कर्म । सुत्रामदेवताकं सुराग्रहसाध्यं कर्म सौत्रामणी । हविः पुरोडाशचरुसांनाय्यपयआदि । तत्साध्या ये यज्ञास्ते हविर्यज्ञास्तद्रूपा इत्यर्थः यद्यप्यग्न्याधाने हविःसाध्यता नास्ति तथाऽपि पवमानेष्ट्यादिगतहविःसंबन्धमादाय हविर्यज्ञत्वम् । यद्यपि सौत्रामणीद्वयमस्ति तथाऽपि चरकाम्नाया एव सौत्रामण्याः संस्थात्वं न कौकिल्या इति निष्प्रपञ्चप्रपञ्चाख्याने साधि-

स्याप: । बोधायनस्तु-अग्न्याधेयमग्निहोत्रं दर्शपूर्णमासावाग्रयणं चातुर्मास्यानि दाक्षायणयज्ञः कौण्डपायिन्य इति सौत्रामणीषु हैके ब्रुवत इत्येवं सप्त हविर्यज्ञसंस्था आह । अत्रायं विशेषः—यदा दाक्षायणयज्ञस्य संस्थात्वं तदा निरूढपशुबन्धस्य न । एवं कौण्डपायिनीनां संस्थात्वे सौत्रामण्या न । केषाचिदाचार्याणां मते पिण्डपितृयज्ञस्य संस्थात्वम् । अस्मिन्मत आग्रयणेष्टेः संस्थात्वं न । लाट्यायनद्राह्यायणयोर्मते पाकयज्ञस्य संस्थात्वम् । अस्मिन्मत आग्रयणेष्टेः संस्थात्वम् । अन्यथा हविर्यज्ञस्याष्टत्वापत्तेः । न चेष्टापत्तिः । मतभेदेन सप्तत्वोपपत्तावष्टत्वकल्पनाया अनुचितत्वेनेष्टापत्तेर्वक्तुमशक्यत्वात् । एवं सोमसंस्थाविषये विकल्पोऽवशिष्टाः सर्वमते समानाः । पाकयज्ञसंस्थास्वपि शूलगवस्य संस्थात्वं गौतममते । केषाचिन्मते वैश्वदेवस्य संस्थात्वम् । अत्रापि यदा शूलगवस्य संस्थात्वं तदा वैश्वदेवस्य न संस्थात्वं यदा वैश्वदेवस्य तदा न शूलगवस्य । वैश्वदेवमेके चतुर्थीस्थाने समामनन्तीति वैखानससूत्रात् तथाऽन्यतरस्य संस्थात्वं तथा हविर्यज्ञेष्वपि द्रष्टव्यम् । शाखान्तरे श्रूयते चैकविंशतिरेवं संस्थाः । यो ह्येकविंशतिसंस्था न करोति स पापीयान्भवतीति । न चोक्तश्रुतिषु पापश्रवणेन नित्यत्वाभावात्संस्थात्वानुपपत्तिः । अग्निष्टोमे तु यजते । वसन्ते यजेतेति श्रुत्या नित्यत्वमपि तेन च संस्थान्तरमुपलक्ष्यत इति वाच्यम् । अकरणे दोषो येषां तेऽकर्मण्युपालम्भवन्ति नित्यानीति सूत्रेण बोधायनोक्तसंस्थात्वफलेन चैतेषां नित्यत्वस्यापि सिद्धत्वात् । अपि च संस्थानामकरणे शाखान्तरे दोषश्रवणम् । यो ह्येकविंशतिसंस्था न करोति स पापीयान्भवतीति । पापीयस्त्वादेव निन्दाऽपि । निन्दितस्य त्यागःपतनम् । आह च याज्ञवल्क्यः—

विहितस्याननुष्ठानान्निन्दितस्य च सेवनात् ।
अनिग्रहाच्चेन्द्रियाणां नरः पतनमृच्छति ॥ इति ।

ननु नित्यानां संस्थारूपत्वादिधर्माणां संस्थानां च को भेदः, सप्तत्वादिनियमस्य स्वरूपस्यापि तुल्यत्वादिति चेन्मैवम् । भेदसिद्ध्यर्थं संस्थानामन्यकल्पेषु चैतान्यस्वीकारात् । एवं च विजातीयफलजनकत्वमेव संस्थात्वमित्येवं सत्ये सिद्धे भेदोऽपि सिध्यति । संस्थाशब्दो रूढो योगरूढो वा । तत्पक्षे यथा सिद्धान्तः स्वर्गलोके विजातीयं फलं

भोक्तुं यया क्रियया सा संस्थेति। अथवा विजातीयप्रत्ययवायोत्पत्तिप्रतिबन्धकत्वं संस्थात्वमिति लक्षणं भेदकं द्रष्टव्यम्। सोमगुणकं कर्म सोम इत्युच्यते। तत्साध्या यज्ञाः सोमयज्ञास्तद्रूपाः संस्था इत्यर्थः। सप्त पाकयज्ञसंस्था इत्यत्र पाकयज्ञसंस्थाः सप्तेत्यन्वयः। पाकयज्ञसंस्था उद्दिश्य सप्तत्वं विधीयते। तच्च सप्तत्वं लक्षणया सप्तान्यतमत्वम्। उद्देश्यविधेयभावस्थले विधेयतावच्छेदकरूपेण विधेयस्योद्देश्यतावच्छेदकव्यापकत्वबोधो व्युत्पत्तिसिद्धः। उद्देश्यतावच्छेदकं पाकयज्ञसंस्थात्वम्। विधेयतावच्छेदकं सप्तान्यतमत्वम्। तथा च पाकयज्ञसंस्थाः सप्तान्यतमा इत्यर्थे आधिक्यव्यवच्छेदसिद्धिः। एतेन सिद्धसिद्धिव्याघातो निरस्तः। न्यूनत्वव्यवच्छेदस्तु सप्तत्वान्वयादेव लभ्यते। एवं हविर्यज्ञसंस्थासोमयज्ञसंस्थास्वपि द्रष्टव्यम्। विविदिषासंस्कारपक्षयोरवान्तरविशेषो विस्पष्टमुक्तो वार्तिकसारे—

जाता विविदिषाऽवश्यं संपाद्याखिलसाधनम्।
सफलं जनयेदाशु बुभुक्षादिर्यथा तथा॥
प्रतिबन्धकपाप्मानं नाशयेच्चित्तसंस्कृतिः।
साधनानि तु बोधस्य संपाद्यानि तु यत्नतः॥
वर्णाश्रमादिशास्त्रेण परितोऽकरणे भयम्।
पश्यन्करोति यत्कर्म तत्संस्कारकमुच्यते॥
तमेवमिति वाक्येन मेरितो बोधवाञ्छया।
अन्तर्यामिण्यर्पयेद्यस्तस्याद्विविदिषाकरम्॥
कर्मणाऽपि न लोकः स्यादित्येवं नित्यकर्मणाम्।
फलं श्रुतं तथाऽप्येतैर्वेदनेच्छैव तच्छ्रुतेः॥
निरयेषु शुद्धेः प्राधान्याद्भोगोऽप्यप्रतिबन्धकः।
भोगं भङ्गुरमीक्षन्ते बुद्धिशुद्ध्यनुरोधतः॥
काम्येष्वपि मुमुक्षुश्चेत्फलं देवे समर्पयेत्।
एतद्भगवता प्रोक्तं कर्मबन्धनिवृत्तये॥
यत्करोषि यदश्नासि यज्जुहोषि ददासि यत्।
यत्तपस्यसि कौन्तेय तत्कुरुष्व मदर्पणम्॥
शुभाशुभफलैरेवं मोक्ष्यसे कर्मबन्धनैः।
कर्मण्येवाधिकारस्ते मा फलेषु कदाचन॥ इति।

साक्षान्मोक्षसाधनं तु ज्ञानमेव । तमेव विदित्वाऽति मृत्युमेति नान्यः पन्था विद्यतेऽयनायेति श्रुतेः । तमात्मानं विदित्वा ज्ञात्वा मृत्युमतिक्रम्येति । आत्मवेदनादन्योऽयनाय मोक्षाय मुक्तय इति यावत्पन्था मार्गो न विद्यत इत्यर्थः । आत्मशब्देन ब्रह्मग्रहणम् ।

यच्चाऽऽप्नोति यदादत्ते यच्चात्ति विषयानिह ।
यच्चास्य संततो भावस्तस्मादात्मेति कीर्त्यते ॥

इति वचनात् । अत्र मुख्या मुक्तिः कैवल्याख्या । सालोक्यसारूप्यसायुज्यसामीप्याख्याश्चतस्रो मुक्तयस्तु कर्मफलभूता अनित्याः सातिशया अमुख्याः । तत्र कैवल्याख्या मुक्तिर्ज्ञानजन्यैव । कैवल्यं स्वरूपप्रतिष्ठा वा चितिशक्तेरितियोगशास्त्रान्तिमसूत्रप्रतिपादितस्वरूपो मोक्षः कैवल्यशब्देनोच्यते व्याख्यातमेतत्सूत्रं भोजराजेन—चितिशक्तेर्वृत्तिसारूप्यनिवृत्तौ स्वरूपमात्रेणावस्थानं कैवल्यमुच्यत इति । सालोक्यसारूप्यसायुज्याख्यमुक्तित्रये प्रमाणं तु—एतासामेव देवतानाꣳ सायुज्यꣳ सार्ष्टिꣳ समानलोकतामाप्नोतीति तैत्तिरीयश्रुतिः । सामीप्यमुक्तौ तु तपःश्रद्धे ये ह्युपवसन्त्यरण्ये शान्ता विद्वांसो भैक्ष्यचर्यां चरन्तः । सूर्यद्वारेण ते विरजाः प्रयान्ति यत्रामृतः स पुरुषो ह्यव्ययात्मेति मुण्डकश्रुतिः प्रमाणम् । सूर्यद्वारेणेत्यस्य सूर्योपलक्षितेनार्चिरादिमार्गेण गत्वा यत्र सत्यलोके सोऽमृतः पुरुषो ब्रह्मा वर्तते तत्र यान्तीत्यर्थात् । एता एव कर्मफलभूताः । अत एव पदशब्देन शास्त्रान्तरे निर्दिष्टाः । या तु ज्ञानफलं निरतिशयानन्दलक्षणा कैवल्याख्या मुक्तिस्तस्यामपि तैत्तिरीयश्रुतिरेव प्रमाणम्—य एवं विद्वानुदगयने प्रमीयते देवानामेव महिमानं गत्वाऽऽदित्यस्य सायुज्यं गच्छत्यथ यो दक्षिणे प्रमीयते पितृणामेव महिमानं गत्वा चन्द्रमसः सायुज्यꣳ सलोकतामाप्नोत्येतौ वै सूर्याचन्द्रमसोर्महिमानौ ब्राह्मणो विद्वानभिजयति तस्माद्ब्रह्मणो महिमानमाप्नोति तस्माद्ब्रह्मणो महिमानमिति । अत्र केवलकर्मणा चन्द्रलोकप्राप्तिः । य एवं विद्वानिति विद्वच्छब्दाभिहितप्रतीकाद्युपासनात्रयवतो देवानां महिमानमित्यनेन सालोक्यादित्रयम् । ब्राह्मणो विद्वानित्यनेन ब्रह्मज्ञानवांस्तु एतौ कर्मोपासनप्राप्यौ सूर्यचन्द्रयोर्महिमानौ सातिशयत्वादिदोषवन्तौ बुद्ध्वाऽभिजयति अभितः पराकरोति । तस्मादधिकं निरतिशयं ब्रह्मणो महिमानमाप्नोतीत्यर्थः । प्रतीकाद्युपासनया सालोक्यम् । अन्तरेण

प्रतीके स्वात्मनः पृथक्त्वेनैश्वर्यविशेषविशिष्टतया देवताया उपासकस्य च रूपतः साम्यं सारूप्यम्। इयमेव सार्ष्टितेत्युच्यते। समानर्धितेत्यर्थः। सगुणं देवतारूपम्। अहंग्रहेणोपास्यदेवतातादात्म्यं प्राप्नोति तदिदं सायुज्यम्। ऊर्ध्वरेतसां स्वाश्रमोक्तधर्मानुष्ठानवतां सामीप्यमिति चतसृणां स्वरूपं ज्ञेयम्। मन्मोक्षप्रदं ज्ञानं सैव विद्येत्युच्यते। तथा च गौडपादीयसूत्रम्—सैव विद्येति। चैतन्यस्वरूपा शक्तिरिति पूर्वसूत्रोपस्थितायाः शक्तेस्तत्पदेन परामर्शः। कर्मभिश्चतस्रो वासना मैत्रीकरुणामुदितोपेक्षाख्या जायन्ते ताभिश्चित्तशुद्धिरिति। तथा च योगसूत्रम्—मैत्रीकरुणामुदितोपेक्षाणां सुखदुःखपुण्यापुण्यविषयाणां भावनातश्चित्तप्रसादनमिति। इह सुखादिशब्दैस्तद्वन्तः प्रतिपाद्यन्त इति राजमार्तण्डः। तत्र सुखविषया मैत्री सुखवत्सु। दुःखविषया करुणा दुःखिषु। पुण्यविषया मुदिता पुण्यवत्सु। पापविषयोपेक्षा पापिष्विति। एवं व्यवस्थितिर्विष्णुभागवते प्रसिद्धा। एतासां भावनातश्चित्तप्रसादनं चित्तशोधनं भवतीति द्रष्टव्यम्। ज्ञानद्वारा कर्मणां मोक्षसाधनत्वम्।

उभाभ्यामपि पक्षाभ्यां यथा खे पक्षिणां गतिः।
तथैव ज्ञानकर्मभ्यां प्राप्यते शाश्वती गतिः॥

इत्यत्र यद्यप्युभयोस्तुल्यत्वं प्रतीयते तथाऽपि तमेव विदित्वेति श्रुत्या ज्ञानातिरिक्तस्य साक्षान्मोक्षसाधनत्वनिरासेन कर्मणां परम्परया मोक्षसाधनत्वस्य वेदान्तादिशास्त्रसिद्धान्तसंमतत्वेनात्र सामान्यतः साधनत्वमादाय तुल्यतया वक्तुं शक्यत्वेन तमेवमिति मुख्यश्रुतिविरुद्धत्वेन च साक्षान्मोक्षसाधनत्वाकल्पनात्। अत एव काशीमरणान्मुक्तिरित्यत्र ज्ञानद्वारैवेति सिद्धान्तितं शास्त्रकारैः। कर्मभिर्निःश्रेयसमित्येतत्सूत्रे निःश्रेयसशब्दार्थो निश्चितं श्रेयो निःश्रेयसं यदस्येष्टं तदाप्यत इति न तु मोक्ष आप्यत इति। अथवा कर्मभिर्ज्ञानद्वारा मोक्ष आप्यत इत्यर्थः। अन्यथा तमेव विदित्वेतिश्रुतिविरोधतादवस्थ्यापत्तेः। वार्तिके—

यद्यप्यत्र श्रुतेर्ज्ञानं सौन्दर्यावगमे सति।
ज्ञानेच्छा स्वयमेव स्यात्तथाऽपि श्रवणादिषु॥
प्रतिबन्धकपापस्य संक्षये कर्मभिः कृते।
माधुर्यं पित्तदुष्टस्येव जायते वेदनारुचेः॥
ऐहिकामुष्मिकत्वादिभेदोऽप्यूह्योऽनया दिशा॥ इति।

तत्र सामान्येनाधिकारिणं वर्णयन्ति न्यायविदः—अर्थी समर्थो विद्वाञ्शास्त्रापर्युदस्तस्तत्राधिकारीति। शास्त्रशब्दस्तदनुसारिमीमांसादिपरोऽपि। वेदपरोऽपि क्वचित्। शास्त्रयोनित्वादिति सौत्रादृग्वेदादिशास्त्रं यस्य शास्त्रमित्यादिशाङ्करभाष्यव्यवहारात्। उक्तं च भामत्याम्—

प्रवृत्तिर्वा निवृत्तिर्वा नित्येन कृतकेन वा।
पुंसां येनोपदिश्येत तच्छास्त्रमभिधीयते॥ इति।

तृतीयप्रश्ने सूत्रे तेषामेव ब्राह्मणविहिता यज्ञा येषु कार्त्स्न्यमविप्रतिषिद्धं यथा द्रव्यवत्ता शरीरकार्त्स्न्यं वेति। येषु त्रैवर्णिकेषु यज्ञस्य साङ्गस्य कार्त्स्न्यं विद्वत्ताऽर्थवत्ता तथा शरीरकार्त्स्न्यं शरीरदार्ढ्यं सवर्णस्त्रीपरिग्रह ऋत्विगादिसंपत्तिर्दंपत्यता तेषामेव यज्ञा न तु परमुखेण पूष्ठाऽपि कर्तारो भवन्ति। तथाऽथ संपादयिष्यामीति। अत एव

यस्य त्रैवार्षिकं धान्यं स तु सोमं पिबेद्द्विजः।

इत्यादि स्मर्यते। तथा स्त्री नासवर्णा मन्त्रपाठमात्रवती सत्यप्यधिकृता। तेषां त्रैवर्णिकानां स्त्री पुंश्च पुमान्स्त्रियेति सूत्राभ्यामेकशेषेण तेषा त्रैवर्णिक्यः स्त्रियोऽपि गृह्यन्ते। एवकारः फलकामिनामपि शूद्राणामग्न्याधानादिप्राप्तलिङ्गनिरासार्थः। ब्राह्मणेन विहिता ब्राह्मणविहिताः। ब्राह्मणेनेति स्मार्तधर्माणां शूद्रेऽपि प्राप्तिनिवारणार्थम्। ब्राह्मणेन विहिताः श्रौता एव स्फुटयितुं यज्ञा इत्युक्तम्। यज्ञशब्देन श्रौतत्वेनोपलक्षिता अग्न्याधानादयो गृह्यन्ते। तथा शरीरकार्त्स्न्यं येषामङ्गानुष्ठानमविप्रतिषिद्धं न विरुद्धं तेषामेव ते यज्ञा नान्येषामन्धपङ्गुमूकबधिराश्रोत्रियाकिंचनानामाज्यावेक्षणविष्णुक्रमणमन्त्रोच्चारणसंवारनयाजमानदक्षिणासु यज्ञाङ्गेषु विरोधोऽन्यथा स्यात्। अनधीतस्यापि त्रिवृदग्निष्टुत्प्रायश्चित्तत्वेन विहितः साधुत्वस्याग्न्याधानादिकर्मसाद्गुण्याय, ततो भवति तस्याधिकारो नित्यनैमित्तिकेषु। अकिंचनस्यापि नित्येष्विष्टिपशुचातुर्मास्येषु सोमेषु चान्नाद्यार्थमात्रस्य दक्षिणात्वस्य विधास्यमानत्वान्नातिप्रसङ्गः। तथा मृतभार्यस्य दारकर्माशक्तस्य स्वार्थमाधानं कल्पसूत्रे वक्ष्यते तस्य विना भार्ययाऽपि। कल्पसूत्र एव पक्षे पत्नीं निर्मन्थ्येन दहन्तीति तत्राप्यग्नयः स्वार्थमेव स्थापनीयाः। अभार्येणापि नित्यं कार्यं त्रैवर्णिकानामेवाधिकार इति। विहितप्रतिषिद्धयोर्नित्यनैमित्तिकयोर्यथाक्रममकरणे करणे च दोष उक्तो याज्ञवल्क्येन—

विहितस्याननुष्ठानान्निन्दितस्य च सेवनात् ।
अनिग्रहाच्चेन्द्रियाणां नरः पतनमृच्छति ॥ इति ।

आधानसूत्रे— कर्मभिर्निःश्रेयसं तानि शब्दलक्षणानि धार्यन्ते वैदिकानां शब्दानां स्मृतिग्रहणानि लौकिकानि कर्मणाऽभ्युदयोऽकर्मण्यप्रत्यवायो नियतानां त्वकर्मणि दोषो येषां लोकेऽकर्मण्युपालम्भस्तानि नियतानीति । निःश्रेयसमित्यत्राचक्षत इति सूत्रेण कर्मधारयेऽकारान्तता । तानि कर्माणि शब्दो निरपेक्षा विधिप्रत्ययश्रुतिर्लक्षणं प्रमाणं येषां तानि । विधिर्हि विधेयकर्मणि फलसाधनतां विना न पर्यवस्यतीति भावः । तानि निःश्रेयससाधनानि धार्यन्तेऽवधार्यन्ते । कुतो यतः शब्दा विविदिषन्तीत्यादयो विविदिषाद्युत्पत्तिद्वारा निःश्रेयससाधनत्वे प्रमाणानि । कर्मणामप्रामाण्येऽपि निःश्रेयससाधनप्रमाणोपकारकत्वान्निःश्रेयससाधनानीत्यवधार्यन्त इति भावः । वैदिकानां शब्दानां स्मृतिग्रहणानि लौकिकानीत्यत्र तानि शब्दलक्षणानि धार्यन्त इत्यनुवर्तते । लौकिकान्यपि कर्माणि तानि तादृशनिःश्रेयससाधनानि शब्दलक्षणानि धार्यन्त इत्यन्वयः । ननु तथा लौकिकेषु श्रुत्यभाव इत्युक्ते तत्राऽऽह— वैदिकानामित्यादि । मन्त्रब्राह्मणरूपस्य वेदस्यैकदेशभूताः केचित्क्वचिन्मन्त्रा एव क्वचिद्विधय एव क्वचिन्नोभयं किंतु वैतानिककर्मप्रकरणगतार्थवादमन्त्रावयवा एव प्रसङ्गेन सिद्धार्थानुवादिनस्ते वैदिकाः शब्दास्तेषां सार्थानां या जायन्ते स्मृतयो मन्वादीनां सर्ववेददर्शिनां ताः स्मृतय एव ग्रहणानि प्रमाणानि येषां तानि तथा । तेषां कर्मणां कर्मणाऽनुष्ठानेनाभ्युदयः फलं प्राप्यते । येषां चाकर्मण्यननुष्ठाने च न प्रत्यवायः श्रूयते तान्यनियतानि तेषां त्वित्यर्थः । अश्रुतानुष्ठाननिमित्तानां कर्मणामनियमेनेच्छायामनुष्ठानम् । अनिच्छया नेति तान्यनियतानि तेषामकर्मण्यननुष्ठाने न प्रत्यवायो भवति । तस्मादवश्यं वाक्यैरेवाभ्युदयलक्षणं यत्र विहितं तत्र कर्मणाऽनुष्ठानेन भवेदित्यावेद्यत इति व्याख्यातृभिर्निष्कृष्टः सूत्रार्थो वर्णितः । येषां प्रागभावानां प्रतियोगिभूते कर्मणि निषिद्धक्रियारूपे दोषः प्रत्यवायापूर्वाणि तानि प्रागभावपरिपालनरूपाणि कर्माणि नियतानि नियमेनानुष्ठेयानि नियतफलानि च । येषां विहितानामकर्मणि कर्मणो विरुद्धे प्रागभावपरिपालनरूप उपालम्भो निन्दा लोके स्मृतिशिष्टरूपे तान्यपि नियमेन कर्तव्यानि नियतफलानीत्यर्थः । अन्यच्च तत्रैव— [illegible]ब्राह्मणराजन्ययोर्वैश्यस्य

च वेदाध्ययनं तन्नियतं तेषामेव ब्राह्मणाविहिता यज्ञा येषु कार्त्स्न्यमविप्रतिषिद्धं येषां च प्रकृतिलिङ्गानि यज्ञाः श्रूयन्ते नीन्दृणीते मन्त्रकृतो वृणीते यथर्षि मन्त्रकृतो वृणीत इति विज्ञायते गायत्र्या ब्राह्मणस्य परिदध्यात्त्रिष्टुभा राजन्यस्य जगत्या वैश्यस्येति तेषामग्निहोत्रं दर्शपूर्णमासौ च नियतौ सोमेज्या ब्राह्मणस्याऽऽधानादग्निहोत्रं दर्शपूर्णमासौ च नियताविति । तथा–तथाजीवपितुरिति । नियम्येत इत्याकृष्यते । यस्य त्रैवर्णिकस्यान्ययोर्वा योऽयं नियम उक्तः स तु तेषां मध्ये तथाजीवपितुरेव नान्यस्य नियमः । तथा नियताग्निहोत्रदर्शपूर्णमासकारिणौ जीवौ पितरौ यस्य स तथा । यदि पितरौ जीवतस्तर्हि ताभ्यामाधानादिक्रिये कृत एव पुत्रस्याधिकारो नान्यथा । तयोरकृताधानयोरन्यतरस्य मरणे सत्येवाधिकार इत्यर्थः । भरद्वाजः—न जीवपितुरग्न्याधाने विद्यत इत्येष विद्यत इत्यपरमिति । इदं च पितुरधिकारसत्त्वेऽपि द्रष्टव्यम् । सूत्रे तृतीयप्रश्ने उपक्रमादितरे नियम्येरन्निति । अग्निहोत्रदर्शपूर्णमासव्यतिरिक्तचातुर्मास्यादिनित्यपदार्था इतरशब्देन ग्राह्याः । कात्यायनः—अथातोऽधिकारः फलयुक्तानि कर्माणि सर्वेषामविशेषान्मनुष्याणां वाऽऽरम्भसामर्थ्यादङ्गहीनाश्रोत्रियषण्ढशूद्रवर्जं ब्राह्मणराजन्यवैश्यानां श्रुतेः स्त्री चाविशेषाद्दर्शनाच्चेति । द्रव्यसंपन्नत्वेन सोमयागः कार्यः । तथा च मनुः—

यस्य त्रैवार्षिकं वित्तं पर्याप्तं भृत्यवृत्तये ।
अधिकं वाऽपि यस्य स्यात्स सोमं पातुमर्हति ॥ इति ।

मत्स्यपुराणे–

अन्नहीनो दहेद्राष्ट्रं मन्त्रहीनस्तु ऋत्विजः ।
आत्मानं दक्षिणाहीनो नास्ति यज्ञसमो रिपुः ॥ इति ।

मनुः—

पुण्यान्यन्यानि कुर्वीत श्रद्दधानो जितेन्द्रियः ।
न त्वल्पदक्षिणैर्यज्ञैर्यजेतेह कथंचन ॥
इन्द्रियाणि यशः स्वर्गमायुः कीर्तिं प्रजाः पशून् ।
हन्त्यल्पदक्षिणो यज्ञस्तस्मान्नाल्पधनो यजेत् ॥
प्राक्सौमिकीः क्रियाः कुर्याद्यस्यान्नं वार्षिकं भवेत् ॥ इति ।

एतानि वचनानि च काम्यकर्मविषयाणि ।

यस्य नित्यानि लुप्तानि तथैवाऽऽगन्तुकानि च ।
विपश्चिरस्थोऽपि न स्वर्गं गच्छेत्तु पतितो भवेत् ॥
तस्मात्स्वाग्भिः फलैर्मूलैर्मधुनाऽन्यरसेन वा ।
नित्यं नित्यानि कुर्वीत न च नित्यानि लोपयेत् ॥

इति बोधायनेन नित्यानां सोमयागादीनां यथाशक्त्यनुष्ठान-बोधनात् ।

अग्निष्टोमादिकैर्यज्ञैर्यो यजत्यल्पदक्षिणैः ।
स नाऽऽप्नोति सति द्रव्ये फलं दोषं च गच्छति ॥ इति

स्मृत्यन्तरे द्रव्यसत्त्व एव स्वल्पदक्षिणानिषेधस्य स्पष्टतयोक्तत्वाच्च। तत्र सर्वाणि कर्माणीश्वरार्पणबुद्ध्यैव कर्तव्यानि । तथा च भगवद्गीतासु—

यत्करोषि यदश्नासि यज्जुहोषि ददासि यत् ।
यत्तपस्यसि कौन्तेय तत्कुरुष्व मदर्पणम् ॥ इति ।

यत्तपस्यसि राम त्वमिति पाद्मशिवगीतासु तृतीयपादपाठः ।

कुर्वीत सततं कर्मानाशोऽसङ्गो मदर्पणम् ।

इति गणेशगीतास्वप्युक्तम् ।

ब्रह्मपुराणेऽपि—

ब्रह्मण्याधाय कर्माणि निःसङ्गः कामवर्जितः ।
प्रसन्नेनैव मनसा कुर्वाणो याति तत्पदम् ॥ इति ।

ब्रह्मण्याधानं ब्रह्मार्पणमिति व्याख्यातारः । कामवर्जित इत्युक्त्या फलाभिसंधिराहित्यं प्रदश्यते । ब्रह्मार्पणशब्दार्थस्तत्रैव प्रदर्शितः—

ब्रह्मणा दीयते देयं ब्रह्मणा संप्रगृह्यते ।
ब्रह्मैव दीयते चेति ब्रह्मार्पणमिदं परम् ॥
नाहं कर्ता सर्वमेतद्ब्रह्मैव कुरुते तथा ।
एतद्ब्रह्मार्पणं प्रोक्तमृषिभिस्तत्त्वदर्शिभिः ॥
प्रीणातु भगवानीशः कर्मणाऽनेन शाश्वतः ।
करोति सततं बुद्ध्या ब्रह्मार्पणमिदं परम् ॥
यद्वा फलानां संन्यासं प्रकुर्यात्परमेश्वरे ।

कर्मणामेतदप्याहुर्ब्रह्मार्पणमनुत्तमम् ॥
कार्यमित्येव यत्कर्म नियतं सङ्गवर्जितम् ।
क्रियते विदुषा कार्यं तद्भवेदपि मोक्षदम् ॥
अथवा यदि कर्माणि कुर्यान्नित्यान्यपि द्विजः ।
अकृत्वा फलसंन्यासं बध्यते तत्फलेन तु ॥
तस्मात्सर्वप्रयत्नेन त्यक्त्वा तत्कर्मजं फलम् ।
अविद्वानपि कुर्वीत कर्मणाऽऽप्नोति तत्पदम् ॥ इति ।

ब्रह्मार्पणबुद्ध्या कर्मकरणे फलबाहुल्यमपि ।

तदुक्तं व्यासेन—

वासुदेवे मनो यस्य जपहोमार्चनादिषु ।
तस्यान्तरायो मैत्रेय देवेन्द्रत्वादिकं फलम् ॥ इति ।

तस्माच्चतुर्विधपुरुषार्थोऽपि परमेश्वरप्रीत्यैव भवतीति ज्ञेयम् । ज्ञानिना फलाभिसंधिराहित्येन कर्मसु कृतेष्वपि तानि कर्माणि ज्ञानिनं न लिम्पन्ति ।

तदुक्तं दृष्टान्तपहितं वेदान्तप्रदीपिकायाम्—

अज्ञं कर्माणि लिम्पन्ति तज्ज्ञं लिम्पन्ति तानि न ।
करे तु सज्जते तैलं जिह्वायां तु न सज्जते ॥ इति ।

ज्ञानिनोऽपि कर्मकर्तव्यता व्याससूत्रेऽप्युक्ता—विहितत्वाच्चाऽऽश्रमकर्मापीति । न केवलं निषिद्धकर्मवर्जनं किंतु वर्णाश्रमविहितकर्मकरणमपि ।

पश्यन्नात्मानं कुर्यात्कर्माविचारयन् ।
यदात्मनस्तु नियतमानन्दोत्कर्षमाप्नुयात् ॥

इति कौषीतकश्रुतौ विहितत्वात् । अपिशब्दो वर्णधर्मसमुच्चयार्थ इति सूत्रार्थः । सांख्यसूत्रमपि—स्वकर्मस्वाश्रमविहितकर्मानुष्ठानमिति । कर्मशब्देनात्र यमनियमयोर्ग्रहणम् । जितेन्द्रियत्वरूपः प्रत्याहारोऽपि सर्वाश्रमसाधारणतया कर्ममध्ये प्रवेशनीयः । तथा च पातञ्जलसूत्रे—ज्ञानसाधनतया प्रोक्तान्यष्टौ योगाङ्गान्यत्रापि लब्धानीति तत्त्वाध्यम् । यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधयोऽष्टावङ्गानीति पातञ्जलसूत्रं सांख्यसूत्रभाष्ये यत्प्रदर्शितं तदेतदिति द्रष्टव्यम् । योगस्येति शेषोऽत्र ज्ञेयोऽध्यात् । स्मृत्यन्तरे—

प्रधाने वैदिकं कर्म गुणभूतं तथेतरत्।
गुणनिष्ठः प्रधानं तु हित्वा गच्छत्यधोगतिम्॥
पतिते निष्कृतिर्दृष्टा क्रियाहीने न निष्कृतिः।
तस्मात्सर्वप्रयत्नेन क्रियायुक्तो भवेन्नरः॥ इति।

गुणेष्वेव निष्ठा यस्य सः। शङ्खः—

वेदप्रणिहितो धर्मो ह्यधर्मस्तद्विपर्ययः।
वेदो नारायणः साक्षात्स्वयंभूरिति शुश्रुम॥
यो वैदिकमनादृत्य कर्म स्मार्तेतिहासिकम्।
मोहात्समाचरेद्विप्रो न स पुण्येन युज्यते॥ इति।

पराशरः—

इदं चिकीर्षतां कर्म सामर्थ्यं प्रतिपाद्यते।
सहजागन्तुभेदेन द्विविधं सहजं पुनः॥
उत्साहौदार्यतारुण्यशरीरेन्द्रियपाटवैः।
आगन्तुकं द्रव्यसंपत्स्मृतिवाक्यैः प्रपञ्च्यते॥ इति।

मनुः—

षण्णां तु कर्मणामस्य त्रीणि कर्माणि जीविका।
याजनाध्यापने चैव विशुद्धाच्च प्रतिग्रहः॥ इति।

प्रतिग्रहे विशेषश्चतुर्विंशतिमते—

सीदंश्चेत्प्रतिगृह्णीयाद्ब्राह्मणेभ्यस्ततो नृपात्।
ततस्तु वैश्यशूद्रेभ्यः शङ्खस्य वचनं यथा॥ इति।

नारदोऽपि—

श्रेयान्प्रतिग्रहो राज्ञां नान्येषां ब्राह्मणादृते।
नैतयोरन्तरं किंचित्प्रजाधर्माभिरक्षणात्॥ इति।

राजप्रतिग्रहनिषेधास्तूच्छास्त्रवर्तिराजविषयाः।

यदाह मनुः—

यो राज्ञः प्रतिगृह्णीयाल्लुब्धस्योच्छास्त्रवर्तिनः।
स पर्यायेण यातीमान्नरकानेकविंशतिम्॥ इति।

यजनं त्रिविधं सात्त्विकं राजसं तामसं च—

अफलाकाङ्क्षिभिर्यज्ञो विधिदृष्टो य इज्यते ।
यष्टव्यमेवेति मनः समाधाय स सात्त्विकः ॥
अभिसंधाय तु फलं दम्भार्थमपि चैव यत् ।
इज्यते भरतश्रेष्ठ तं यज्ञं विद्धि राजसम् ॥
विधिहीनमसृष्टान्नं मन्त्रहीनमदक्षिणम् ।
श्रद्धाविरहितं यज्ञं तामसं परिचक्षते ॥ इति ।

यजनफलमुक्तं हारीतेन—

यज्ञेन लोका विमला विभान्ति यज्ञेन देवा अमृतत्वमाप्नुयुः ।
यज्ञेन पापैर्बहुभिर्विमुक्तः प्राप्नोति लोकान्परमस्य विष्णोः ॥
नास्त्ययज्ञस्य लोको वै नायज्ञो विन्दते शुभम् ।
अयज्ञो न च पूतात्मा नश्यति छिन्नपर्णवत् ॥ इति ।

भारते—

शुशुद्धैर्यजमानस्य ऋत्विग्भिश्च यथाविधि ।
शुद्धद्रव्योपकरणैर्यष्टव्यमिति निश्चयः ॥
तथा कृतेषु यज्ञेषु देवानां तोषणं भवेत् ।
श्रेष्ठः स्याद्देवसर्वेषु यज्वा यज्ञफलं लभेत् ॥
देवाः संतोषिता यज्ञैर्लोकान्संवर्धयन्त्युत ।
उभयोर्लोकयोर्देवि भूतिर्यज्ञैः प्रदृश्यते ।
तस्माद्यज्ञाद्दिवं याति पूर्वजैः सह मोदते ॥
नास्ति यज्ञसमं दानं नास्ति यज्ञसमो विधिः ।
सर्वधर्मसमुद्देशो देवि यज्ञे समाहितः ॥ इति ।

सर्वकर्माणि ज्ञात्वैव कर्तव्यानि । तथा च व्यासः—

ज्ञात्वा कर्माणि कुर्वीत विशिष्टं फलमश्नुते । इति ।

उद्गीथोपासनाप्रकरणे छान्दोग्योपनिषद्यपि—यदेव विद्यया करोति तदेव वीर्यवत्तरं भवतीति । ज्ञानजन्यं फलं स्वतन्त्रमेवेत्यपि तत्र तत्राऽऽम्नायते—य उ चैनमेवं वेदेति । ज्ञानरहितं कर्म निष्फलमित्याहाङ्गिराः—

साभिप्रायकृतं कर्म यत्किंचिज्ज्ञानवर्जितम् ।
क्रीडाकर्मेव बालानां तत्सर्वं निष्प्रयोजनम् ॥ इति ।

चतुर्विंशतिमतेऽपि—

हतं ज्ञानं क्रियाहीनं हता अज्ञानिनः क्रियाः ।
अपश्यन्नगतिर्बन्धः पश्यन्नपि च पङ्गुलः ॥ इति ।

मनुरपि—

विधिदृष्टं तु यत्कर्म करोत्यविधिना तु यः ।
फलं न किंचिदाप्नोति क्लेशमात्रं हि तस्य तत् ॥ इति ।

ज्ञानाभावेऽपि श्रद्धा चेन्नातीव व्यर्थं भवति । तस्या अप्यभावे तु व्यर्थमेव । तथा च व्यासः—

ज्ञानेन श्रद्धया चैव कृतं कर्मातिसिद्धिदम् ।
नास्ति तत्र यदि श्रद्धा सर्वथा निष्फलं भवेत् ॥ इति ।

तत्र तयोर्ज्ञानश्रद्धयोर्मध्य इत्यर्थः । श्रद्धाया अभावेऽनिष्टं भवतीति श्रुतिराह—यो वै श्रद्धामनारभ्य यज्ञेन यजते नास्येष्टमद्धधत इति । गालवोऽपि—

श्रद्धयैव हि कर्तव्यं जपयागार्चनादिकम् ।
अन्यथा चेत्तद्वयर्थं भस्मनि न्यस्तहव्यवत् ॥ इति ।

व्यासः—

धर्मार्थकाममोक्षाणां श्रद्धा परमकारणम् ।
पुंसामश्रद्दधानानां न धर्मो नापि तत्फलम् ॥ इति ।

श्रद्धास्वरूपमाह व्यासः—

श्रद्धा वै सात्त्विकी देवी सूर्यस्य दुहिता तथा । इति ।

श्रद्धामाहात्म्यं श्रुतौ—श्रद्धयाऽग्निः समिध्यते । श्रद्धया विन्दते हविः । श्रद्धां भगस्य मूर्धनि । वचसा वेदयामसि । इति । शास्त्रार्थे विश्वासपरम्परयाऽऽस्तिक्यबुद्धिः श्रद्धा । सर्वकर्माणि भक्त्यैव कर्तव्यानि । तथा च व्यासः—

भक्त्यैव सर्वकर्माणि कर्तव्यानि मनीषिभिः ।
अन्यथा निष्फलानि स्युर्बालानां क्रीडनं यथा ॥ इति ।

तत्र भक्तिर्द्विविधा मुख्या गौणी चेति। तत्रेश्वरविषयक ईश्वरप्रीतये धर्मो कर्तव्यमिति प्रीत्यपरपर्यायानुरागाख्यश्चित्तवृत्तिविशेषो मुख्या भक्तिः। तथा च भक्तिमीमांसासूत्रम्—सा पराऽनुरक्तिरीश्वर इति। अथातो भक्तिजिज्ञासेति सूत्रोपात्ता भक्तिस्तत्पदार्थः। तस्याः परेति विशेषणम्। परा मुख्या भक्तिमुद्दिश्यानुरक्तिर्लक्षणत्वेन विधीयत इति तदर्थः। अत एव परेति गौणीं व्यावर्तयतीति तद्भाष्यम्। गौण्या तु समाधिसिद्धिरिति सूत्रे गौणी वृत्तिर्भक्तिः सेवारूपा कथिता। भक्त्यैवेश्वरः प्रत्यक्षो भवति। तथा च श्रुतिः—पराञ्चि खानि व्यतृणत्स्वयंभूस्तस्मात्पराङ्पश्यति नान्तरात्मन्। कश्चिद्धीरः प्रत्यगात्मानमैक्षदावृत्तचक्षुरमृतत्वमिच्छन्निति। स्मृतिरपि—

योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम्। इति।

ईश्वरप्रणिधानाद्वेति योगसूत्रेऽप्येवम्। प्रणिधानपदं भक्तिपरमिति राजमार्तण्डः। ब्रह्मसूत्रमपि—अपि संराधने प्रत्यक्षानुमानाभ्यामिति। अव्यक्तमपि ब्रह्म भक्त्या प्रत्यक्षं भवति श्रुतिस्मृतिभ्यां तथाऽवगमादिति तदर्थः।

भक्त्या त्वनन्यया शक्य अहमेवंविधोऽर्जुन।
ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परंतप॥

इति भगवद्वचनमपि। अत्र प्रवेष्टुमित्यनेन ब्रह्मभावाख्यो मोक्ष उच्यते सोऽपि भक्त्यैव लभ्य इत्यर्थः। चित्तशुद्धिविधुरस्य बाह्यशुद्धिवैफल्यमाह व्यासः—

गङ्गातोयेन सर्वेण मृद्भारैश्च नगोपमैः।
आमृत्यु चाऽऽचरञ्शौचं भावदुष्टो न शुध्यति॥ इति।

स एव—

शौचं हि द्विविधं प्रोक्तं बाह्यमाभ्यन्तरं तथा।
मृज्जलाभ्यां स्मृतं बाह्यं भावशुद्धिस्तथाऽऽन्तरम्॥ इति।

भावशुद्धिश्चित्तशुद्धिश्चित्तसंस्कार इति यावत्। चित्तसंस्कारानाह बृहस्पतिः—

दया क्षमाऽनसूया च शौचानायासमङ्गलम्।

अकार्पण्यास्पृहे चैव अष्टावात्मगुणाः स्मृताः ।
चित्तशुद्धिकरा एते संस्काराः परिकीर्तिताः ॥ इति ।

पुलस्त्यः—

अकाले चेत्कृतं कर्म कालं प्राप्य पुनः क्रिया ।
कालातीतं तु यत्कुर्यादकृतं तद्विनिर्दिशेत् ॥ इति ।

अकालेऽनागतकाले । द्रव्यादिभ्यः कालस्य प्राधान्यमाह कात्यायनः—

मुख्यकालं समाश्रित्य गौणमप्यस्तु साधनम् ।
न मुख्यद्रव्यलाभेन गौणकालप्रतीक्षणम् ॥ इति ।

मुख्यद्रव्यलाभेन मुख्यद्रव्यलाभहेतुना । गौणकालमप्याह स एव—

स्वकालादुत्तरो गौणः कालः पूर्वस्य कर्मणः ।
यद्वाऽऽगामिक्रियाकालमुख्ययोरन्तरालकम् ॥ इति ।

अत्रोत्तरग्रहणात्र पूर्वकालस्य गौणत्वम् । तेन समस्यहोमादावल्पद्वादश्यां माध्याह्निकापकर्षे च न प्रायश्चित्तम् । दैवान्मुख्यकालातिक्रमे गौणकालेऽनुष्ठानप्रकारमप्याह स एव—

प्रायश्चित्तप्रकरणप्रोक्तां निष्कृतिमाचरेत् ।
प्रायश्चित्तमकृत्वा वा गौणकाले समाचरेत् ॥ इति ।

शक्ताशक्तपरतया व्यवस्था द्रष्टव्या । कात्यायनः—

प्रधानस्याक्रियायां तु साङ्गं तत्पुनराचरेत् ।
तदङ्गस्याक्रियायां तु नाऽऽवृत्तिर्नैव तत्क्रिया ॥ इति ।

साङ्गप्रधानाङ्गस्योपवीतित्वादेरकरणे साङ्गप्रधानावृत्तिर्न नापि तन्मात्रकरणम् । किंतु विष्णुस्मरणादिप्रायश्चित्तमेवेति वर्धमानः । प्रधानाङ्गस्यैवाकरणे प्रायश्चित्तं न त्वङ्गाङ्गाकरण इति कल्पतरुः । काम्ये विशेषमाह संग्रहकारः—

काम्ये प्रतिनिधिर्नास्ति नित्ये नैमित्तिके हि सः ।
काम्येऽप्युपक्रमादूर्ध्वमन्ये प्रतिनिधिं विदुः ॥ इति ।

मुख्यलाभाशया प्रक्रमे तल्लाभ इत्यर्थः। प्रतिनिध्युपादानानन्तरं मुख्यलाभे विशेषमाह स एव—

उपात्ते तु प्रतिनिधौ मुख्यं वै लभ्यते यदि।
तत्र मुख्यमनादृत्य गौणेनैव समाप्यते॥ इति।

आरब्धं काम्यं कर्म फलभाशौ तदिच्छाविगमे वाऽपि समापनीयमेव। न च प्रयोजनाभावात्किमर्थं समापनमिति वाच्यम्। देवताभ्यो वा एष आवृश्चते यो यक्ष्य इत्युक्त्वा न यजत इति श्रुत्याऽदृष्टार्थमेव समापनस्योक्तत्वात्। तथा च जैमिनिः—प्रक्रमात्तु नियम्येताऽऽरम्भस्य क्रियानिमित्तत्वादिति। सर्वाणि कर्माणि शुद्धात्मना शुद्धदेशे शुद्धद्रव्येण कर्तव्यानि। तथा च व्यासः—

शुद्धात्मना शुद्धदेशे द्रव्येण शुचिना तथा।
सर्वकर्माणि कर्तव्यान्यन्यथा दोषभाग्भवेत्॥ इति।

देवलः—

येषु देशेषु यत्तोयं या च यत्रैव मृत्तिका।
येषु देशेषु यच्छौचं धर्माचारश्च यादृशः।
तत्र तांश्चावमन्येत धर्मस्तत्रैव तादृशः॥ इति।

पराशरः—

युगे युगे च ये धर्मास्तत्र तत्र च ये द्विजाः।
तेषां निन्दा न कर्तव्या युगरूपा हि ते द्विजाः॥ इति।

युगरूपा युगानुरूपाः कालपरतन्त्रा इति यावत्। तदुक्तं भारत आरण्यके पर्वणि—

भूमिर्नद्यो नगाः शैलाः सिद्धा देवर्षयस्तथा।
कालं समनुवर्तन्ते तथा भावा युगे युगे॥
कालं कालं समासाद्य नराणां नरपुंगव।
बलवर्ष्मप्रभावा हि प्रभवन्त्युद्भवन्ति च॥ इति।

अथ धर्मदेशाः। तत्र सुमन्तुः—

ब्रह्मावर्तः परो देशो ब्रह्मदेशस्ततः परम्।
मध्यदेशस्ततोऽप्यून आर्यावर्तस्ततः परः॥

सरस्वतीदृषद्वत्योर्देवनद्योर्यदन्तरम् ।
तं देवनिर्मितं देशं ब्रह्मावर्तं प्रचक्षते ॥
कुरुक्षेत्रं च मत्स्याश्च पञ्चालाः शूरसेनकाः ।
एष एव ब्रह्मदेशो ब्रह्मावर्तादनन्तरम् ॥
हिमवद्विन्ध्ययोर्मध्ये यत्प्राग्विनशनादपि ।
प्रत्यगेव प्रयागाच्च मध्यदेशः प्रकीर्तितः ॥
आ समुद्रात्तु वै पूर्वादा समुद्रात्तु पश्चिमात् ।
तयोरेवान्तरं गिर्योरार्यावर्तं विदुर्बुधाः ॥
कृष्णसारैर्मृगैर्देवैश्चातुर्वर्ण्याश्रमैर्युतैः ।
समृद्धो धर्मदेशः स्यादाश्रयैरन्विपश्चितः ॥
शूद्रराज्येऽपि निवसेद्यत्र मध्ये तु जाह्नवी ।
सोऽपि पुण्यतमो देशोऽनार्यैरपि समाश्रितः ॥
कावेरी तुङ्गभद्रा च कृष्णा वेणी च गौतमी ।
भागीरथीति विख्याता एता गङ्गाः प्रकीर्तिताः ॥
एताभिः संयुतो देशः सोऽपि पुण्यः प्रकीर्तितः ॥ इति ।

विनशनं सरस्वत्यन्तर्धानदेशः । पुराणान्तरेऽपि—

यत्र भीमा गौतमी च कृष्णा वेणी च जाह्नवी ।
कावेरी तुङ्गभद्रा च स देशः पुण्य ईरितः ॥

इति संक्षेपतो देशा उक्ताः । अथ प्रकीर्णकम् । वसिष्ठः—

स्नातोऽधिकारी भवति दैवे पित्र्ये च कर्मणि ।
पवित्राणां तथा जप्ये दाने च विधिदर्शितः ॥ इति ।

पवित्रशब्देनात्र मन्त्रा उच्यन्ते । जपपदसाहचर्यात् । पवित्रं पुनातेर्मन्त्रः पवित्रमुच्यत इति निरुक्ताच्च । दक्षोऽपि—

अस्नात्वा नाऽऽचरेत्कर्म जपहोमादि किंचन । इति ।

मार्कण्डेयपुराणे—

शिरःस्नातस्तु कुर्वीत दैवं पित्र्यमथापि वा । इति।

अग्निपुराणे—

अशिरस्कं भवेत्स्नानं स्नानाशक्तौ तु कर्मिणाम् ।
आर्द्रेण वाससा वाऽपि मार्जनं कापिलं विदुः ॥ इति ।

आग्नेयपुराण एव—

स्नानानामपि सर्वेषां वारुणेनैव मानव ।
कर्तुमर्हति कर्माणि विविधत्सर्वदा द्विजः ॥
असामर्थ्याच्छरीरस्य शक्त्यशक्त्याद्यपेक्षया ।
मन्त्रस्नानादीनि पञ्च एके इच्छन्ति सूरयः ॥ इति ।

अथ वासोधारणमन्तरवस्त्रमहतस्यानुचितमस्पर्शे शुद्धिप्रकारं चाऽऽह वाराहो धर्मसूत्रे—शुचिमन्तरं देवा अनुपन्तीति । शुचिरामा हि हवा. शुचयश्च सदेवाऽभिवदति—शुची वो हव्या मरुतः शुचीनां शुचिं हिनोम्यध्वरं शुचिभ्यः । ऋतेन सत्यमृतसाप आयञ्छुचिजन्मान शुचयः पावकाः ॥ इत्यहत वाससां शुचि तस्मात्किंचिद्वास युक्तं स्यात्सर्वं तदहतैर्वासोभिः कुर्यात् । प्रक्षालितान्यत्रि(क्लि)ष्टान्यनुपयुक्तान्यहतानि वासांसि पत्नीयजमानावृत्विजश्च परिदधीरन्नेव प्रक्रमाणु दीर्घसोमेषु सत्रेषु येऽमृत्विजो यथासमाम्नात यथैतदभिचरणीयेष्ठिषुपशुसोमेषु लोहितोष्णीषा लोहितवाससश्चर्त्विजः प्रचरेयुश्चित्रवासनश्चित्रोष्णीषा इति च । क्षौमाणि वासांसि तेषामलाभे कार्पासिकान्यौर्णिकानि कौशानि वा भवन्ति । मूत्रपुरीषलोहितरेतःप्रभृत्युपहतानां मृदाऽद्भिरिति प्रक्षालनं वासोवद्बल्कलानां वल्कलवत्कृष्णाजिनानां न परिहितमनिरुद्धमप्रक्षालितं प्रावरणं न पल्यूलितं मनुष्यसंयुक्तं देवत्रा युञ्ज्यादिति । देवत्रा देवकर्मणि । स्मृत्यन्तरे—

धौतवस्त्रधरः कुर्यात्सर्वकर्माणि संयतः । इति ।

प्रचेताः—

ईषद्धौतं नवं श्वेतं सदशं यन्न धारितम् ।
अहतं तद्विजानीयात्सर्वकर्मसु पावनम् ॥ इति ।

ईषद्धौतमकारुधौतम् । अत एव वृद्धमनुः—

स्वयंधौतेन कर्तव्या क्रिया धर्म्या विपश्चिता ।
न तु नेजकधौतेन नोपभुक्तेन वा क्वचित् ॥ इति ।

नेजको रजकः । स्वयंग्रहणादेव नेजकनिवृत्तौ पुनर्नेजकप्रतिषेधोऽन्येनापि सवर्णेन धौतस्य क्रियार्थत्वमस्तीति ज्ञापनार्थः । ईषद्धौ-

खमित्यपाष्टहस्तामिति स्मृत्यन्तरे पाठः । व्यासः—

होमदेवार्चनाद्यासु क्रियास्वाचमने तथा ।
नैकवस्त्रः प्रवर्तेत द्विजवाचनके तथा ॥ इति ।

द्विजवाचनकं पुण्याहवाचनम् । एकवस्त्रलक्षणमप्याह स एव—

सव्यादंसात्परिभ्रष्टकटिदेशधृताम्बरः ।
एकवस्त्रं तु तं विद्याद्दैवे पित्र्ये च वर्जयेत् ॥ इति ।

विशेषान्तरमप्याह स एव—

विकच्छोऽनुत्तरीयश्च नग्नश्चावस्त्र एव च ।
श्रौतं स्मार्तं तथा कर्म नैव कुर्याद्विचक्षणः ॥ इति ।

नग्नभेदानप्याह स एव—

नग्नो मलिनवस्त्रः स्यान्नग्नो जीर्णपटः स्मृतः ।
अनाच्छादितजानुश्च नग्नश्चार्धपटस्तथा ।
आर्द्रवासास्तथा नग्नो नग्नः स्यूतपटस्तथा ॥ इति ।
नग्नः स्यान्मलवद्वासा नग्नः कौशेयकेवलः ।
नग्नो द्विगुणवस्त्रः स्यान्नग्नो दग्धपटस्तथा ॥
नग्नश्च स्यूतवस्त्रः स्यान्नग्नो ग्रथितवस्त्रकः ।
नग्नश्च बहुवस्त्रः स्यान्नग्नः कौपीनकेवलः ।
काषायवस्त्रः साक्षाच्च दश नग्नाः प्रकीर्तिताः ॥ इति ।

कचित्तु नग्नश्च बद्धवस्त्रः स्यादित्यपि पाठः । कौशेयमात्रधारण एव नग्नता न तु परिधेयोत्तरीयवासोन्तरसाहित्येऽपि । कौपीनेऽप्येवम् । उभयत्रापि केवलशब्दोपादानस्वरसात् । जातूकर्ण्यः—

परिधानाद्बहिः कक्षा निबद्धा ह्यासुरी मता ।
धर्मकर्मसु विद्वद्भिर्वर्जनीया प्रयत्नतः ॥ इति ।

विस्तरस्त्वाह्निकग्रन्थे द्रष्टव्यः । स्मृत्यन्तरे—

अलंकृतः शुचिर्मौनी श्रद्धावाञ्जितेन्द्रियः ।
सर्वकर्माणि कुर्वीत दम्भासूयादिवर्जितः ॥ इति ।

दक्षः—

न वदेदनृतं कर्म कुर्वन्विघ्नं न च स्पृशेत् ।
हुं कुर्यान्न तु तुं कुर्यान्न चैवाप्यपमानयेत् ॥ इति ।

सामान्यनिषेधेनैव सिद्ध इदं वचनं धर्माङ्गत्वार्थम् । छललक्षणप्रसङ्गादेन गौतमेन न्यायप्रथमाध्याय उक्तम्—वचनविघातोऽर्थविकल्पोपपत्त्या छलमिति । अभिप्रायान्तरेण प्रयुक्तस्य शब्दस्यार्थान्तरं प्रकल्प्य दूषणाभिधानं छलशब्दार्थः । यथा नवकम्बलोऽयं देवदत्त इति वाक्यस्य नूतनाभिप्रायेण प्रयुक्तस्यार्थान्तरं परिकल्प्य दूषणदानं नास्य नव कम्बलाः सन्ति दरिद्रत्वात् । नह्यस्य द्वित्वमपि संभाव्यते कुतोऽस्य नवेति । वाक्छलं सामान्यच्छलमुपचारच्छलं चेति त्रैविध्यं छलस्य । तेषां लक्षणानि च तत्रैवोक्तानि तानि तत्रैव द्रष्टव्यानि । स्मृत्यन्तरे—

नैकवासा न च द्वीपे नान्तराले कदाचन ।
श्रुतिस्मृत्युदितं कर्म कदाचिदपि नाऽऽचरेत् ॥ इति ।

द्वीपान्तरालशब्दार्थस्तत्रैव—

परितो वेष्टितोऽद्भिस्तु द्वीपमित्यभिधीयते ।
अनावृतस्तु यो देशः सोऽन्तरालं प्रचक्षते ॥ इति ।

स्मृत्यन्तरे—

तिलकं धर्म कुर्वीत स्नानहोमजपादिकम् ।
अन्यथा यदि कुर्वीत गायत्र्यष्टशतं जपेत् ॥ इति ।

आपस्तम्बः—

जपो होमस्तपो यागो नित्यं ब्राह्मणतर्पणम् ।
वृथा भवति तत्सर्वमूर्ध्वपुण्ड्रं विना कृतम् ॥
सत्यं शौचं जपो होमस्तीर्थदेवादिसेवनम् ।
तस्य व्यर्थमिदं सर्वं यस्त्रिपुण्ड्रं न धारयेत् ॥ इति ।

स्मृत्यन्तरे—

न कदाचिन्मृदा तिर्यङ्न्यसेदूर्ध्वं न भस्मना ॥ इति ।

ब्रह्माण्डे—

मृत्तिका चन्दनं चैव भस्म तोयं चतुर्थकम् ।
एभिर्द्रव्यैर्यथाकालमूर्ध्वपुण्ड्रं भवेत्सदा ॥
स्नात्वा पुण्ड्रं मृदा कुर्याद्धुत्वा चैव तु भस्मना ।
देवानभ्यर्च्य गन्धेन सर्वपापापनुत्तये ॥
जलेन तिलकं कुर्याज्जलान्तः कर्मसिद्धये ॥ इति ।

अत्र भस्मनोर्ध्वपुण्ड्रस्य विहितप्रतिषिद्धत्वाद्विकल्पः । ऊर्ध्वपुण्ड्रत्रिपुण्ड्रयोर्यथासंप्रदायं व्यवस्था । पूर्वं यत्तिलकित्वं सामान्यत उक्तं तदेताभ्यामुपसंह्रियते । अप्रौढपादः सन्कर्म कुर्यात् । तथा च व्यासः—

दानमाचमनं होमं भोजनं देवतार्चनम् ।
प्रौढपादो न कुर्वीत स्वाध्यायं तर्पणं तथा ॥ इति ।

इदमन्यकर्मणामुपलक्षणम् ।

अप्रौढपादः कुर्वीत सर्वकर्माणि संयतः ।

इति पृथ्वीचन्द्रोदये स्मृत्यन्तरोक्तेः । प्रौढपादलक्षणं तेनैवोक्तम्—

आसनारूढपादो वा जान्वोर्वा जङ्घयोस्तथा ।
कृतावसक्थिको यश्च प्रौढपादः स उच्यते ॥ इति ।

विहितपादविन्यासविशेषोऽनाऽऽसनशब्दार्थः । तच्च सर्वकर्मसाधारणं पद्मस्वस्तिकाद्यासनान्यतमरूपम् । तत्रैव पादारोहणसत्त्वात् । एतादृशान्यतमासनाद्बहिरविहितेन प्रकारेण जङ्घाया बहिर्भाविनेति यावत् । आरूढः स्थितः पादो यस्य स्थापितः पादो येनेति वा । आ, आसनमारूढः पादो यस्य येन वेति वाऽर्थः । अत्राऽऽङतिक्रमणार्थः । फलितार्थस्तु पूर्व एव । जान्वोर्जङ्घयोरित्युभयत्र समासैकदेशस्याऽऽरूढपाद इत्येतस्य पदस्यान्वयः । तथा च जान्वोर्जङ्घयोर्वाऽऽरूढपादः प्रौढपाद इत्यर्थो भवति । कृतावसक्थिक इत्यत्रापि जान्वोर्जङ्घयोरिति पदद्वयमनुवर्तते । वस्त्रादिना जानुमध्यदेशबन्धनं जङ्घामध्यदेशबन्धनं वा कृतावसक्थिकशब्दार्थः । योगपट्टधारणमप्यनेन निषिध्यते । पादोपरि पाददाता प्रौढपाद इति हरदत्तः । तत्र—

माऽऽक्रम्य पादं पादेन न च व्यवहितौ करौ ।
जपेन्न प्रौढपादस्तु न प्रकाशकरः सदा ॥

इति स्मृतिरत्नावल्यां पुनः प्रौढपादग्रहणात् । जपग्रहणमन्त्रोपलक्षणम् । अनन्तरोदाहृतवाक्यात् ।

जान्वोरन्तरा कृत्वा सव्यदक्षपादतलद्वयम् ।
ऋजुकायो विशेषोऽपि स्वस्तिकं तत्प्रचक्षते ॥
ऊरुणोरुपरिष्टात्तु कृत्वा पादतलद्वयम् ।
ऋजुकायो विशेषोऽपि पद्मं तद्धि प्रचक्षते ॥

कृत्वोरौ पादतलं विशेयोग्यधर्मीरितम् ॥ इति
तन्त्रोक्तानि लक्षणानि । कूर्मपुराणेऽपि—

ऊर्वोरुपरि विप्रेन्द्र कृत्वा पादतले उभे ।
समासीताऽऽत्मनः पद्ममेतदासनमुत्तमम् ॥
उभे कृत्वा पादतले जानूर्वोरन्तरा ध्रुवम् ।
समासीताऽऽत्मनः प्रोक्तमासनं स्वस्तिकं परम् ॥
एकपादमथैकस्मिन्विन्यस्योरुणि सत्तम ।
आसीनोऽर्धासनमिदं योगसाधनमुत्तमम् ॥ इति ।

अथवा सुखासनं सर्वत्र कार्यम् । तथा च पृथ्वीचन्द्रोदये स्मृत्यन्तरे—

दक्षपादतलं वामजान्वधस्तु नियोजयेत् ।
वामपादतलं दक्षजान्वधस्तु नियोजयेत् ।
एतत्सुखासनं नाम सर्वकर्माणि साधयेत् ॥ इति ।

सर्वकर्माणि श्रौतगार्ह्यस्मार्ततान्त्रिककर्माणि तेषु कर्मसु सुखकरत्वात्साधारणमिदमासनं भवतीत्यर्थः । नामेति प्रसिद्धौ । सांख्यसूत्रमपि स्थिरसुखमासनमिति । यत्स्थिरं सत्सुखसाधनं भवति तदासनमिति तदर्थः । आसनान्याह व्यासः—

कौशेयं कम्बलं चैव आजिनं पट्टमेव च ।
दारुजं ताडपत्रं वा आसनं परिकल्पयेत् ॥
कृष्णाजिने ज्ञानसिद्धिर्मोक्षश्रीर्व्याघ्रचर्मणि ।
कुशासने व्याधिनाशः सर्वसिद्धिश्च कम्बलः ॥
वंशासने तु दारिद्र्यं पाषाणे व्याधिरेव च ।
धरण्यां तु भवेद्दुःखं दौर्भाग्यं छिद्रदारुजे ॥
तृणे धनयशोहानिः पल्लवे चित्तविभ्रमः ॥ इति ।

प्रचेताः—

गोशकृन्मृन्मयं भिन्नं तथा पालाशपिप्पलम् ।
लोहबद्धं सदैवाऽऽर्कं वर्जयेदासनं बुधः ॥ इति ।

स्मृत्यन्तरे—

मृगचर्म प्रयत्नेन वर्जयेत्पुत्रवान्गृही ॥ इति ।

श्रौतकर्मसु तु कौशेयकम्बलाजिनाद्यासनापेक्षया दर्भासनमत्यन्तं प्रशस्तम्। दर्भेष्वासीन इति वचनात्।

हस्तयोर्दर्भधारणमुक्तं स्मृत्यन्तरे—

श्रौतस्मार्तानि कर्माणि यावन्तीहोदितानि वै।
तानि सर्वाणि कुर्वीत सपवित्रकरो द्विजः॥ इति॥

अत्रिः—

उभाभ्यामपि हस्ताभ्यां द्विजैर्दर्भपवित्रके।
धारणीये प्रयत्नेन ब्रह्मग्रन्थिसमन्विते॥ इति।

प्रयत्नेन ब्रह्मग्रन्थिसमन्विते धारणीये इति योजना। द्विगुणीकृतानां दर्भशिखानां पाशः प्रदक्षिणमर्धवेष्टनं विधाय पश्चाद्भागेन यदा प्रवेश्यते तदा वर्तुलो ग्रन्थिः। स एव यदा प्रादक्षिण्येन सर्ववेष्टनं विधाय पुरोभागेण प्रवेश्यते तदा ब्रह्मग्रन्थिरिति हेमाद्रिः। पवित्रलक्षणं स्मृत्यन्तरे—

अनन्तर्गर्भितं साग्रं कौशं द्विदलमेव च।
प्रादेशमात्रं विज्ञेयं पवित्रं यत्र कुत्रचित्॥ इति।

पवित्रदर्भसंख्यामाह मार्कण्डेयः—

चतुर्भिर्दर्भपिञ्जूलैर्ब्राह्मणस्य पवित्रकम्।
एकैकन्यूनमुद्दिष्टं वर्णे वर्णे यथाक्रमम्॥ इति।

गरुडपुराणे—

सर्वेषां वा भवेद्द्वाभ्यां पवित्रं ग्रथितं न वा। इति।

बोधायनः—

हस्तयोरुभयोर्द्वौ द्वावासनेऽपि तथैव च॥ इति।

स्मृत्यन्तरे—

दर्भाः कृष्णाजिनं मन्त्रा ब्राह्मणा हविरग्नयः।
अयातयामान्येतानि नियोज्यानि पुनः पुनः॥ इति।

वर्ज्यदर्भा उक्ता हारीतेन—

पथि दर्भाश्चितौ दर्भा ये दर्भा यज्ञभूमिषु।
स्तरणासनपिण्डेषु तेषां त्यागो विधीयते॥ इति।

त्यागोऽग्रग्रहणम् । आपस्तम्बः—

ब्रह्मयज्ञे च ये दर्भा ये दर्भाः पितृतर्पणे ।
हता मूत्रपुरीषाभ्यां तेषां त्यागो विधीयते ॥
अपूता गर्भिता दर्भा ये चाग्रच्छेदिता नखैः ।
क्वथिता अग्निदग्धाश्च कुशा वर्ज्याः प्रयत्नतः ॥
नीविमध्यस्थिता दर्भा ब्रह्मसूत्रेण ये धृताः ।
पवित्रांस्तान्विजानीयाद्यथा कायस्तथा कुशाः ॥ इति ।

गर्भिता गर्भदलसंयुताः । वस्तुतस्तु सूत्रकृता यत्रानन्तर्गर्भत्वमुक्तं तत्रैव नियतमन्यत्रानियतमिति द्रष्टव्यम् । स्मृत्यन्तरे—

अमूला देवकार्येषु पितृकार्ये समूलकाः ॥ इति ।

श्रुतिरपि-यत्परुषि दिनं तद्देवानां यदन्तरा तन्मनुष्याणां यत्समूलं तत्पितृणामिति । कौशिकः—

समसूनाः स्मृता दर्भा अप्रसूनाः कुशाः स्मृताः ।
समूलाः कुतपाः प्रोक्ताश्छिन्नाग्रास्तृणसंज्ञिताः ॥ इति ।

प्रसूनं पुष्पम् । कुशस्वरूपमाहाङ्गिराः—

अच्छिन्नाग्रान्पवित्रांश्च समूलान्कोमलाञ्छुभान् ।
पितृदेवजपार्थे च समादद्यात्कुशान्द्विजः ॥ इति ।

शातातपः—

समित्पुष्पकुशादीनि ब्राह्मणः स्वयमाहरेत् ।
शूद्रानीतैः क्रयक्रीतैः कर्म कुर्वन्पतत्यधः ॥ इति ।

आदिशब्देन दूर्वादि । उत्तरार्धादिदमपि ज्ञायते स्वस्याऽऽहरणाशक्तौ ब्राह्मणक्षत्रियवैश्याहृतैः कर्मकरणे दोषो नास्तीति । कुशाहरणविधिमाह कश्यपः—

शुचौ देशे शुचिर्भूत्वा स्थित्वा पूर्वोत्तरामुखः ।
ओंकारेणैव मन्त्रेण कुशान्स्पृष्ट्वा द्विजोत्तमः ॥
विरिञ्चिना सहोत्पन्न परमेष्ठिनिसर्गज ।
नुद सर्वाणि पापानि कुश स्वस्तिकरो भव ॥
इमं मन्त्रं समुच्चार्य ततः पूर्वोत्तरामुखः ।
हुंफट्कारेण दर्भांस्तु सकृच्छित्त्वा समुद्धरेत् ॥ इति ।

यत्रापत्ययादेव च्छेदनेऽपि पूर्वोत्तराग्रत्वे सिद्धे पुनर्वचनं विशेषविधिप्रतिपादितधर्मान्तरपरिसंख्यार्थम् । तेन च्छित्त्वेत्यस्यैव विशेषविधिप्रतिपादितत्वाच्छेदने निवृत्तिः, शुचौ देशे शुचिर्भूत्वेत्यस्य तु न निवृत्तिर्विशेषविधिप्रतिपादितत्वाभावादिति द्रष्टव्यम् । कुशग्रहणकालमाहाङ्गिराः—

अहन्यहनि कर्मार्थं कुशच्छेदः प्रशस्यते ।
कुशा धृता ये पूर्वत्र योग्याः स्युर्नोत्तरत्र ते ॥ इति ।

पूर्वत्र पूर्वस्मिन्कर्मणि धृता ये कुशास्त उत्तरत्रोत्तरस्मिन्ननन्तरं क्रियमाणे कर्मणि न योग्या इत्यर्थः । अहन्यहनि कुशच्छेदनासंभवे कालान्तरमुक्तं स्मृत्यन्तरे—

मासि मास्याहृता दर्भास्तन्मास्येव चोदिताः ॥ इति ।

अस्याप्यसंभवे विष्णुः—

दर्शे श्रावणमासस्य समन्त्रोत्पाटिताः कुशाः ।
अयातयामास्ते दर्भा नियोज्याः स्युः पुनः पुनः ॥ इति ।

अयातयामा अपर्युषिताः । नियोज्या उपयुक्ता अप्यनिषेधेऽन्यत्र प्रयोज्या इत्यर्थः । जाबालिः—

कुशान्काष्ठानि पुष्पाणि गवार्थं च तृणादिकम् ।
निषिद्धं चापि गृह्णीयादमावास्याहनि द्विजः ॥ इति । यत्तु—
अमायां नैव हिंस्यात्तु कुशांश्च समिधस्तथा ।
सर्वत्रावस्थिते सोमे हिंसायां ब्रह्महा भवेत् ॥
वनस्पतिगते सोमे यस्तु हिंस्याद्वनस्पतिम् ।
घोरायां ब्रह्महत्यायां युज्यते नात्र संशयः ॥ इति ।

इति निषेधः स यस्मिन्मुहूर्तत्रये वनस्पतिषु सोमो वसति तत्परो स तु कृत्स्नामापर इति योज्यम् । वनस्पतिगतसोमविशिष्टे काले छेदननिषेधः स लौकिकच्छेदनपरो न त्वध्वर्बर्हिरर्थसमित्कुशच्छेदनपरस्तस्य विहितत्वादिति द्रष्टव्यम् । वनस्पतिषु सोमवासस्य कालस्तु गरुडपुराणेऽभिहितः—

त्रिमुहूर्तं वसत्यर्के त्रिमुहूर्तं जले तथा ।
त्रिमुहूर्तं तथा गोषु त्रिमुहूर्तं वनस्पतौ ॥ इति ।

चेति ज्ञेयम् । प्रतिकर्म शिखाबन्धस्तु न लङ्घनीयः । उपवीतेऽपि भेदा-पत्तेरिति वर्धमानः । सशिखवपनेन खल्वाटत्वादिदोषेण च विशिखश्चे-त्तद्दोषायमाह कौथुमिः—यदि तु सर्वथा विशिख एव स्यात्तदा सप्त-भिर्दर्भैर्ब्रह्मग्रन्थियुता शिखां कृत्वा दक्षिणे कर्णे धारयेदिति । काठकगृ-ह्येऽपि—अथ चेत्प्रमादान्न शिखा स्यात्तदा कौशीं शिखां ब्रह्मग्रन्थि-युतां दक्षिणे कर्णे निदध्यादिति । गृह्यसूत्रे—मयि दक्षक्रतू इति जङ्घ-म्यमानो जपतीति । इदं च पुरुषार्थं कर्मार्थं चेति ज्ञेयम् । अहीनवत्पु-रुषधर्मस्तदर्थत्वादिति जैमिनिरप्येवमेवाऽऽह । यज्ञियसमिधो ब्राह्मे—

शमीपलाशन्यग्रोधप्लक्षवैकङ्कतोद्भवाः ।
अश्वत्थोदुम्बरौ बिल्वश्चन्दनः सरलस्तथा ।
सालश्च देवदारुश्च खदिरश्चेति यज्ञियाः । इति ।

कर्मप्रदीपे—

नाङ्गुष्ठादधिका कार्या समित्स्थूलतया क्वचित् ।
न वियुक्ता त्वचा चैव न सकीटा न पाटिता ।
प्रादेशान्नाधिका नोना तथा स्यान्न द्विशाखिका ।
न सपर्णा समित्कार्या होमकर्मसु जानता ॥

इति । इदं च प्रादेशमात्रत्वं च ज्ञेयाश्वत्थसमि[त्] द्वावेव सूत्रकृता विहितत्वान्नियतम् । अन्यत्रानियतम् । अन्यथा तत्र तत्र तद्विधानं व्यर्थं स्यादिति द्रष्टव्यम् । स्मृत्यन्तरे—

प्रादेशमात्र्यः समिधो ह्यखर्वा नैव पाटिताः ।
काम्येषु दण्डकर्मादौ विपरीता जिघांसतः ॥
विशीर्णा विदला ह्रस्वा वक्रा बहुशिराः कृशाः ।
दीर्घाः स्थूला घुणैर्जुष्टाः कर्मसिद्धिविनाशिकाः ॥ इति ।

हन्तुमिच्छा जिघांसा, जिघांसतीति जिघांसन्, तस्य जिघांसतः । आभिचारिके कर्मणि प्रादेशतोऽधिका एव खर्वा एव पाटिता एव समिधो भवन्तीति विपरीतशब्दार्थः । पारिजाते स्मृत्यन्तरे—

सर्वेषु धर्मकार्येषु पत्नी दक्षिणतः सदा ।
अभिषेके विप्रपादक्षालने वामतो भवेत् ॥ इति ।

वामतो वामभागे । स्मृत्यन्तरे—

गृहस्थः कुरुते कर्म वैदिकं वाऽथ तान्त्रिकम् ।
कटिबन्धनसंयुक्तं तत्सर्वं निष्फलं भवेत् ॥ इति ।

आचारदर्पणे स्मृत्यन्तरे—

दैवमानुषपैत्राः स्युरलंकारा यथायथम् । इति ।

दैवे कर्मणि दैवो मानुषे मानुषः पित्र्ये पैत्र इति यथायथ-शब्दार्थः । मानुषं कर्मोपनयनादि । अग्न्याधानस्य दैवत्वाद्दैवालंकार-योगौ विशेष उक्तौ बोधायनेन—मानुषेणालंकारेणालंकृतौ भवत इति । एतत्स्वरूपं कर्मान्ते बोधायन आह—सर्व एवान्यो मानुषोऽलंकारोऽन्यत्र नलदादातीर्थैतदुदाहरन्ति स्रजमु हैके प्रतिषेधयन्तीति । वैखानसोऽपि—

हेमभूषणसंपन्नः शुभ्रवस्त्रानुलेपनः ।
सुगन्धिकुसुमैर्जुष्टो दिव्योऽलंकार उच्यते ॥
स एव पुष्परहितः साञ्जनो मानुषः स्मृतः ।
एषोऽनुलेपरहितः पैत्रोऽलंकार ईरितः ॥ इति ।

स एव दिव्य एव । एष दिव्यः । वाराहे—

स्नानं संध्या जपो होमः स्वाध्यायो देवतार्चनम् ।
उपोषितः सन्कुर्वीत सायंसंध्याहुतीर्विना ॥ इति ।

इदमुपलक्षणमन्यकर्मणाम् ।

उपोषितः प्रकुर्वीत सर्वकर्माणि संयतः । इति स्मृत्यन्तरात् ।

अशक्तं प्रत्यनुग्रहश्चतुर्विंशतिमते—

इक्षुरापः फलं मूलं ताम्बूलं पय औषधम् ।
भक्षयित्वाऽपि कर्तव्याः स्नानदानादिकाः क्रियाः ॥ इति ।

ताम्बूलभक्षणानुग्रहेऽपि विगानादिदानीं नैवेदं भवति । कर्मप्रदीपे—

पैषण्युलूखलग्रावतैलयन्त्रादिषु ध्वनिः ।
यावत्प्रवर्तते तावत्कर्म नैव समाचरेत् ॥
चण्डालपतितादीनां शब्दो यावत्प्रवर्तते ।
तावत्कर्म न कर्तव्यं मुनिकोटित्रयोक्तया ॥ इति ।

चेति ज्ञेयम् । प्रतिकर्म शिखायन्थस्तु न कर्त्तव्यः । उपवीतेऽपि भेदापत्तेरिति वर्धमानः । सशिखवपनेन खल्वाटत्वादिदोषेण च विशिखश्चेत्तदोपायमाह कौथुमिः—यदि तु सर्वथा विशिख एव स्यात्तदा सप्तभिर्दर्भैर्ब्रह्मग्रन्थियुतां शिखां कृत्वा दक्षिणे कर्णे धारयेदिति । काठकगृह्येऽपि—अथ चेत्प्रमादान्न शिखा स्यात्तदा कौशीं शिखां ब्रह्मग्रन्थियुतां दक्षिणे कर्णे निदध्यादिति । गृह्यसूत्रे—मयि दक्षक्रतू इति जङ्घ्यमानो जपतीति । इदं च पुरुषार्थं कर्मार्थं चेति ज्ञेयम् । अहीनवत्पुरुषधर्मस्तदर्थत्वादिति जैमिनिरप्येवमेवाऽऽह । यज्ञियसमिधो ब्राह्मे—

शमीपलाशन्यग्रोधप्लक्षवैकङ्कतोद्भवाः ।
अश्वत्थोदुम्बरौ बिल्वश्चन्दनः सरलस्तथा ।
शालश्च देवदारुश्च खदिरश्चेति यज्ञियाः । इति ।

कर्मप्रदीपे—

नाङ्गुष्ठादधिका कार्या समित्स्थूलतया क्वचित् ।
न वियुक्ता त्वचा चैव न सकीटा न पाटिता ।
प्रादेशान्नाधिका नोना तथा स्यान्न द्विशाखिका ।
न सपर्णा समित्कार्या होमकर्मसु जानता ॥

इति । इदं च प्रादेशमात्रत्वं यज्ञेपाश्वत्थसमि(?)द्विषयं सूत्रकृता विहितत्वान्नियतम् । अन्यत्रानियतम् । अन्यथा तत्र तत्र तद्विधानं व्यर्थं स्यादिति द्रष्टव्यम् । स्मृत्यन्तरे—

प्रादेशमात्र्यः समिधो ह्यखर्वा नैव पाटिताः ।
काम्येषु वश्यकर्मादौ विपरीता जिघांसतः ॥
विशीर्णा विदला ह्रस्वा वक्रा बहुशिराः कृशाः ।
दीर्घाः स्थूला घुणैर्जुष्टाः कर्मसिद्धिविनाशिकाः ॥ इति ।

हन्तुमिच्छा जिघांसा, जिघांसतीति जिघांसन्, तस्य जिघांसतः । आभिचारिके कर्मणि प्रादेशतोऽधिका एव खर्वा एव पाटिता एव समिधो भवन्तीति विपरीतशब्दार्थः । पारिजाते स्मृत्यन्तरे—

सर्वेषु धर्मकार्येषु पत्नी दक्षिणतः सदा ।
अभिषेके विप्रपादक्षालने वामतो भवेत् ॥ इति ।

वामतो वामभागे। स्मृत्यन्तरे—

गृहस्थः कुरुते कर्म वैदिकं वाऽथ तान्त्रिकम्।
कटिबन्धनसंयुक्तं तत्सर्वं निष्फलं भवेत्॥ इति।

आचारदर्पणे स्मृत्यन्तरे—

दैवमानुषपैत्राः स्युरलंकारा यथायथम्। इति।

दैवे कर्मणि दैवो मानुषे मानुषः पित्र्ये पैत्र इति यथायथशब्दार्थः। मानुषं कर्मोपनयनादि। अग्न्याधानस्य दैवत्वाद्दैवालंकारप्राप्तौ विशेष उक्तो बोधायनेन—मानुषेणालंकारेणालंकृतो भवत इति। एतत्स्वरूपं कर्मान्ते बोधायन आह—सर्वे एवान्यो मानुषोऽलंकारोऽन्यत्र नलदादाताद्यैवैतदुदाहरन्ति स्रजमु हैके प्रतिषेधयन्तीति। वैखानसोऽपि—

हेमभूषणसंपन्नः शुभ्रवस्त्रानुलेपनः।
सुगन्धिकुसुमैर्जुष्टो दिव्योऽलंकार उच्यते॥
स एव पुष्परहितः साञ्जनो मानुषः स्मृतः।
एषोऽनुलेपरहितः पैत्रोऽलंकार ईरितः॥ इति।

स एव दिव्य एव। एष दिव्यः। वाराहे—

स्नानं संध्या जपो होमः स्वाध्यायो देवतार्चनम्।
उपोषितः सन्कुर्वीत सायंसंध्याहुतीर्विना॥ इति।

इदमुपलक्षणमन्यकर्मणाम्।

उपोषित प्रकुर्वीत सर्वकर्माणि सयतः। इति स्मृत्यन्तरात्।

अशक्तं प्रत्यनुग्रहश्चतुर्विंशतिमते—

इक्षुरापः फलं मूलं ताम्बूलं पय औषधम्।
भक्षयित्वाऽपि कर्तव्याः स्नानदानादिकाः क्रियाः॥ इति।

ताम्बूलभक्षणानुग्रहेऽपि विधानादिदानीं नैवेद्यं भवति। कर्मप्रदीपे—

पेषण्युलूखलग्रावतिर्यग्यन्त्रादिषु स्वानैः।
यावत्प्रवर्तते तावत्कर्म नैव समाचरेत्॥
चण्डालपतितादीनां शब्दो यावत्प्रवर्तते।
तावत्कर्म न कर्तव्यं मुनिनेदं कथयोस्तथा॥ इति।

प्रथमेनाऽऽदिपदेनेक्षुयन्त्रादीनां ग्रहणम् । उत्तरेणाऽऽदिपदेन म्लेच्छादीनां ग्रहणम् । आचारदर्पणे स्मृत्यन्तरे—

संध्ययोरुभयोर्नैव कर्म कार्यं मनीषिभिः ॥ इति ।

विना वचनमिति शेषः । बोधायनः—निर्वपणसंस्तरणलाजहोमनित्यहोमान्कायेन तीर्थेन कुर्याद्देवेन दैविकं पैतृकं पित्र्येण कमण्डलुस्पर्शनं दधिस्पर्शनं चान्नप्राशनं स्रुवग्रहणं दैविकं सौम्येनाऽऽग्नेयेन प्रतिग्रहं कुर्यादिति । स्वल्पाङ्गुल्योर्मूले कायम् । स्वल्पाङ्गुली कनिष्ठिके । अङ्गुल्यग्रेषु दैवम् । अङ्गुष्ठमूले पित्र्यमेतदेव पैतृकं ज्ञेयम् । अङ्गुलिमूले सौम्यम् । करमध्य आग्नेयम् । आपस्तम्बः—

क्रोधयुक्तो यद्यजति यज्जुहोति यदर्चति ।
स तस्य हरते सर्वमामकुम्भो यथोदकम् ॥ इति ।

वसिष्ठः—

विद्यातपोभ्यां संयुक्तं ब्राह्मणं जपनैत्यकम् ।
सदाऽपि पापकर्माणमेनो न प्रतियुज्यते ॥
जापिनां होमिनां चैव ध्यायिनां तीर्थवासिनाम् ।
न संवसन्ति पापानि ये च स्नानाशिनो व्रतैः ॥ इति ।

अन्यच्च स्मृत्यन्तरे—

पाखण्डिभिः सहाऽऽलापं कर्मकाले विवर्जयेत् ॥ इति ।

पाखण्डिस्वरूपं लैङ्गे—

वेदबाह्यव्रताचाराः श्रौतस्मार्तबहिष्कृताः ।
पाखण्डिन इति ख्याता न संभाष्या द्विजातिभिः ॥ इति ।

ब्रह्मवैवर्तेऽपि—

पुराणन्यायमीमांसाधर्मशास्त्राङ्गमिश्रिताः ।
वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश ॥

इति परिगणितानि विद्यास्थानान्यधिकृत्य—

एतत्सत्यमितश्चान्यत्पाखण्डं बुद्धिकल्पितम् ।
दैत्यानां मोहनार्थाय महामोहेन निर्मितम् ॥ इति ।
पाशब्देन तु वेदार्थः पाखण्डास्तस्य खण्डकाः ।

इति पाखण्डशब्दनिरुक्तिः । आचाररत्न आपस्तम्बः—

अग्न्यगारे गवां गोष्ठे ब्राह्मणानां च संनिधौ ।

आहारे जपकाले च पादुके परिवर्जयेत् ॥
आरुह्य पादुके यस्तु गृहात्परगृहं व्रजेत्।
छेत्तव्यौ चरणौ तस्य नान्यो दण्डो विधीयते '। इति।

पूर्वश्चकारो देवतायतनसंग्रहार्थः। द्वितीयो होमादिसंग्रहार्थः। आधानवत्सोमयागादावपि पित्रादिष्वकृतसोमयागादिषु विद्यमानेषु पुनादेरनधिकारः। तथा च मण्डनः--

परीष्टिदोषसंप्राप्तौ न यष्टव्यं कदाचन।
दर्शेष्टिं पौर्णमासेष्टिं सोमेज्यामग्निसंग्रहम् ॥
अग्निहोत्रं विवाहं च प्रयोगे प्रथमे स्थितम्।
न कुर्याज्जनके ज्येष्ठे सोदरे वाऽप्यकुर्वति ॥ इति।

दर्शपौर्णमासयोः पृथगुपादानं कृते पौर्णमासे प्रतिबन्धादिना चाकृतदर्शेऽपि दोषं वक्तुम्। एवमग्रे संग्रहाग्निहोत्रयोः कृताधानस्याकृताग्निहोत्रस्यापि। विवाहग्रहणं भ्रातृमात्रविषयम्। प्रथमग्रहणं पुनराधानादौ पित्रादेरकृतपुनराधानत्वेऽपि पुत्रादेरदोष इति दर्शयितुम्। अपिशब्देन पितामहः संगृहीतो भवति। सोदर इत्यनेनासोदराणामदोष इति दर्शितम्। अत एव तत्रैवोक्तम्--

क्षेत्रजादावनीजाने विद्यमानेऽपि सोदरे।
नाधिकारविघातोऽस्ति भिन्नोदर्येऽपि चौरसे ॥ इति।

पूर्वार्धे क्षेत्रजादीनां पितरमभिप्रेत्य सोदरत्वं द्वितीयार्धे दत्तकादीनां मातृतोऽप्यसोदरत्वम्। यागादावप्याज्ञायां न दोष इति तत्रैव--

पिता यस्याग्रजो भ्राता न कुर्याद्वा पितामहः।
तपोऽग्निहोत्रं यज्ञं वाऽऽज्ञया कुर्यात्कथाश्रयात् ॥ इति।

निमित्तविशेषेषु त्वाज्ञां विनाऽप्यदोषः सुमन्तुनोक्तः--

व्यसनासक्तचित्तो वा नास्तिको वाऽथवाऽग्रजः।
कनीयान्धर्मकामस्तु आधानमथ कारयेत् ॥ इति।

अग्रज इति पित्रादेरुपलक्षणम्। आधानमिति यागादेः। अथेति स्मृत्यन्तरोक्तजात्यन्धबधिरपङ्ग्वादिसंग्रहार्थम्। आज्ञायामपि क्वचिद्दोषः क्वचिन्न दोष इत्युक्तं मण्डनेन--

ज्येष्ठे श्रद्धाविहीने सत्यामेव तदनुज्ञया ।
पितुः सत्यप्यनुज्ञाने नाऽऽदधीत कदाचन ॥ इति ।

अत्र च पित्रादावधिकारिण्यपि तदाज्ञया पुत्रादिराधानादि कुर्यात् । यद्वा अननुज्ञयैव कुर्यान्न पित्रनुज्ञयेति तात्पर्यमिति केचित् । अन्ये तु निषेधस्तावत्सर्वविषयस्तत्राधिकारिणि पुत्रादौ विशेषतः प्रतिप्रसवाभावात्पुत्रादेरनधिकार एव । द्विविधोऽनधिकारी जात्यन्धादिर्नास्तिकादिश्च । तत्र जात्यन्धादौ तु पित्रादावनधिकारिण्यपि तदाज्ञयाऽऽधानाद्यधिकारः । नास्तिकादौ तु पित्रादावनधिकारिणि सत्यत्यन्तनास्तिक्येनाऽऽधानादिकरणसंभावनानिवृत्तावप्यग्रजानुमत्यैवाधिकारः । पितुस्त्वनुमत्याऽपि न । अत एव श्रद्धया हीन इत्युक्तम् । एतद्विषयमेव च—

दारैस्तु परिविद्यन्ते नाग्निहोत्रेण नेज्यया ।

इति हारीतवचनमग्रजे विवाहाग्निहोत्रयोर्विशेषाभिधानार्थत्वेन द्रष्टव्यम् । पश्चाद्विवाहे दोष एव । आधानादौ नेति । यदा तु कदाचित्कनास्तिक्येन पित्रादावाधानादिकरणसंभावना तदाऽनुज्ञयाऽपि नाधिकारः । अधिकारिणि तु पित्रादौ दूरापास्त एवानुज्ञयाऽधिकार इति प्राहुः । श्रुतौ—न म्लेच्छितवै नापभाषितवै म्लेच्छो ह वा एष यदपशब्द इति । यर्वाणस्तर्वाणो नामर्षयो बभूवुः । यद्वा नस्तद्वा न इति प्रयोक्तव्ये यर्वाणस्तर्वाण इति प्रयुञ्जते । यज्ञकर्मणि नापभाषन्त इति श्रुतेः कर्मकाल एवापभाषणनिषेध इति कश्चित् । तेऽसुरा हेलयो हेलय इति वदन्तः पराबभूवुरित्यकर्मकालेऽपि दोषश्रुतेरकर्मकालेऽप्यपभाषणे दोष इत्यन्ये । मन्त्रार्थविचारपूर्वकमेव क्रियाः कर्तव्या अन्यथा दोषः । तथा च व्यासः —

मन्त्रार्थमनुसंधाय जपहोमादिकाः क्रियाः ।
मनीषिभिः प्रकर्तव्या अन्यथा नरको भवेत् ॥ इति ।

ऋष्यादिस्मरणमपि कार्यम्—

आर्षं छन्दो दैवतं च विनियोगं मनोस्तथा ।
ब्राह्मणं प्रयत्नेन वेदितव्यं विपश्चिता ॥
अविदित्वा तु यः कुर्याद्याजनाध्यापनं जपम् ।
होममर्चनादीनि तस्य स्वल्पं फलं भवेत् ॥

इति दक्षोक्तेः । तस्य कर्तुः ।

अविदित्वा मुनिं छन्दो दैवतं योगमेव च ।
योऽध्यापयेज्जपेद्वाऽपि पापीयाञ्जायते हि सः ॥
ब्राह्मणं विनियोगं च च्छन्द आर्षं च दैवतम् ।
अज्ञात्वा पञ्च यो मन्त्रे न स तत्फलमश्नुते ॥

इति चन्द्रिकायां व्यासोक्तेश्च । ऋष्यादिज्ञानस्याऽऽवश्यकत्वं छन्दोगा अप्यधीयते—यो ह वा अविदितार्षेयच्छन्दोदैवतब्राह्मणेन मन्त्रेण याजयति वाऽध्यापयति वा स्थाणुर्वा भवति गर्ते वा पात्यते प्र वा मीयते पापीयान्भवति तस्मादेतानि मन्त्रे विद्यादिति । आर्षेयमृषिसंबन्धम् । छन्दो गायत्र्यादि । दैवतं प्राजापत्यादि । ब्राह्मणं विनियोजकं वाक्यम् । तत्रार्षेयस्तैत्तिरीयशाखिभिः काण्डानुक्रमणिकायां द्रष्टव्याः । यस्य मन्त्रस्यानेककाण्डेषु पाठस्तत्र विकल्पः समुच्चयो वा । देवता तु मन्त्रलिङ्गाद्वचनबलाद्वा । छन्दस्तु दैवासुरप्राजापत्यार्षभेदेन प्रत्येकं चतुर्विधम् । अक्षरभेदगणभेदाभ्यां पिङ्गलशाखासमानन्यायत्वाच्च ऋग्वेदानुक्रमणिकातश्च । मन्त्रेषु यत्र स्पष्टं लिङ्गं नास्ति होमादौ तत्राग्निरेव देवता । कल्पसारकारोक्तेः । क्वचिद्वचनबलान्मन्त्रगतदेवतां परित्यज्यान्यदेवतापरत्वमप्यैन्द्र्यान्यायेन केनापि साम्येनेति द्रष्टव्यम् । ब्राह्मणं तु प्रत्यक्षं तत्तन्मन्त्रविषये प्रायशोऽस्त्येव । अप्रत्यक्षं तु कल्पसूत्रकारप्रत्यक्षमिति तद्विधायकवाक्यरूपमेव । विनियोगस्तु सुप्रसिद्ध एव ।

न च स्मरेदृषिं छन्दः श्राद्धे वैतानिके मखे ।
ब्रह्मयज्ञे वैश्वदेवे तथा तर्पणकर्मणि ॥

इति कृष्णभट्टीकारधृतसंग्रहवचनाच्छ्राद्धादौ स्मरणं न कर्तव्यमिति केचित् । अन्ये त्वेतस्य वचसो निर्मूलत्वादृष्यादिस्मरणमेतेष्वपि कर्तव्यमेव । कुर्वन्ति च सामगाः । न चैते छन्दोगब्राह्मणबलात्कुर्वन्तीति वाच्यम् । निषेधवचनस्य निर्मूलत्वेन याज्ञवल्क्योक्तऋष्यादिस्मरणे दोषस्य प्रबलत्वेन चैतस्य ब्राह्मणस्य होलाकाधिकरणन्यायेन सर्ववेदविषये प्रवृत्तौ बाधकाभावात् । तस्मात्सर्वैरप्यविशेषादृष्यादिस्मरणमेतेष्वपि कर्तव्यमेवेत्याहुः । न च यजुश्छन्दो न विद्यत इति निषेधात्कथं याजुषाणां छन्दःस्मरणमिति वाच्यम् । एतस्य यजु-

वेदान्तर्गतजपपरत्वेन तदन्तर्गतत्वाविपरत्वाभावात् । विद्यारण्यैस्तैत्तिरीयसंहिताप्रथमप्रपाठकान्तिमानुवाकव्याख्याने तथा मदनमहार्णवे कूष्माण्डगणहोममन्त्ररुद्रप्रश्नचमकप्रश्नानां कर्मविपाकप्रयोगे तथा कौण्डोन श्रौतदर्शपूर्णमासादिमन्त्राणां श्रौतकर्मणि च्छन्दसः प्रदर्शनाच्च । न च यावतीषु श्रुतिषु ऋष्यादिप्रदर्शितमस्ति तत्रैवास्तु । अन्यत्र तत्स्मरणे किं प्रमाणमिति वाच्यम् । अतिप्रामाणिकैर्विद्यारण्यमहार्णवकारकौण्डभट्टादिभिः प्राचीनैस्तदतिरिक्तेष्वप्यृष्यादिस्मरणस्य प्रदर्शितत्वेन तासां श्रुतीनामुपलक्षणपरत्वमेव तैः स्वीकृतमित्यस्यार्थस्यावगमात् । सर्वत्रैवर्ष्यादिस्मरणं नेति प्रयोगपारिजातकारः । यदि कदाचिदृष्याद्यस्फूर्तिस्तदा यस्य वाक्यं स ऋषिर्या तेनोच्यते सा देवता यदक्षरपरिमाणं तच्छन्द इति सर्वानुक्रमणिकोक्तमविरोधाद्यजुर्वेदिभिरपि स्वीकार्यम् । तत्र स्मरणे क्रमचतुष्टयम् । ओमित्येकाक्षरं ब्रह्म । अग्निर्देवता । ब्रह्म इत्यार्षम् । गायत्रं छन्दः । परमात्मा स्वरूपम् । सायुज्यं विनियोग इत्यत्र देवता ऋषिश्छन्द इति दर्शनादयमेकः क्रमः । गायत्रिया गायत्री छन्दो विश्वामित्र ऋषिः सविता देवतेत्यत्र छन्द ऋषिर्देवतेति क्रमदर्शनादयमप्येकः क्रमः । यो ह वा अविदितार्षेयच्छन्दोदैवतब्राह्मणेनेति श्रुतावृषिश्छन्दो देवतेत्येवं क्रमदर्शनादयमप्येकः क्रमः । ऋषिदैवतच्छन्दांस्यनुक्रमिष्याम इति सर्वानुक्रमण्यामृषिर्देवता छन्द इति क्रमदर्शनादयमप्येकः क्रमः । इत्येवं क्रमचतुष्टयम् । तत्र तैत्तिरीयैः क्रमचतुष्टयमध्य इच्छया यः कश्चन क्रमः स्वीकार्यः । प्रणवगायत्र्योस्तु क्रमविशेषप्रदर्शनं तयोरेव नान्यत्रेत्येवं स्वीकारेऽन्त्यं क्रमद्वयमेवेति द्रष्टव्यम् । ऋषिच्छन्दःशब्दार्थौ निरुक्तकारेण दर्शितः—ऋषिर्दर्शनात्स्तोमान्ददर्शेत्यौपमन्यव इति । छन्दांसि च्छादनादिति च । मन्त्रास्तु त्रिविधाः—ऋचः सामानि यजूंषीति । तेषां लक्षणमुक्तं द्वितीयाध्याये प्रथमे पादे जैमिनिना—तेषामृग्यत्रार्थवशेन पादव्यवस्था । गीतिषु सामाख्या । शेषे यजुःशब्द इति । तच्चोदकेषु मन्त्राख्या । शेषे ब्राह्मणशब्द इति सूत्राभ्यां यथायथं वेदभागयोर्मन्त्रब्राह्मणयोर्लक्षणमुक्तम् । तत्र मन्त्रभागस्यापरोऽवान्तरविभाग ऋगादिरूपः—अहे बुध्निय मन्त्रं मे गोपाय । यमृषयस्त्रैविदा विदुः । ऋचः सामानि यजूंषि । सा हि श्रीरमृता सतामिति मन्त्ररूपवेदे लोके च प्रसिद्धः । तत्र को भाग ऋक्शब्देनोच्यते को वा सामशब्देन को वा यजुःशब्देनेति तत्परिज्ञा-

नाय ऋगादिलक्षणमुच्यते । तत्र तेषामृग्यजुर्वशेन पादव्यवस्थेत्यृग्लक्षणं सूत्रम् । तेषां मन्त्राणां मध्ये यस्मिन्मन्त्रे पादव्यवस्था स मन्त्र ऋगित्युच्यत इति सूत्रार्थः । ऋचः स्वरूपस्या विशिष्टकार्थप्रतिपादकत्वेऽपि प्रतिपादमवान्तरार्थभेदसंभवादर्थवशेनेत्युक्तम् । एतच्च पादव्यवस्थाहेतूनां वृत्तवशत्वादीनामुपलक्षणम् । तस्यैव मुख्यतया व्यवस्थापकत्वात् । एतच्च न लक्षणशरीरप्रविष्टम् । पादव्यवस्थावन्मन्त्रत्वस्यैवातिप्रसक्तत्वादिति द्रष्टव्यम् । एतावता पादव्यवस्थारूपलक्षणे मन्त्रत्वे सतीति विशेषणं सूचितम् । मन्त्रत्वविशेषणादेव श्लोके नातिव्याप्तिरिति द्रष्टव्यम् । गीतिषु गीतिविशिष्टमन्त्रेषु केवलासु गीतिषु चापि सामेत्याख्येति । अत्र विचारविस्तार आकरे द्रष्टव्यः । शेषे यजुःशब्दः । ऋक्सामाभ्यां यदन्यत्प्रश्लिष्टपठितं मन्त्रजातं तद्यजुरित्यर्थः । मन्त्रजातमिति ब्राह्मणव्यावृत्त्यर्थम् । सर्वमन्त्राद्यन्ते च प्रणवो वक्तव्यः । ओमिति ब्रह्म । ओमितीदं सर्वमिति श्रुतेः । ॐकारमग्रे प्रयुञ्जीतैष एव हि पुरस्ताद्यज्ञस्य युज्यत एष पश्चात्सर्वे त एष एव यज्ञा यत इत्याथर्वणश्रुतेश्च । एष एव प्रणव एव । सर्वे [illegible] यज्ञा यस्माद्यत आदौ पश्चाच्च स प्रयोक्तव्य इत्यर्थः । ऋष्यादीनां ज्ञानमात्रमावश्यकं न तु तत्तद्वाचकशब्दोच्चारणमपि । शिष्टा उच्चारणमपीदानीं कुर्वन्ति तद्लोक ऋष्यादि ज्ञायतेऽनेनेति ख्यापनार्थम् । इदानीं श्रौत ऋग्वेदिनः शिष्टा ऋष्यादिस्मरणं प्रणवोच्चारणमपि न कुर्वन्ति । तैत्तिरीयास्तु श्रौते गार्ह्ये च न कुर्वन्ति । तत्र श्रौते न कुर्वन्तु ऋग्वेदिवत् । गार्ह्ये तु पक्षान्तरस्याभावात्सर्वैः कर्तव्यमेवेति यदुक्तं तद्भ्रममिति सुस्थम् । जपान्यजपविस्वैकश्रुत्यैव सर्वत्र मन्त्रपाठः । तथा च पाणिनिः—यज्ञकर्मण्यजपन्यूङ्खसामसु इति । एकश्रुति दूरात्संबुद्धाविति सूत्रादेकश्रुतीत्यनुवर्तते । कात्यायनस्तु—मन्त्रे स्वरक्रिया यथाम्नातमविशेषाद्भाषिकस्वरो वोपपन्नमन्त्रोपदेशात्तानो वा नित्यत्वादिति तानस्वरमेवाऽऽह । कर्मणि प्रयुज्यमाने मन्त्रे आम्नातस्वरेण प्रयोगः । कुत एतत् । अविशेषात्र विशेषोऽवसातुं शक्यतेऽनेन स्वरेणानेन वा प्रयोग इति । तस्मात्समाम्नायस्वरः । एवं प्राप्त आह—भाषिकस्वरो वोपपन्नमन्त्रोपदेशादिति । वाशब्दः पक्षव्यावृत्त्यर्थः । भाषिकस्वरो वा भवति । ब्राह्मणस्वरो न मन्त्रस्वरः । कुत एतत् । उपपन्नस्वरस्यैव मन्त्रस्य विद्यमानस्वरस्य ब्राह्मणे स्वरान्तरोपदेशो भवति । तस्माद्ब्रा-

पिकः स्वरः । एवं प्राप्त उत्तरसूत्रम्—तानो वा नित्यत्वादिति । वाशब्दः पक्षान्तरपरिग्रहे । नैतदस्ति यद्भाषिकः स्वर इति । किंतु तानेन प्रयोगः । एकश्रुत्या प्रयोग इत्यर्थः । कुत एतत् । स्मर्यते ह्येवम्—एकश्रुति दूरात्संबुद्धौ, यज्ञकर्मण्यजपन्यूङ्खसामस्वित्येवमादिवर्जितानां मन्त्राणामेकश्रुत्या तानेन प्रयोगो नित्यत्वात् । नित्यं वैदिकं वचनं स्मृतीनां तन्मूलं तत्त्वादिति व्याख्यातृभिर्व्याख्यातम् । द्वादशाध्याये तृतीयपादे भाषास्वरोपदेशेष्वैरवत्प्रवचनप्रतिषेधः स्यात् । मन्त्रोपदेशो वा न भाषिकस्य प्रायापत्तेर्भाषिकश्रुतिः । विकारः कारणाग्रहे । इति त्रिभिः सूत्रैर्जैमिनिनाऽप्युक्तम् । भाषास्वरशब्देन—

छन्दोगा बह्वृचाश्चैव तथा वाजसनेयिनः ।
उच्चनीचस्वरं प्राहुः स वै भाषिक उच्यते ॥

इति वचनलक्षितो ब्राह्मणस्वर उच्यते । तदुपदेशेषु प्रवचनसिद्धस्वरस्यैरावद्विधाने प्रवचनसिद्धगिरावदस्यैव निवृत्तिः स्यादिति तानो वा प्रावचनो वेति कात्यायनप्रातिशाख्यसूत्रपक्षे चातुःस्वर्यमपि । ऐकश्रुत्यस्वरूपमाहाऽऽश्वलायनः—उदात्तानुदात्तस्वरितानां परः संनिकर्ष ऐकश्रुत्यमिति । दर्शपूर्णमासयाजमानसूत्रे—प्रत्यगाशिषो मन्त्रान्कर्मकरणाञ्जपति तथोपदिश्यमानानुपतिष्ठतेऽनुमन्त्रयतेऽभिमृशति जपतीति चेति । मन्त्रमयोक्तिरात्मानं प्रत्यागच्छन्तीति प्रतीच इष्टप्रार्थनारूपाः प्रतिपाद्यत्वेन येषां मन्त्राणां ते तथा प्रत्यक्षं मह्यं स्यादित्यात्मगामित्वं तान्मन्त्रान्यजमानो जपति । यजमान एव जपत्येवेति चोभयं नियम्यते । कर्मबाह्या चेष्टा तस्याः करणत्वेन प्रतीतास्ते कर्मकरणास्ते हि तूष्णीकक्रियासु प्राकृतासु विहितास्त्वेव प्रत्यगाशिषो मन्त्रसाकाङ्क्षासु लिङ्गेन तत्र क्रियाप्रतिपादकत्वाल्लक्षणया गच्छन्त्येव । ये स्वकर्मकरणास्तेषां तूष्णीकाः क्रियाः प्रतिगमने सामर्थ्यं नास्ति । दीक्षणीयेष्टिवदेव जपस्याऽऽरादुपकारत्वेऽपि यजमानसंस्कारत्वमपि । अत एव स्वसंस्कारव्यतिरिक्ते कर्मणि प्रतिनिधिः प्रयसतो यजमानस्यार्थे वक्ष्यते । जपस्य संस्कारकत्वान्न तत्र प्रतिनिधिरिति स्वस्यैव प्रयसतो जपो वक्ष्यते । तदेवं जपस्याऽऽरादुपकारकत्वे संपादित एवोपपद्यते । अत्रायं फलितोऽर्थः—अविहितानां जपार्थतया विधिर्जपतीत्येव कल्प्यो यजमानकर्तृकः साक्षात्प्रत्यक्षजपविधिविहितानां विनियोगं जपतीति चेन्यनेन वक्ष्यति । अतो ज्ञायतेऽत्र विधिः कल्प्य इति । उपतिष्ठत इत्यादिषु तथैवानेन जपधर्म-

वच्चैवं यजमानकर्तृकत्वं चातिदिश्यते । उपतिष्ठत इत्यादीनां जपवाचकत्वेऽपि शब्दान्तरैरर्थभेदात्कर्मभेदो ज्ञेयः । यथा धात्वनुशासनसूत्रेषु यज दाने, हु दाने, डुदाञ् दाने, इत्यादीनां समानार्थत्वेऽपि रूढ्याऽर्थभेदादपर्यायत्वेन शब्दान्तरैः कर्मभेद एवमन्यत्रापि । सर्वत्रोपस्थानादिषु जपत्वे सत्यपि चासाधारण्येन व्यपदेशा भवन्तीति न्यायाच्चागृहीतविशेषणान्यायेन चोपसर्गविशिष्टैर्धातुभिर्विशिष्टमेव वाच्यमिति विशिष्टनामैव व्यपदेशः । उपस्थानमनुमन्त्रणमभिमन्त्रणमभिमर्शनमिति । केवलेऽपूर्वोत्पादके मन्त्रोच्चारणे तु जप इति व्यपदेशः । उच्चारणप्रधानता तु सर्वत्र न व्यभिचरतीति युक्ततरं सूत्रमिति व्याख्यातृभिर्व्याख्यातम् । चकार इतिकरणस्य प्रत्येकं संबन्धार्थः । अविज्ञातस्वरा ये मन्त्रास्त एकश्रुत्यैव वक्तव्या इति जयन्तः । परिभाषासूत्रे—यज्ञकर्मार्था मन्त्रा रूपविप्रतिषेधाल्लौकिकेषु यथा गृह्णामि ते सुप्रजास्त्वाय हस्तमिमां खनाम्योषधिम् । वह वपां जातवेदः पितृभ्य इति यथोपादिष्टं ब्राह्मणवन्तो यथारूपमितर इति । यथारूपमितर इत्यनेनाविनियुक्तानां विनियोगः सामान्यतः प्रदर्श्यते । अन्यच्च तत्रैव—उपांशु यजुर्वेदेन क्रियतेऽन्यत्र प्रवरसंवादाश्रावणसंप्रैषेभ्य उच्चैरनाम्नाय सर्वत्रोपांशु ज्योतिष्टोमे प्रागग्नीषोमीयादिति । सर्वैर्यजुर्ऋग्वेदसामवेदैः । उपांशुलक्षणं प्रातिशाख्ये—करणवदशब्दममनःप्रयोग उपांश्विति । परिभाषासूत्रे—यावदर्थोऽपवृज्यते स एको मन्त्र इति । यावदित्यस्य यावतेत्यर्थः । सुपां सुलुगित्यनेन सुपो लुक् । तथा—आदिप्रदिष्टा मन्त्रा भवन्त्युत्तरस्याऽऽदिना पूर्वस्यान्तं विद्यादिति । तथा मन्त्रान्तेन कर्म संनिपातयेदिति । मन्त्रान्त्याक्षरोच्चारणसमकालं कर्मारम्भ इत्यर्थः । अत्राऽऽपस्तम्बो विशेषमाह—आघारे धारया चाऽऽद्विसंयोग इति । तथा—एकमन्त्राणि कर्माणीति । अत्राऽऽपस्तम्बो विशेषमाह—अपि संख्यायुक्तानीति । वायुपुराणे—

मन्त्रो मन्त्रयतेर्धातोर्ब्राह्मणो ब्रह्मणोऽणनात् ॥ इति ।

अत्र मन्त्रयतिर्धातुर्विचारणार्थे वर्तते साक्षात्परम्परया वाक्येन चेति ज्ञेयम् । ब्रह्मणो वेदस्याणनाद्विधानादित्यर्थः । सूत्रलक्षणमपि तत्रैव—

अल्पाक्षरमसंदिग्धं सारवद्विश्वतोमुखम् ।
अस्तोभमनवद्यं च सूत्रं सूत्रविदो विदुः ॥ इति ।

अस्तोभं निरर्थकाक्षररहितम् । अनवद्यमनुपमम् । वेदार्थबोधनात् । यत्र व्याचष्ट इति शब्देन विधिस्तत्र ब्राह्मण एव पाठो नियतः । यत्र सूत्रकृता सांनिध्येन मन्त्रः पठ्यते तत्र मंत्रत एव पाठो नियतः । एतदन्यत्र स्वर्थादानियम इति व्यवस्था द्रष्टव्या । परिभाषासूत्रे—यत्रैकस्मिन्द्रव्ये चेष्टापृथक्त्वेनार्थौ निष्पद्येते सकृदेव तत्र मन्त्रं ब्रूयाद्यथा प्रोक्षणे यूपच्छेदने चेति । त्रिः प्रोक्षतीत्युदाहरणम् । द्वितीयोदाहरणं सादृश्येनाभ्यासदर्शनार्थं व्यवस्थेतरत्वप्रदर्शनार्थं च । पात्राणीति जात्या पात्रत्वेन समुदायस्य क्रोडीकारेणैकत्वादेकवचनम् । न त्वेकवचनान्तत्वेनैव व्यवस्थेतरत्वेनैव वा, उद्देश्यैकवचनस्याविवक्षितत्वात् । यथा बर्हिरासाद्य प्रोक्षणीति बर्हिःशब्देनैकधर्मेण क्रोडीकृतमेकं द्रव्यमिति । तथा द्रव्यपृथक्त्वेऽभ्यावर्तेत यथाऽऽज्यग्रहणे लवने स्तरणे चेति । यद्यप्याज्यशब्देनैकमेव द्रव्यं तथाऽपि षोडशाऽऽज्यानि भवन्तीत्यवान्तरद्रव्यभेदः । बर्हिर्लुनातीत्यादौ द्रव्यैकत्वेऽपि मुष्टिमात्रस्यावयवत्वं यतः मुष्टिं दातीति विधानात् । बर्हिषा वेदिं स्तृणातीत्येकद्रव्यत्वेऽपि त्रिधातु पञ्चधातु वेति विभागेन स्तरणविधानात् । धातौ धातौ मन्त्रमावर्तयतीत्यग्रिमं सूत्रं तु बर्हिषः संसृष्टद्रव्यस्यैकत्वेन द्रव्यपृथक्त्वेनाऽऽवृत्त्यप्राप्तावपि निधनोपाधिना द्रव्यपृथक्त्वं मा भूदित्यनु धातूपाधिनैवेति नियमार्थमुक्तम् । अत्र भरद्वाजो विशेषमाह—मन्त्रव्यवाये मन्त्राभ्यासो द्रव्यपृथक्त्वेऽर्थपृथक्त्वे देशपृथक्त्वे च यथा कण्डूयनस्वपनदीतरणाभिवर्षणावेक्षणप्रतिमन्त्रणानीति । जैमिनिमते तु न । तथा चैकादशाध्याये चतुर्थपादे तत्सूत्रम्—कण्डूयने प्रत्यङ्गं कर्मभेदात् । सूत्रार्थस्तु कण्डूयने प्रत्यङ्गं मन्त्रावृत्तिः स्यात्कर्मभेदादिति । अपि वा चोदनैकत्वादेककर्म स्यादिति । अपि वेति पूर्वपक्षव्यावर्तकः । दुःखानां भिन्नत्वेऽपि तदपनयनं सर्वत्र विवक्षितं न तु स्वरूपेण चिकीर्षितम् । आत्मानं कण्डूतिदुःखाक्षिप्तचित्तमपनीतकण्डूदुःखं कर्तुं कण्डूयनं क्रियते । तेन यावता दुःखेनानपनीतेनाऽऽत्मनि दुःखं भवति तावत्सर्वमपनेतुमभिसंधाय कण्डूयनमुपक्रमत इति कृत्वा चोदनैक्यं भवति । तत ऐककर्म्यमेव भवति । नाप्यङ्गसंस्कारो येन तद्भेदाद्भेदः स्यात् । यावदपनीतं दुःखमा-

त्यनन्तरमास्तरणसर्वोपनयनाभिसंधानपूर्वकं कण्डूयनोपक्रमकर्त्रा प्रयुक्तो मन्त्रोऽगृह्यमाणविशेषत्वात्तन्त्रं भवतीति । तथा तत्रैव स एव स्वप्ननदीतरणाभिवर्षणामेध्यप्रतिमन्त्रणेषु चैवमिति । एवमित्यनेन चोदनैक्यादित्यस्यानुवृत्तिः । अत्राप्यभिसंधानेनैव सर्वत्र चोदनैक्यं द्रष्टव्यम् । शुल्वबेष्टने प्रतिधातु मन्त्रावृत्तिः । मध्य आवेष्टनक्रियायाः संधानमन्त्रेण व्यवधानात् । द्रव्यपृथक्त्वे दर्शितैव । अर्थः प्रयोजनं तस्य पृथक्त्वे कृष्णाजिनादानमवहननार्थं पेषणार्थं चेति । देशपृथक्त्वे—दक्षिणकपालयोग उत्तरकपालयोगे चेति । परिभाषासूत्रे—अर्थपृथक्त्वात्कण्डूयनमन्त्रोऽभ्यावर्तेत इति । अत्र कालव्यवायकृतमर्थपृथक्त्वं द्रष्टव्यम् । तथा—परार्थोऽन्येकेन क्रियेरन्यथा कपालेनोपवापो यजमानेन संमितौदुम्बरी भवतीति । परार्थस्तुषोपवापः एकेनैव कपालेन कर्तव्यः । नानायजमानेषु कर्मसु द्वादशाहादिषु स्वर्गफलार्थं प्रवृत्तानां यजमानानां मध्य एकेन यजमानेनौदुम्बरीमानं कर्तव्यम् । तावतैव शास्त्रार्थो निष्पन्नो भवतीत्यर्थः । इतिशब्दः प्रकारार्थः । तथा—उत्तरत उपचारो विहार इति श्रुतिरेव । उत्तरत उपचारो यज्ञ इति शाखान्तरे । तसिस्तृतीयार्थे । विहारस्य य उत्तरभागस्तेनोप समीपे चारो गमनागमनकार्यं यत्र । न दक्षिणभागेनेत्यर्थः । अनिर्दिष्टदेशाः क्रिया विहारस्योत्तरतः कार्याः । पित्र्यास्तु क्रिया दक्षिणतो विहारस्य । दक्षिणावृद्धि पितृणामिति वाक्यशेषादित्यापस्तम्बसूत्रव्याख्यातारः । तथा—प्राङ्न्यायान्युदङ्न्यायानि वा प्रदक्षिणं यज्ञे कर्माणि करोतीति । प्राङ्ङुदङ्ङिति वा कर्माणि संतिष्ठेरन्निति श्रुतेः । प्रागपवर्गाण्युदगपवर्गाणि वा करोतीति समाप्तिर्निरूप्यते । तथा प्रादक्षिण्यं नियम्यते । कात्यायनेन चाऽऽवृत्तौ सामन्ते प्राङ्ङुदङ्ङिच प्रदक्षिणमिति श्रुत्यनुसारेणोक्तम्—प्राङ्ङुदङ्ङावृत्तौ सामन्ते च प्रदक्षिणमिति । कर्मावृत्तौ प्राङ्न्यायानीत्यादि । सामन्ते समन्ताद्विहिते कर्मणि प्रदक्षिणमिति नियमः । तेन न सर्वत्र प्राङ्न्यायान्युदङ्न्यायानीति । नापि प्रदक्षिणमिति किंतु पूर्वोक्तव्यवस्थयेति व्याख्यातारः । नीयन्ते परिसमाप्यन्ते यानि तानि । यज्ञग्रहणं वैतानिककर्ममात्रग्रहणार्थम् । या स्मृतिः पित्र्येषु दक्षिणापवर्गाण्यप्रदक्षिणं कर्माणीति सा स्मार्तेष्वेव । अत्र यज्ञग्रहणेन प्रत्यक्षदर्शितश्रुत्यनुसारेणाविशेषेण दैवपित्र्येषु प्राङ्न्यायान्युदङ्न्यायानि वा प्रदक्षिणमिति च नियम्यत इति । तथा—समानजातावेकाधि-

नुसमेति कृत्स्नमेकैकमपवर्जयतीति । सजातीये विजातीये कर्मणि संस्कार्येषु पदार्थेषु मध्य एकमेकमेव पदार्थमनुक्रमेण सजातीयेनैकेनैव कर्मणाऽनुसमेति संबध्नात्यनन्तरं तथैव विजातीयेनापीति । सोऽयं पदार्थानुसमय इति व्यपदिश्यते क्रमविशेषः । अथ पदार्थानुसमय उच्यते कृत्स्नमित्यादिना । चतुरो मुष्टीन्निर्वपति कपालान्युपधायापदधातीत्याद्युदाहरणम् । तथा संयुक्तानि त्वेकापवर्गाणि यथाऽवदानप्रदाने उद्वपनं निष्पवनं चेति प्रधानसंनिकर्षात्क्रियन्त इति । कात्यायनोऽपि—तुल्यसमवाये सामान्यपूर्वमानपूर्व्ययोगादित्यनेन पदार्थानुसमयं प्रदर्शितवान् । नैककर्मणि संबन्धादित्यनेन निर्वापकपालोपधानादावपि पदार्थानुसमयप्राप्तिं निवारितवान् । ग्रहणसादनावदानेषु तु वचनादिति सूत्रेण पदार्थभेदेऽपि संयुक्तत्वेन काण्डानुसमय एवैतेष्विति प्रदर्श्यते । न द्रव्यभेदे गुणयोगादिति वाक्य इत्यनेन सप्तदशसु प्राजापत्येष्ववदानस्य प्रदानान्तता व्यावर्त्यते । सूत्रे—न यज्ञाङ्गेनाऽऽत्मानमन्तं चाऽभिपरिहरतीति । यज्ञाङ्गेन स्फ्यादिनाऽऽत्मानमन्यं चाऽभिलक्षीकृत्याऽऽगच्छन्नोष्ठादि न परिहरति दूरी करोति । तथा शूर्पादिना धूमादिबाधाऽपि न परिहर्तव्या नापि मक्षिकाविनिवारणम् । आत्मसहचरितो जीव एवान्यो गृह्यते । तेन यज्ञपात्रैर्यज्ञपात्राणां मक्षिकादिनिवारणे न दोषः । अस्मरणेन परिहारे कृते सर्वप्रायश्चित्तं कुर्यादिति । तथा न विहारादपपर्यावर्तेत इति । न विहारादपरिच्छिद्य वर्तेत इत्येकं वाक्यम् । अपच्छेदनं व्यावर्तनं पृष्ठतः करणमिति यावत् । तथा चाऽऽश्वलायनः—विहारादव्यावृत्तिस्तत्र चेत्कर्मेति । द्वितीयं वाक्यं विहारं प्राप्य न पर्यावर्तेत इति । ल्यब्लोपे पञ्चमी । आत्मानं परीत्य नाऽऽवर्तेत इति । स्पष्टमेतदुक्तं बोधायनेन—यदि प्राङ्दक्षिणेनांसेन पर्यावर्तेत यदि प्रत्यङ्सव्येनेति । भरद्वाजोऽप्येवम् । तथा चाऽऽत्मानं मध्ये कृत्वा न पर्यावर्तनीयमित्यर्थः । कात्यायनः—गार्हपत्याहवनीयौ न व्यवेयाद्विवृत्याऽऽहृत्य चेतरथाऽऽहुतिरतीत्य निष्क्रमणमुत्तरत उपचारो यज्ञो दक्षिणतो ब्रह्मयजमानयोरासने पश्चाद्यजमानो वेदिस्पृगिति । परिभाषासूत्रे—अन्तराणि यज्ञाङ्गानि बाह्याः कर्तार इति । अन्तराणि यज्ञाङ्गानीत्यत्र केषामित्यपेक्षायामग्नीनां प्राधान्यादुपस्थितिस्तेषामन्तराणि । अन्तरशब्दः परिधानवाची । ततस्तु परिधानमिव संलग्नानि समीपस्थानीत्यर्थः । बाह्या बहिर्भवाः । केभ्य इत्याकाङ्क्षायां यज्ञाङ्गेभ्य इत्युपस्थितत्वात् ।

अतस्तान्यन्तराणि समीपस्थानि तेषामग्नीनां च मध्ये कर्तृभिर्न संचरणीयमित्यर्थः । कर्तृणां मध्ये यजमानोऽन्तरः । ततः पत्न्येव बाह्या । ताभ्यामध्वर्युरेव । तेभ्यो ब्रह्मैव । ततो होतैव । तत उद्गातैव । एवमन्य उत्तरोत्तरं यथायथम् । यज्ञाङ्गानि कर्तृव्यतिरिक्तानि सर्वाणि यज्ञार्थद्रव्याण्यभिधीयन्ते । पारिशेष्यादेव कर्तृणां बाह्यत्वे सिद्धे बाह्याः कर्तार इति वचनं यजमानपत्न्योरपि बाह्या ऋत्विजो भवेयुरिति ख्यापनार्थम् । तथर्त्विजामपि परस्परं जघन्यो बाह्य इति । उक्तं चाऽऽश्वलायनेन—उत्तरेण होतारमतिव्रजेद्दक्षिणेन दण्डं हरेदिति । एतत्सर्वं बोधायनः स्पष्टमाह—न मन्त्रवता यज्ञाङ्गेनाऽऽत्मानमभिपरिहरेदभ्यन्तराणि यज्ञाङ्गानि बाह्या ऋत्विजः पत्नीयजमानावृत्विग्भ्योऽन्तरा यज्ञाङ्गेभ्य आज्यमाज्याद्धवींषि हविर्भ्यः पशुः पशोः सोमः सोमादग्नयो यथाक्रममृत्विजो न विहारादभिपर्यावर्तेरन्नाङ्गच्छन्दक्षिणमंसमभिपर्यावर्तयेरन्नङ्गच्छन्सव्यमिति । तथा प्राचीनावीती पित्र्याणि करोति यज्ञोपवीती दर्शपूर्णमासयोरग्निहोत्रे चानियमोऽन्यत्रेति । दर्शपूर्णमासाग्निहोत्रेभ्योऽन्येषु कर्मसु पित्र्येषु यज्ञोपवीतीत्यनियमे नियमो नास्ति । यथा स्मृत्या प्राप्तं तथैवेति । यत्र प्राचीनावीतिता स्पष्टमुक्ता तत्रैव । अन्यत्र सर्वत्र यज्ञोपवीतितैवेति । मानुषेषु कर्मसु गार्ह्येषु निवीतिता द्रष्टव्या । एवं यत्र स्पष्टं वचनं तत्रैवाप्रादक्षिण्यं नान्यत्रेत्यपि द्रष्टव्यम् । तथा चोदनासंयोगात्प्रधानान्येककालानि तेषां विभवन्ति तन्त्रमङ्गान्यविप्रतिषेधात्सवर्तेरन्त इति । तथा नानाकालेषु पृथक्त्वः प्रधानस्य कालः सोऽङ्गानां स देशः स कर्ता सोऽग्निरिति । तथा—आधानप्रभृति यावज्जीवं पात्राणि धार्यन्ते तेषां प्रतितन्त्रं संस्कारोऽभ्यावर्तेत इति । तथा यजुर्वेदेनाध्वर्युः करोत्यृग्वेदेन होता सामवेदेनोद्गाता वचनलक्षणा इतरे यथाऽश्वमेधे पशुकर्मस्वेति । तृतीयप्रश्ने—अन्यत्रस्मिन्नर्थे द्रव्ये तेनार्थेन संयुज्यमाने धर्मान्तरे उत्तरे प्राजिनमासादयत्यत्रे पशुस्तिष्ठत्यग्नि परिधौ पशुं नियुञ्जन्तीति । तत्रैव दर्विहोमान्व्याख्यास्यामो जुहोतीति चोद्यमाने दर्विहोमो यत्र च स्वाहाकारेणाज्यस्य पूर्णाहुतिकेनाऽऽज्येन सकृद्गृहीतेनाग्रेणाऽऽहवनीयं परीत्य दक्षिणतस्तिष्ठञ्जुहोत्यहानीयेऽध्वर्युः स्वाहाकारेण जुहोति द्विप्रभृतिष्वाहुतिगणेषु मन्त्राहुति गृहीत्वा मन्त्राहुतिं समिधोऽभ्याधाय द्विग्राहं जुहोति यत्र मन्त्रगणेन कर्म चोदयेत्प्रतिमन्त्रं तत्र जुहुयादिति । इदं दर्विहोमधर्मविधायकं सूत्रम् । अस्मिन्सूत्रे यः

स्वधाकारो न पठ्यते तत्रापि स्वाहाकार एव न स्वधाकार इति भाष्यकृता नित्यग्रहणप्रयोजनं दर्शितम् । गार्ग्य एवैतद्ब्रवीदित्येतमर्थं दर्शयितुं गृह्यसूत्रे विधानं न तु स्वाहाकारस्यापि विधानम् । वाक्यभेदापत्तेः । अतः स्वाहाकारं सिद्धवत्कृत्वैव तत्र नित्यत्वविधानं क्रियत इत्यवश्यमेव वक्तव्यम् । एवं च श्रौते स्वाहाकारप्राप्तिः सिद्धा भवति । परं तु यत्र पितृयमन्त्रे स्वधाकारो न पठ्यते तत्र स्वाहाकार एवेति श्रौते न भवति किं तु तत्र स्वधाकार एवेति । वायव्याया अजाया वशाया यागे जयाभ्यातानराष्ट्रभृद्धोमा विहितास्तत्रान्तिमाभ्यातानहोमे स्वधाकार एव तस्यापाठेऽपि न स्वाहाकारः । एवं चानित्यत्वं स्वाहाकारस्येति युक्तमेव । अत्राऽपि गार्ग्यपरिभाषार्थप्रवृत्तिरिष्टा स्यात्तदाऽन्यैव परिभाषा कृता स्यात् । श्रौते कृतानां परिभाषाणां तु गार्ग्ये प्राप्तिः श्रौतमध्ये गृह्यसूत्राम्नानबलादाकाङ्क्षितत्वात्पूर्वत्र कृतानां परिभाषाणामुत्तरत्रानुवृत्तेर्युक्तिसहत्वाच्च । समिदाधाने तु न स्वाहाकारः । तस्य जुहोतिचोदितत्वाभावात् । समिधमाधाय हुत्वोपस्थाय वेति ब्रह्मत्वसूत्र आधानहोमयोः पृथग्ग्रहणादेव ज्ञायते यत्र जुहोतिचोदना नास्ति तत्र स्वाहाकारः कुत्रापि नास्तीति । यत्रास्ति पाठेन स्वाहाकारस्तेऽपि दर्विहोमा एव । अन्यत्र स्वाहाकारे अश्रद्धाजाड्यानेन परिहृतम् । सूत्रान्तरे किंचिन्मूलं दृष्ट्वा कल्पयन्ति । यथाऽऽपस्तम्बेन सूक्तवाक्ये न स्वाहाकार इत्युक्तं तत्र स्मरत्स्वकारस्य पक्षे तु न चाऽऽशङ्का न चोत्तरम् । आश्वलायनमते तु मन्त्र आदौ मध्येऽपि स्वाहाकारसत्त्वेऽन्ते स्वाहाकारो न भवति । तथा च तत्सूत्रं—न चेन्मन्त्रे पठित इति । अन्ते स्वाहाशब्दसत्त्वेऽपि

मन्त्रान्ते या वह्निजाया सा तु मन्त्रस्वरूपिणी ।
तदन्तेऽन्या प्रयुञ्जीत होमार्थं सा प्रकीर्तिता ॥

इति शक्तिसंगमतन्त्रवचनादन्योऽपि स्वाहाशब्दो मन्त्रान्ते स्वाहाशब्दसत्त्वेऽपि तान्त्रिकैरेव प्रयोज्यो न वैदिकैरिति द्रष्टव्यम् । कात्यायनः—गार्हपत्ये संस्कारा इति । प्रतितपनाद्याः संस्कारा भवन्तीति शेषः । स एव—घृतमाज्ये लिङ्गात्तस्य होमोऽनादेश इति । धर्मसूत्रे—नाप्रोक्षितमिन्धनमग्नावादध्यादिति । अग्निस्थोधने विशेषस्तत्रैव । न चैनमुपधमेदिति । अपयत इत्येव । पुनमाग्निमपयनो नोपधमेदिति । प्रयतस्य न

दोष इत्येके । अपर आहुः । रुक्मेन नोपधमेत् । नाग्निं मुखेनोपधमेदिति मानवे दर्शनात् । स्मृत्यन्तरे तु—

मुखेनोपधमेदग्निं मुखादग्निरजायत ॥

इति विधानादुभयोर्विकल्प इति । अपर आह—वाजसनेयके श्रौतप्रकरणे मुखादग्निरजायत तस्मान्मुखेनोपसमिन्धत इति दर्शनाच्छ्रौते मुखेनोपधमनमन्यत्र स्मार्तः प्रतिषेध इति । अ ये तु वेणुनेनाऽऽस्येन वा समुपिरेणोपधमनमिच्छन्ति । एवमग्नेर्मुखव्यापारस्यान्वयाच्छ्रुतिरप्यनुगृहीता भवति । आस्यबिन्दूनां पतनशङ्काभयात्प्रतिषेधस्मृतिरपीति । संग्रहे—

धमनीदन्तरा कृत्वा तृणं वा काष्ठमेव वा ।
मुखेनोपधमेदग्निं मुखादग्निरजायत ॥
वेणोरग्निप्रसूतत्वाद्वेणुरग्नेश्च पावनः ।
तस्माद्वेणुधमन्यैव धमेदग्निं विचक्षणः ॥ इति ।

श्रुतिरपि—तेजो वै वेणुस्तेजः अग्न्यस्तेजसैव तेजः समर्धयतीति । अत एवाग्नेर्वेणुस्पर्शनिषेध उक्तः । स्मृत्यन्तरे—न वेणुनाऽग्निं स्पृशेदिति । सम्पर्शे निषिद्धे किमु वक्तव्यमभ्याधाननिषेध इति । अत्र वर्ज्यान्याह देवलः—

वस्त्रेण वाऽथ पर्णेन पाणिशूर्पस्यदारुभिः ।
न कुर्यादग्निधमनं न कुर्याद्व्यजनादिना । इति ॥

संग्रहे—

पर्णेन धमने व्याधिः शूर्पेण धननाशनम् ।
पाणिना मृत्युमाप्नोति दारुणा कान्तिनाशनम् ॥
वस्त्रेण स्त्रीविनाशः स्यादास्येनाऽऽयुःक्षयो भवेत् ॥ इति ।

यत्तु मुखेन धमनक्रियेति मुखधमनस्य प्रतिबर्जनं तत्साक्षान्मुखधमनस्यैव न तु धमनीमन्तरा कृत्वेत्यनेन विहितस्यापीति द्रष्टव्यम् । आज्यादीनामतिग्राहस्य एकाज्यस्थाल्यसम्भवेनानेका महत्य आज्यस्थाल्य उपयोक्तव्याः । प्रदर्शितं चास्याचार्येण—असंभवाद्वा यथाऽश्वमेधे पशुकर्मास्त्यनेन सूत्रेण । तास्वेव स्थालीषु पृथक्पृथक्सपत्नं निर्वापादि । अथवैकस्यामेव पृथक्पृथङ्निर्वापः कार्यः । प्रायोगिकास्तु सम्प्लवे स्थालीगताज्य एव लौकिकं सर्पिरानीय तेन कर्म कुर्वन्ति ।

भरद्वाजः—ज्वलत्येव सर्वा आहुतीर्जुहुयादिति । ज्वलतीत्यग्निविशेषणम् । प्रवृत्ते कर्मणि नियतस्य काल आगते नियतं कर्तव्यमेव । अकरणे दोषः स्यादित्याह कात्यायनः—प्रवृत्ते नियतं दोषविशेषादिति । तथा स एव—स्रावलूनच्छिन्नावहतपिष्टदुष्टदग्धेषु पशुप्रक्रियासंभवादिति । आपस्तम्बः—मन्द्रेण प्रागाज्यभागाभ्यां प्रातःसवने च मध्यमेन प्राक्स्विष्टकृतो माध्यंदिने च क्रुष्टेन शेषे तृतीयसवने च वाक्संद्रयश्च तद्वदिति । आदितस्त्रयश्चकारास्तत्तत्सवनमध्यवर्तिनां पाशुकानां च तत्तत्स्वरप्राप्त्यर्थाः । पत्नीसंयाजानां सवनस्वरो न भवति । पशुवत्पत्नीसंयाजा इति वचनात् । वाचो गतिर्वाक्संद्रवः । विलम्बितो मध्यमो द्रुत इति । मन्द्रादिवत्सवनानुक्रमेण प्रागाज्यभागानुक्रमेण च विलम्बितादयो भवन्तीत्यर्थः । चशब्दस्त्वेतेषु स्थानेषु स्वरान्तरोपदेशात्प्राकृतस्वरो यथा निवर्तते तथा विलम्बितादयो न निवर्तन्त इति नियमार्थः । यथा सामिधेनीप्रभृत्युपांशु यजतीति । पौनराधेयिक्यामुरसि मन्द्रं कण्ठे मध्यमं शिरसि तारमिति । प्रातिशाख्ये मन्द्रमध्यमताराणां लक्षणान्युक्तानि । तारः क्रुष्टः क्रौश्च इति पर्यायाः । आश्रुतादीनामुच्चैःस्वरविधानार्थमेतेषां सूत्राणामारम्भः । स एव—जुहोतीति चोद्यमाने सर्पिराज्यं प्रतीयादध्वर्युं कर्तारं जुहूं पात्रं व्यापृतायां स्रुवेणेति । भरद्वाजो विशेषमाह—प्रचरण्या सोम इति । तथाऽन्यमप्याह विशेषमापस्तम्बः—हौत्रायाजमानेषु समुच्चय इति । हौत्रा इति होतृकर्तृकाः क्रियमाणानुवादिनो मन्त्रा अभिधीयन्ते । याजमाना ये नैकवेद आम्नाताः । हौत्राश्च याजमानाश्च हौत्रायाजमानाः । तेषु हौत्रायाजमानेषु समुच्चयो वेदितव्यः । उच्छ्रयस्व वनस्पत इति यूपोच्छ्रयणार्था ऋचो होतुः सुब्रह्मण्यानुमन्त्रणं स्तोत्रानुमन्त्रणं चाऽऽध्वर्यव औद्गात्रे च वेदे यजमानस्य च समुच्चीयते । तथा स एव विकल्पो याज्यानुवाक्यानाम् । याज्यानुवाक्ययोरपि हौत्रत्वात्प्रकृतस्य समुच्चयस्यायमपवादः । द्वादशाध्याये तृतीयपादे जैमिनिरपि–होत्रास्तु विकल्पेरन्नेकार्थत्वात् । क्रियमाणानुवादित्वात्समुच्चयो वा हौत्राणामेति । हौत्रा होतृसंबन्धिनो ये मन्त्रास्ते त्वेकार्थत्वादेककार्यत्वाद्विकल्पेरन् । एकेन मन्त्रेण कार्यसिद्धावितरेण न कार्यमस्तीति युक्तस्तत्र विकल्पः । एवं क्रियमाणानुवादिष्वपि प्राप्ते तन्निरासाय क्रियमाणानुवादित्वादित्येतत्सूत्रम् । अन्वर्थं क्रियमाणकर्मानुवादिनो मन्त्रा उच्छ्रयस्व वनस्पत इत्यादयस्तेषां तु क्रियमाणानुवादित्वा-

रसमुच्चय एव हौत्रत्वेऽपि नतु विकल्प इत्यर्थः। क्रियमाणानुवादिनस्त्वध्वर्युणा क्रियमाणस्य कर्मणः स्मृत्यविच्छेदार्थाः। अविच्छेदश्चाऽऽन्तादपेक्षित इति सर्वेषां समुच्चय इति। एकफलावच्छिन्नानेकक्षणनिचयरूपत्वादुच्चारणाभिक्रियायाश्चरमक्षणपर्यन्तं स्मृतेरपेक्षितत्वात्स्मृत्यविच्छेदः प्रयोजनो भवतीति द्रष्टव्यम्। प्रथमाध्याये सूत्रेऽपि—समभ्युच्चीयरन्हौत्राण्यन्यत्र याज्यानुवाक्याभ्य इति। एकमन्त्राणि कर्माणीति सूत्रेण प्राप्तमेकमन्त्रत्वं तद्धौत्रेऽपोद्यते। हौत्रत्वाद्याज्यानुवाक्ययोरपि प्राप्तौ तां वारयितुमन्यत्र याज्यानुवाक्याभ्य इति। सूत्र एव क्रियमाण हौत्राण्युच्यन्त इति मन्त्रान्तेन कर्म संनिपातयेदित्यस्यापवादः। आपस्तम्बः—सरयासु च रद्वादिति। दक्षिणासु वक्ष्यमाणासु समुच्चयस्यापवादः। सरयासु निर्दिष्टासु तद्दक्षिणाभूतानां द्रव्याणां विकल्प इत्यर्थः। सप्तविंशतिः षष्टिः शतं द्वादशेति। तथा स एव—क्रयपरिक्रयसंस्कारेषु द्रव्यसमुच्चय इति। क्रयः सोमक्रयः। तत्राजाहिरण्यादिद्रव्याणां समुच्चयः। परिक्रयो दक्षिणादानम्। तत्र बहूनां द्रव्याणां विनियुक्तानां समुच्चयः। यथाऽऽधाने मिथुनौ गावौ ददाति वासो ददातीति। अग्न्याधेयीयायां हिरण्यं ददाति ताप्यं ददाति धेनुं ददातीति। संस्कारो दीक्षितसंस्कारः। तत्र दण्डमेखलादीनां समुच्चयः। तथा स एव—रौद्रराक्षसनैर्ऋतपैतृकच्छेदनभेदननिरसनात्माभिमर्शनानि च कृत्वाऽप उपस्पृशेत्। उत्तरत उपचारो विहारो नाभिरपपर्यावर्तेत न विहारादिति। रुद्रो देवता यस्य तत्प्रधानं वा कर्म रौद्रम्। रक्षांसि देवता यस्य तत्प्रधानं वा कर्म राक्षसम्। निर्ऋतिर्देवता यस्य तत्प्रधानं वा नैर्ऋतम्। पितरो देवता यस्य तत्प्रधानं वा कर्म पैतृकम्। छेदनं द्वैधीकरणम्। भेदनं विदारणम्। रौद्रेणानीकेनेत्यत्र नोदकोपस्पर्शनम्। अनीकविशेषणत्वात्। बहुवचनान्तेऽपि रुद्रशब्दे उदकोपस्पर्शनम्। यथा रुद्रास्त्वा परिगृह्णन्त्वित्यत्र रौद्रत्वात्कर्मण इति केचित्। अन्ये तु रुद्रप्राधान्याभावात्तदनुपकारकेऽस्मिन्कर्मणि नोदकोपस्पर्शनम्। ब्राह्मण वस्वादिभिर्देवतोपकारश्रवणादिति वदन्ति। अपरे तु एकस्मिन्नेव रुद्रे उपस्पर्शनमित्युपदेश इति वदन्ति। बहुवचनान्ते रुद्रशब्दे उदकोपस्पर्शनं नेच्छन्ति तत्र किं मूलमिति चिन्त्यम्। न च रौद्रत्वे बहुत्वैकत्वयोर्विशेषोऽस्ति। न च रुद्रो वै क्रूर इत्येकस्यैव क्रौर्याभिधानाच्च बहूनामिप्ययमेव विशेष इति वाच्यम्। क्रूरसमुदाय-

स्याक्रूरत्वे नियामकाभावात् । तस्माद्रुद्रा घातुका इति बहुष्वपि दर्शनाच्च । पित्र्यादिष्वपि तथा प्रसङ्गेन पितृभ्यस्त्वा पितॄन्जिन्वेत्यत्र तदभावप्रसङ्गादिति ज्ञेयम् । रक्षसां भागधेयमित्यत्रोपस्पर्शनं कर्तव्यम् । तुषैर्वै फलीकरणैर्देवा हविर्यज्ञेभ्यो रक्षांसि निरभजन्नस्मान्महायज्ञादिति बह्वृचश्रुतिदर्शनात् । वैश्वानरे हविरित्यत्रोपस्पर्शनं भवति पितृतृप्तिकरत्वान्मन्त्रस्य । शुन्धन्तां लोक इति पैतृकम् । तथा पितृणाᳶ सदनमसीति । सर्वरौद्रे सर्वराक्षसे सर्वनैर्ऋते सर्वपित्र्ये नाऽऽवर्तते । यत्र रौद्रादीनां नैरन्तर्येण करणं तत्रापि न प्रतिरौद्रं न प्रतिराक्षसं न प्रतिनैर्ऋतं न प्रतिपित्र्यम् । अत एव सकृदुपस्पर्शनम् । अतः पित्र्ये बलिहरण उपस्पर्शनं न । क्रूरत्वेन रौद्रं बलिहरणमुपस्पृशेत् । प्रतिदिशं केशच्छेदने वपने पवनान्त एवोपस्पर्शनम् । निरसने वाक्यान्तरोपात्तेऽपि भवत्युपस्पर्शनम् । यथा वेदिकरणानि संन्यस्तानीत्यत्र । चकारः स्मार्तस्य कशाद्युपालम्भनिमित्तस्य संग्रहार्थः । अथवा भरद्वाजोपदिष्टानलेखनपरिलेखनयोर्बौधायनोपदिष्टखननस्य च संग्रहार्थः । अग्निं पृष्ठतः कृत्वा यत्पर्यावर्तनं तदपपर्यावर्तनम् । अग्नेरभिमुखमेव क्रियासु पर्यावर्तेतेत्यर्थः । विहारादपि न पर्यावर्तेत । महावेद्यग्नावप्रणीते विहारं पृष्ठतः कृत्वा पर्यावर्तनप्रतिषेधार्थमारम्भो न विहारादित्येतस्य सूत्रस्य । बोधायनः—उत्तरत उपचारो विहारस्तथाऽपवर्गो विपरीतं पित्र्येषु पादोपहतं प्रक्षालयेदङ्गमुपस्पृश्य सिचं वाऽप उपस्पृशेत् । एवं छेदनभेदनखननिरसनपैतृकराक्षसनैर्ऋतरौद्राभिचरणीयेष्वप उपस्पृशेदिति । सिचं वस्त्रदशा । योऽस्मान्द्वेष्टि यं च वयं द्विष्म इत्यादीन्यभिचरणीयानि तेष्वित्यर्थः । सर्वत्रोपस्पर्शशब्दस्योपस्पर्शस्त्वाचमनमिति कोशादाचमनमर्थो यद्यपि तथाऽपि उपस्पृश्याऽऽचम्येदग्निष्टोमयाजमानसूत्राल्लिङ्गात्तु स्पर्शमात्रमेवार्थः । यदि तत्रोपस्पर्शशब्देनाऽऽचमनं विवक्ष्येत तदाऽप उपस्पृश्याऽऽचम्येत्यत्राऽऽचम्याऽऽचम्येति द्विराचम्येत्येव वा लाघवाद्ब्रूयात् । तस्मादेवमत्र ज्ञायत उपस्पर्शशब्देन स्पर्शनमेवेति । कात्यायनः—रौद्रᳶ राक्षसमासुरमाभिचारिकं मन्त्रमुक्त्वा पित्र्यमात्मानं चाऽऽलभ्योपस्पृशेदप उपस्पृशेदप इति । चशब्दान्नमं च कृत्वेत्यस्यार्थस्य लाभः । दर्शयति चैवं श्रुतिः—रुद्रियेणेव वा एतद्वारिपुः शान्तिरापस्ताभिः शान्त्या शमयतीति । द्विरुक्तिः प्रश्नसमाप्तिद्योतनाय । स्मृत्यन्तरे—

स्समुच्चय एव हौत्रत्वेऽपि न तु विकल्प इत्यर्थः । क्रियमाणानुवादिनस्त्वध्वर्युणा क्रियमाणस्य कर्मणः स्मृत्यविच्छेदार्थाः । अविच्छेदश्चाऽऽन्तादपेक्षित इति सर्वेषां समुच्चय इति । एकफलावच्छिन्नानेकक्षणनिचयरूपत्वादुच्छ्रयणादिक्रियायाश्चरमक्षणपर्यन्तं स्मृतेरपेक्षितत्वात्स्मृत्यविच्छेदः समयाजनो भवतीति द्रष्टव्यम् । प्रथमाध्याये सूत्रेऽपि—समभ्यूचीयेरन्हौत्राण्यन्यत्र याज्यानुवाक्याभ्य इति । एवमन्त्राणि कर्मोपेतानि सूत्रेण प्राप्तेष्वमन्त्रत्वं तद्धौत्रेऽप्योच्यते । हौत्रत्वाद्याज्यानुवाक्यास्वपि प्राप्तौ तां वारयितुमन्यत्र याज्यानुवाक्याभ्य इति । सूत्र एव क्रियमाणे होत्राण्युच्यन्त इति मन्त्रान्तेन कर्म संनिपातयेदित्यस्यापवादः । आपस्तम्बः—संख्यासु च रुद्राविति । दक्षिणासु वक्ष्यमाणासु समुच्चयस्यापवादः । संख्यासु निर्दिष्टासु तद्वद्दक्षिणाभूतानां द्रव्याणां विकल्प इत्यर्थः । सहस्रं शतानि षष्टिः शतं द्वादशेति । तथा स एव—क्रयपरिक्रयसंस्कारेषु द्रव्यसमुच्चय इति । क्रयः सोमक्रयः । तत्राजाहिरण्यादिद्रव्याणां समुच्चयः । परिक्रयो दक्षिणादानम् । तत्र बहूनां द्रव्याणां विनियुक्तानां समुच्चयः । यथाऽऽधाने मिथुनौ गावौ ददाति वासो ददातीति । त्रैधातवीयायां हिरण्यं ददाति तार्प्यं ददाति धेनुं ददातीति । संस्कारो दीक्षितसंस्कारः । तत्र दण्डमेखलादीनां समुच्चयः । तथा स एव—रौद्रराक्षसनैर्ऋतपैतृकच्छेदनभेदननिरसनात्माभिमर्शनानि च कृत्वाऽप उपस्पृशेत् । उत्तरत उपचारो विहारो नाभेरपपर्यावर्तेन न विहारादिति । रुद्रो देवता यस्य तत्प्रधानं वा कर्म रौद्रम् । रक्षांसि देवता यस्य तत्प्रधानं वा कर्म राक्षसम् । निर्ऋतिर्देवता यस्य तत्प्रधानं वा नैर्ऋतम् । पितरो देवता यस्य तत्प्रधानं वा कर्म पैतृकम् । छेदनं द्वैधीकरणम् । भेदनं विदारणम् । रौद्रेणाग्निकेनेत्यत्र नोदकोपस्पर्शनम् । अग्नेर्विशेषणत्वात् । बहुवचनान्तेऽपि रुद्रशब्द उदकोपस्पर्शनम् । यथा रुद्रास्त्वा परिगृह्णन्त्वित्यत्र रौद्रत्वात्कर्मेण इति केचित् । अन्ये तु रुद्रप्राधान्याभावात्तदनुपकारकेऽस्मिन्कर्मणि नोदकोपस्पर्शनम् । ब्राह्मणे वस्वादिभिर्देवतोपकारश्रवणादिति वदन्ति । अपरे तु एकस्मिन्नेव रुद्र उपस्पर्शनमित्युपदेश इति वदन्ति । बहुवचनान्ते रुद्रशब्द उदकोपस्पर्शनं नेच्छन्ति तत्र किं मूलमिति चिन्त्यम् । न च रौद्रत्वे बहुत्वैकत्वयोर्विशेषोऽस्ति । न च रुद्रो वै क्रूर इत्येकस्यैव क्रौर्याभिधानाच्च बहूनामपि यमेव विशेष इति वाच्यम् । क्रूरसमुदाय-

स्याक्रूरत्वे नियामकाभावात् । तस्माद्रुद्रा घातुका इति बहुष्वपि दर्शनाच्च । पित्रादिष्वपि तथा प्रसङ्गेन पितृभ्यस्त्वा पितॄन्जिन्वेत्यत्र तदभावप्रसङ्गादिति ज्ञेयम् । रक्षसां भागधेयमित्यत्रोपस्पर्शनं कर्तव्यम् । तुषैः फलीकरणैर्वा हविर्यज्ञेभ्यो रक्षांसि निरभजन्नस्मान्महाद्यज्ञादिति बह्वृचश्रुतिदर्शनात् । वैश्वानरे हविरित्यत्रोपस्पर्शनं भवति पितृतृप्तिकरत्वान्मन्त्रस्य । शुन्धन्तां लोका इति पैतृकम् । तथा पितृणाऽसदनमसीति । सर्वरौद्रे सर्वराक्षसे सर्वनैर्ऋते सर्वपित्र्ये नाऽऽवर्तते । यत्र रौद्रादीनां नैरन्तर्येण करणं तत्रापि न प्रतिरौद्रं न प्रतिराक्षसं न प्रतिनैर्ऋतं न प्रतिपित्र्यम् । अत एव सकृदुपस्पर्शनम् । अतः पित्र्ये बलिहरण उपस्पर्शनं न । कुर्यैव रौद्रं बलिहरणमुपस्पृशेत् । प्रतिदिशं केशच्छेदने वपने पवनान्त एवोपस्पर्शनम् । निरसने वाक्यान्तरोपात्तेऽपि भवत्युपस्पर्शनम् । यथा वेदिकरणानि संन्यस्तानीत्यत्र । चकारः स्मार्तस्य केशाद्युपालम्भनिमित्तस्य संग्रहार्थः । अथवा भरद्वाजोपदिष्टावलेखनपरिलेखनयोर्वापनोपादिष्टखननस्य च संग्रहार्थः । अग्निं पृष्ठतः कृत्वा यत्पर्यावर्तनं तदपपर्यावर्तनम् । अग्नेरभिमुखमेव क्रियासु पर्यावर्तेतेत्यर्थः । विहारादपि न पर्यावर्तेत । महावेद्यग्नावप्रणीते विहारं पृष्ठतः कृत्वा पर्यावर्तनप्रतिषेधार्थप्रारम्भो न विहारादित्येतस्य सूत्रस्य । बोधायनः—उत्तरत उपचारो विहारस्तथाऽपवर्गो विपरीतं पित्र्येषु पादोपहतं प्रक्षालयेदङ्गमुपस्पृश्य सिचं वाऽप उपस्पृशेत् । एवं छेदनभेदनखनननिरसनपैतृकराक्षसनैर्ऋतरौद्राभिचरणीयेष्वप उपस्पृशेदिति । सिचस्तद्दशा । योऽस्मान्द्वेष्टि यं च वयं द्विष्म इत्यादीन्यभिचरणीयानि तेष्वित्यर्थः । सर्वत्रोपस्पर्शशब्दस्योपस्पर्शस्त्वाचमनमितिकोशादाचमनमर्थो यद्यपि तथाऽपि उपस्पृश्याऽऽचम्येत्यशिष्टोपयाजमानसूत्राल्लिङ्गात्तु स्पर्शमात्रमेवार्थः । यदि तत्रोपस्पर्शशब्देनाऽऽचमनं विवक्ष्येत तदाऽप उपस्पृश्याऽऽचम्येत्यत्राऽऽचम्याऽऽचम्येति द्विराचम्येत्येव वा लाघवाद्ब्रूयात् । तस्मादेवमत्र ज्ञायत उपस्पर्शशब्देन स्पर्शो चम्येत्येव वा लाघवाद्ब्रूयात् । तस्मादेवमत्र ज्ञायत उपस्पर्शशब्देन स्पर्शोनमेवेति । कात्यायनः—रौद्रं राक्षसमासुरमाभिचारिकं मन्त्रमुक्त्वा पित्र्यमात्मानं चाऽऽलभ्योपस्पृशेदप उपस्पृशेदप इति । चशब्दात्कर्म च कृत्वेत्यस्यार्थस्य लाभः । दर्शयति चैवं श्रुतिः—रुद्रियेणेव वा एतच्चारिषुः शान्तिरापस्तदद्भिः शान्त्या शमयतीति । द्विरुक्तिः प्रश्नसमाप्तिद्योतनाय । स्मृत्यन्तरे—

छेदने भेदने चैव निरासे खनने तथा ।
आत्माभिमर्शने चैव निरस्याप उपस्पृशेत् ॥ इति ।

याज्ञवल्क्यः—

रौद्रपित्र्यासुरान्मन्त्रांस्तथा चैवाऽऽभिचारिकान् ।
व्याहृत्याऽऽलभ्य चाऽऽत्मानमपः स्पृष्ट्वाऽन्यदाचरेत् ॥ इति ।

व्याहृत्योक्त्वा । अन्यत्कर्म । कात्यायनः—

पित्र्यमन्त्रानुद्रवण आत्मालम्भे तु दक्षिणे ।
अधोवायुसमुत्सर्गे प्रहासेऽनृतभाषणे ॥
मार्जारमूषकस्पर्शे आक्रोशे क्रोधसंभवे ।
निमित्तेष्वेषु सर्वेषु कर्म कुर्वन्नपः स्पृशेत् ॥ इति ।

अनुद्रवणं पठनम् । आक्रोशो रोदनम् । क्रोधसंभव उपस्पर्शे त्विदं वक्तव्यं क्रोधोत्पत्ताविति द्रष्टव्यम् । अत्राऽऽत्मशब्देन हृदयम् ।

दहं विपाप्मं परवेश्मभूतं यत्पुण्डरीकं पुरमध्यसंस्थम् ।
तत्रापि दहं गगनं विशोकस्तस्मिन्यदन्तस्तदुपासितव्यम् ॥

इति उपनिषदि परमात्मनः सर्वव्यापित्वेऽप्युपासनोपयोगित्वेन हृदयस्यैवाधिष्ठानत्वोपवर्णनादात्मनः साक्षादभिमर्शासंभवात् । बौधायनः—एकैकस्योदककमण्डलुरुपात्तः स्यादाचमनार्थ इति । शाट्यायनब्राह्मणे—सर्वेषां यज्ञोपवीतोदकाचमने नित्ये कर्मोपयतामव्यवायोऽव्याहृतिश्च यज्ञाङ्गैरिति । अव्यावृत्तिरिति पदच्छेदः । आश्वलायनः—एकाङ्गवचने दक्षिणं प्रतीयादनादेश इति । चक्षुरादेरनङ्गत्वात्तेष्वयं नियमो नास्ति । अवयवविशेषाश्रया हि शक्तयश्चक्षुरादय उच्यन्ते नावयवाः । एतन्मूलभूतं ज्ञापकं त्वथास्यै मण्डलागारच्छायायां दक्षिणस्यां नासिकायामजीतामोषधीं नस्तः करोतीत्यत्र दक्षिणग्रहणम् । छन्दोगपरिशिष्टे—

यत्रोपदिश्यते कर्म कर्तुरङ्गं न तूच्यते ।
दक्षिणस्तत्र विज्ञेयः कर्मणां पारगः करः ॥ इति ।

शाङ्खायनः—आचमनप्रभृति येनाधिकरणेन संयुज्येत न तेन व्यारहेत न च व्यवेयादित्यावृता लक्षणोद्देश उत्तरत उपाचार इति ।

छन्दोगपरिशिष्टे—

यत्र दिङ्नियमो न स्याज्जपहोमादिकर्मसु।
तिस्रस्तत्र दिशः प्रोक्ता ऐन्द्री सौम्यपराजिता॥ इति।

ऐन्द्री प्राची। सौम्युदीची। अपराजितैशानी। दिङ्नियमो दिगभिमुखतानियमो यत्र नोक्तस्तत्र प्राच्युदीच्यैशान्यन्यतमदिगभिमुखता भवेदित्यर्थः। सूत्रकारेण विशेषानुक्तेस्त्रितयमप्यभिमतं न तु तस्य नित्याः प्राञ्चश्चेष्टा इत्याश्वलायनोक्तवत्प्राङ्मुखकरणं चानादेश इति लाट्यायनद्राह्यायणोक्तवच्च प्राङ्मुखतैव भवतीति द्रष्टव्यम्। छन्दोगपरिशिष्टे—

आसीन ऊर्ध्वः प्रह्वो वा नियमो यत्र नेदृशः।
तदासीनेन कर्तव्यं न प्रह्वेन न तिष्ठता॥ इति।

ऊर्ध्वस्तिष्ठन्नित्यर्थः। न चैतस्य शास्त्रस्य सर्वत्र स्वीकार आसीनः प्रणवे प्रणवे समिधमादधातीत्यत्राऽऽसीनग्रहणस्य वैयर्थ्यापत्तिरिति वाच्यम्। एतस्याऽऽसीनग्रहणस्य महाग्निचयनविशिष्टे क्रतावारोहणतिष्ठत्त्वयोः समिदाधान इच्छातः प्राप्तयोरासीनग्रहणं नियमार्थम्। आसीन एव प्रणवे प्रणवे समिधमादधातीत्येवं रीत्या सार्थक्यसंभवेनैतस्य शास्त्रस्य महाग्निचयनरहिते क्रतौ सर्वत्र स्वीकारे बाधकाभावात्। तेन महाग्निचयनविशिष्टे क्रतावन्यत्रानियमः। महाग्निचयनरहिते क्रतौ तु विशिष्टवचनं विना सर्वत्राऽऽसीनतैवेति सिद्धं भवति। देवकर्मणि रजतं न देयमित्याह श्रुतिः—यदश्रशीर्यत तद्रजतꣳ हिरण्यमभवत्तस्माद्रजतꣳ हिरण्यमदक्षिण्यमश्रुजꣳ हि यो बर्हिषि ददाति पुराऽस्य संवत्सराद्गृहे रुदन्ति तस्माद्बर्हिषि न देयमिति। बर्हिषि यज्ञे। पैजवापोऽपि—

शिवनेत्रोद्भवं यस्मात्तस्मात्पितृवल्लभम्।
अमङ्गलं तद्यत्नेन देवकार्येषु वर्जयेत्॥ इति।

व्यासः—

दानं प्रतिग्रहो होमो भोजनं बलिरेव च।
साङ्गुष्ठेन सदा कार्यमसुरेभ्योऽन्यथा भवेत्॥ इति।

साङ्गुष्ठेनाङ्गुलिसंगताङ्गुष्ठेनेति हेमाद्रिः।

बौधायनः—

भोजनं हवनं दानमुपहारः प्रतिग्रहः।
बहिर्जानु न कार्याणि तद्वदाचमनं स्मृतम्॥ इति।

स्मृत्यन्तरे——

कुत्सिते वामहस्तः स्याद्दक्षिणः स्यादकुत्सिते ॥

कुत्सितममेध्यम् । अकुत्सितं मेध्यम् । कुत्सिताङ्गस्पर्शो वामहस्तेन कर्तव्यो दक्षिणेनाकुत्सिताङ्गस्पर्श इति तात्पर्यार्थः । ते च मेध्यामेध्ये श्रुतौ प्रदर्शिते——ऊर्ध्वं वै पुरुषस्य नाभ्यै मेध्यमवाचीनममेध्यमिति । नाभ्यै नाभ्या इत्यर्थः । नाभिस्पर्शे तु दक्षिणवामयोर्विकल्पः । तस्या मध्यवर्तित्वेनोभयधर्माक्रान्तत्वात् । प्रधानसंकल्पदिनादव्यवहितपूर्वस्मिन्दिनेऽपराह्णे नान्दीश्राद्धं कार्यम् । नान्दीमुखाह्वयं मातरामिकं स्वपराह्णक इति विष्णुनाऽऽम्रिकनान्दीश्राद्धस्यापराह्णकर्तव्यतोक्तेः । न च प्रधानसंकल्पदिनापराह्ण एव क्रियाऽस्त्विति वाच्यम् । प्रधानसंकल्पस्य पूर्वाह्ण एव कर्तव्यत्वेनासंभवात् । न च कर्ममध्य एवापराह्णे क्रियाऽस्त्विति वाच्यम् । गत्यन्तरसंभवेन बोधायनेन नान्दीश्राद्धस्य पूर्वदिने कर्तव्यताया गृह्यसूत्रे स्पष्टतयोक्तत्वेन च श्रौतकर्ममध्ये स्मार्तानुष्ठानस्यायुक्तत्वात् । एतेन श्रौताधानमध्ये स्मार्तस्य नान्दीश्राद्धस्यानुष्ठानं वदन् रामाण्डारः परास्तः । नान्दीश्राद्धात्पूर्वं मातृपूजनमवश्यमेव कर्तव्यम् । तथा च कूर्मपुराणम्——

पूर्वं तु मातरः पूज्या भक्त्या तु सगणेश्वराः ।
पुष्पैर्धूपैः सनैवेद्यैर्गन्धाद्यैर्भूषणैरपि ।
पूजयित्वा मातृगणान्कुर्याच्छ्राद्धत्रयं बुधः ॥ इति ।

एतस्माद्वचनान्मातृकापूजने नान्दीश्राद्धाङ्गता । अस्मिन्पक्षे पृथङ्न संकल्पवाक्य ऊहः । मातृकापूजनस्य करणं चापराह्ण एव ।

गणशः क्रियमाणानां मातृणां पूजनं सकृत् ।
सकृदेव भवेच्छ्राद्धमादौ न पृथगादिषु ॥ इति ।

ब्रह्मपुराणे पृथग्ग्रहणाल्लिङ्गादनङ्गत्वमपि । अस्मिन्पक्षे संकल्पवाक्ये पृथगुल्लेखः । पूर्वाह्ण एव क्रियेति ज्ञेयम् । अस्मिन्नान्दीश्राद्धे क्रतुदक्षसंज्ञका विश्वेदेवाः । इष्टिश्राद्धे क्रतुर्दक्ष इति वचनात् । इष्टिश्राद्धं कर्माङ्गं श्राद्धमिति हेमाद्रिणा व्याख्यानात् । वाक्यमप्युदाहृतं तेन——

निषेककाले सोमे च सीमन्तोन्नयने तथा ।
ज्ञेयं पुंसवने श्राद्धं कर्माङ्गं वृद्धिवत्कृतम् ॥ इति ।

इदं च जीवत्पितुरपि। तथा च मैत्रायणीयपरिशिष्टम्—

उद्वाहे पुत्रजनने पित्र्येष्ट्यां सौमिके मखे।
तीर्थे ब्राह्मण आयाते षडेते जीवतः पितुः॥ इति।

अस्मिन्नान्दीश्राद्धे शाङ्खायनसूत्रोक्तामूलदर्भविधिरेव न तु ब्रह्माण्डोक्तदूर्वाविधिः। स तु विवाहादौ क्रियमाणे नान्दीश्राद्ध इति व्यवस्था निबन्धकारैरुक्ता साऽप्यनुसर्तव्या।

असकृद्यानि कर्माणि क्रियन्ते कर्मकारिभिः।
प्रतिप्रयोगं नैताः स्युर्मातरः श्राद्धमेव च॥
आधानहोमयोश्चैव वैश्वदेवे तथैव च।
बलिकर्मणि दर्शे च पूर्णमासे तथैव च॥
नवयज्ञे च यज्ञज्ञा वदन्त्येवं मनीषिणः।
एकमेव भवेच्छ्राद्धमेतेषु न पृथक्पृथक्॥

इति कात्यायनवचनेषु प्रथमः श्लोकोऽपराभ्यामुक्तानामाधानादीनां केषांचिदेव याऽऽवृत्तावपि नान्दीश्राद्धं नाऽऽवर्तेत इत्येतदर्थस्तया व्यवस्थाप्यते। आधान इत्यादिश्लोकद्वयं पूर्वोक्तकर्मणामेव विवरणार्थं न पृथग्वाक्यम्। अतो ज्योतिष्टोमादिषु प्रतिप्रयोगं भवत्येव कर्माङ्गं वृद्धिश्राद्धमिति ज्ञेयम्। शक्तौ सत्यां बोधायनोक्तं रात्रावुदकशान्तिप्रतिसरबन्धात्मकं कर्मद्वयमपि क्रमेण तन्त्रेण वा कर्तव्यम्। ततः शक्तौ सत्यामङ्कुरारोपणमपि तदुक्तं कार्यम्। शौनकः—

आधानं गर्भसंस्कारं जातकर्म च नाम च।
हित्वाऽङ्कुरारोपणं स्यादन्यत्र शुभकर्मसु॥

आधानमत्र गर्भाधानमेव। गर्भसंस्कारसाहचर्यात्। तथो चाऽङ्कुरारोपणमिति पक्षे द्वितीयदिने पुण्याहवाचनात्पूर्वमनन्तरं वा कार्यम्। ततः प्रधानसंकल्पादिवमे गोमयेनोपलिप्तायां रङ्गवल्ल्या भूषितायां तोरणमण्डितायां शालायामिष्टदेवान्संपूज्य निष्टानामङ्गुलीं गृहीत्वा तत्संनिधौ कर्म कुर्यात्। आदौ कर्माङ्गं स्नानं कार्यम्।

शिरःस्नातः कर्म कुर्याद्दैवं पित्र्यमथापि वा॥

इति स्मृत्यन्तरात्। स्मृत्यन्तर एव—

सर्वेषु धर्मकार्येषु पत्नी दक्षिणतः सदा ।
अभिषेके विप्रपादक्षालने वामतो भवेत् ॥ इति ।

संभवे बोधायनसूत्रोक्तपवनदन्त्राचमनमन्त्रप्रोक्षणान्यपि कार्याणि ऋत्विग्भिर्यजमानेन पत्न्या च । आदौ गणपतिपूजनं कर्तव्यं निर्विघ्नार्थत्वात् । न ऋते त्वत्क्रियत इति लिङ्गात् ।

नार्चितो हि गणाध्यक्षो यज्ञादौ यत्सुरोत्तमाः ।
तस्माद्विघ्नं समुत्पन्नं मत्क्रोधजमिदं खलु ॥ इति पद्मपुराणाच्च ।

ततः पुण्याहवाचनम् । गर्गः—

गर्भाधानादिसंस्कारेष्विष्टापूर्तक्रतुष्वपि ।
वृद्धिश्राद्धं पुरा कार्यं कर्मादौ स्वस्तिवाचनम् ॥ इति ।

मार्कण्डेयः—

देवार्चनादिकर्माणि तथा गुर्वभिवन्दनम् ।
कुर्वीत सम्यगाचम्य प्रयतोऽपि सदा द्विजः ॥ इति ।

प्रयतोऽपि शुद्धोऽपीत्यर्थः । स्मृत्यन्तरे—

स्त्रीणां चैवाथ शूद्राणां सकृदाचमनं भवेत् ॥ इति ।

यत्पुरुषाणां त्रिवारं तदेव । एतच्च द्विवारं तथा स्मृत्यन्तरे—

सर्वकर्मस्वप्याचामेदादौ द्विश्चान्ततो द्विजः ॥ इति ।

संध्यासमुच्चायकोऽपिरत्र ज्ञेयः । याज्ञवल्क्यः—

स्नात्वा पीत्वा क्षुते सुप्ते भुक्ते रथ्योपसर्पणे ।
आचान्तः पुनराचामेज्जपहोमार्चनेषु च ॥ इति ।

बोधायनः—

भोजने हवने दाने उपहारे प्रतिग्रहे ।
हविर्भक्षणकाले च द्विर्द्विराचमनं स्मृतम् ॥ इति ।

हारीतः—

सपवित्रः सदर्भो वा कर्माङ्गाचमनं चरेत् ॥ इति ।

केचिदाचमनापवादमाहात्रिः—

मधुपर्के च सोमे च प्राणाहुतिषु चाप्सु च ।
आस्यहोमेषु सर्वेषु नोच्छिष्टो भवति द्विजः ॥ इति ।

नोच्छिष्ट इत्यनेनोच्छिष्टत्वाभावे बोधिते तन्निमित्ताचमनादिकर्मण्यत्र नास्तीत्यर्थात्सिध्यतीति द्रष्टव्यम् । वृद्धमनुः—

प्राणानायम्य कुर्वीत सर्वकर्माणि संयतः ॥ इति ।

कर्मप्रदीपे—

देवार्चने जपे होमे स्वाध्याये पितृकर्मणि ।
स्नाने दाने तथा ध्याने प्राणायामास्त्रयस्त्रयः ॥ इति ।

बोधायनः—

भोजनं हवनं दानमुपहारः प्रतिग्रहः ।
बहिर्जानु न कार्याणि तद्वदाचमनं स्मृतम् ॥ इति ।

ईश्वरं ध्यात्वा कर्म कुर्यात् । तथा च बोधायनः कर्मान्तसूत्रे—क उ खलु यज्ञ इति पुरुष इतीति । अत्र यज्ञस्य कर्मरूपत्वेनासंदिग्धत्वान्न तत्स्वरूपविषयः प्रश्नः किंतु यज्ञाधिदेवताविषयः । अत एव पुरुष इतीत्युत्तरम् । पुरुष इति विष्णुरुच्यते यतः सर्वात्मा । तथा च परिभाषायाम्—पुरुषो वै यज्ञो यज्ञो वै विष्णुः पुरुषः । पुरुष एवेदꣳ सर्वमिति चेति । अत्र यज्ञशब्दश्छत्रिन्यायेन वषट्कारप्रदानरहितकर्मवाच्यपि । मुख्यस्तु सवषट्कारप्रक्षेपे कर्मणि । वषट्कारप्रदाना यजतयः स्वाहाकारप्रदाना जुहोतय इति कात्यायनः । वायुपुराणे तु—

पशूनां द्रव्यहविषामृक्सामयजुषां तथा ।
ऋत्विजां दक्षिणानां च संयोगो यज्ञ उच्यते ॥

इति यज्ञशब्दार्थ उक्तः सोऽप्यविरुद्ध एव । परं होमांशे कर्मणि मुख्य इति तात्पर्यं कल्प्यं परस्पराविरोधाय । सूत्रान्तरेऽपि—ईश्वरं दहरे ध्यायेदिति । दहरशब्देन हृदयमुच्यते । तदेतत्त्र्यक्षरं हृदयमिति बृहदारण्यकात् । यज्ञशब्दस्य विष्णावपि प्रवृत्तिः । वैदिकनिघण्टावपि दर्शनात् । यज्ञो वै विष्णुरिति श्रुतेश्च । तथा च यज्ञरूपस्यैव विष्णोरभिध्यानम् । तच्च रूपं हरिवंशपद्मपुराणयोः—

वेदपादो यूपदंष्ट्रः क्रतुहस्तश्चितीमुखः ।
अग्निजिह्वो दर्भरोमा ब्रह्मशीर्षो महातपाः ॥

सर्वेषु धर्मकार्येषु पत्नी दक्षिणतः सदा ।
अभिषेके विप्रपादक्षालने वामतो भवेत् ॥ इति ।

संभवे बोधायनसूत्रोक्तपवनदन्ताचमनमन्त्रमोक्षणान्यपि कार्याणि ऋत्विग्भिर्यजमानेन पत्न्या च । आदौ गणपतिपूजनं कर्तव्यं निर्विघ्नार्थत्वात् । न ऋते त्वत्क्रियत इति लिङ्गात् ।

नार्चितो हि गणाध्यक्षो यज्ञादौ यत्सुरोत्तमाः ।
तस्माद्विघ्नं समुत्पन्नं मत्क्रोधजमिदं खलु ॥ इति पद्मपुराणाच्च ।

ततः पुण्याहवाचनम् । गर्गः—

गर्भाधानादिसंस्कारेष्विष्टापूर्तक्रतुष्वपि ।
वृद्धिश्राद्धं पुरा कार्यं कर्मादौ स्वस्तिवाचनम् ॥ इति ।

मार्कण्डेयः—

देवार्चनादिकर्माणि तथा गुर्वभिवन्दनम् ।
कुर्वीत सम्यगाचम्य प्रयतोऽपि सदा द्विजः ॥ इति ।

प्रयतोऽपि शुद्धोऽपीत्यर्थः । स्मृत्यन्तरे—

स्त्रीणां चैवाथ शूद्राणां सकृदाचमनं भवेत् ॥ इति ।

यत्पुरुषाणां त्रिवारं तदेव । एतच्च द्विवारं तथा स्मृत्यन्तरे—

सर्वकर्मस्वप्याचामेदादौ द्विश्चान्ततो द्विजः ॥ इति ।

संध्यासमुच्चायकोऽपिरत्र ज्ञेयः । याज्ञवल्क्यः—

स्नात्वा पीत्वा क्षुते सुप्ते भुक्त्वे रथ्योपसर्पणे ।
आचान्तः पुनराचामेज्जपहोमार्चनेषु च ॥ इति ।

बोधायनः—

भोजने हवने दान उपहारे प्रतिग्रहे ।
हविर्भक्षणकाले च द्विर्द्विराचमनं स्मृतम् ॥ इति ।

हारीतः—

सपवित्रः सदर्भो वा कर्माङ्गाचमनं चरेत् ॥ इति ।

क्वचिदाचमनापवादमाहात्रिः—

मधुपर्के च सोमे च प्राणाहुतिषु चाप्सु च ।
आस्यहोमेषु सर्वेषु नोच्छिष्टो भवति द्विजः ॥ इति ।

नोच्छिष्ट इत्यनेनोच्छिष्टत्वाभावे बोधिते तन्निमित्ताचमनादिकमप्यत्र नास्तीत्यर्थोऽत्रिसंमत इति द्रष्टव्यम् । वृद्धमनुः—

प्राणानायम्य कुर्वीत सर्वकर्माणि संयतः ॥ इति ।

कर्मप्रदीपे—

देवार्चने जपे होमे स्वाध्याये पितृकर्मणि ।
स्नाने दाने तथा ध्याने प्राणायामास्त्रयस्त्रयः ॥ इति ।

बोधायनः—

भोजनं हवनं दानमुपहारः प्रतिग्रहः ।
बहिर्जानु न कार्याणि तद्वदाचमनं स्मृतम् ॥ इति ।

ईश्वरं ध्यात्वा कर्म कुर्यात् । तथा च बोधायनः कर्मान्तसूत्रे—कं च खलु यज्ञ इति पुरुष इतीति । अत्र यज्ञस्य कर्मरूपत्वेनासंदिग्धत्वान्न तत्स्वरूपविषयः प्रश्नः किंतु तदभिदैवतविषयः । अत एव पुरुष इत्युत्तरम् । पुरुष इति विष्णुरुच्यते यतः सर्वात्मा । तथा च परिभाषायाम्—पुरुषो वै यज्ञो यज्ञो वै विष्णुः पुरुषः । पुरुष एवेदं सर्वमिति चेति । अत्र यज्ञशब्दश्छत्रिन्यायेन वषट्कारप्रदानरहितकर्मवाच्यपि । मुख्यस्तु सवषट्कारप्रक्षेपे कर्मणि । वषट्कारप्रदाना यजतयः स्वाहाकारप्रदाना जुहोतय इति कात्यायनः । वायुपुराणे तु—

पशूनां द्रव्यहविषामृक्सामयजुषां तथा ।
ऋत्विजां दक्षिणानां च संयोगो यज्ञ उच्यते ॥

इति यज्ञशब्दार्थ उक्तः सोऽप्यविरुद्ध एव । परं त्वेतादृशे कर्मणि मुख्य इति तात्पर्यं कल्प्यं परस्पराविरोधाय । सूत्रान्तरेऽपि—ईश्वरं त्र्यक्षरे ध्यायेदिति । त्र्यक्षरशब्देन हृदयमुच्यते । तदेतत्त्र्यक्षरं हृदयमिति बृहदारण्यकात् । यज्ञशब्दस्य विष्णावपि प्रवृत्तिः । वैदिकनिघण्टावपि दर्शनात् । यज्ञो वै विष्णुरिति श्रुतेश्च । तथा च यज्ञरूपस्यैव विष्णोरभिध्यानम् । तच्च रूपं हरिवंशपद्मपुराणयोः—

वेदपादो यूपदंष्ट्रः क्रतुहस्तश्चितीमुखः ।
अग्निजिह्वो धर्मरोमा ब्रह्मशीर्षो महातपाः ॥

अहोरात्रेक्षणो दिव्यो वेदान्तश्रुतिभूषणः ।
स्रुवतुण्डश्चाऽऽज्यनासः सामघोषस्वनो महान् ॥
धर्मसत्यमयः श्रीमान्क्रमविक्रमसत्क्रियः ।
प्रायश्चित्तनखो धीरः पशुजानुर्महाभुजः ॥
उद्गात्रान्त्रो होमलिङ्गः फलबीजमहौषधिः ।
वाय्वन्तरात्मा मन्त्रस्फिग्विकृतः सोमशोणितः ॥
वेदीस्कन्धो हविर्गन्धो हव्यकव्यातिवेगवान् ।
प्राग्वंशकायो द्युतिमान्नानादीक्षाभिरन्वितः ॥
दक्षिणाहृदयो योगी महासत्रमयो महान् ।
उपाकर्मोष्ठरुचकः प्रवर्ग्यावर्तभूषणः ॥
नानाछन्दोगतिपथो गुह्योपनिषदासनः ।
छायापत्नीसहायो वै मेरुशृङ्गमिवोच्छ्रितः ॥ इति ।

स्मृत्यन्तरे—

त्रिमात्रः प्रणवो वाच्यः कर्मारम्भे मनीषिभिः ॥ इति ।

*सुमुखश्चैकदन्तश्चेत्यादीनि द्वादश नामानि मङ्गलार्थं पठेत् । गणेश*पुराण उक्तत्वात् । एवमन्यानपि श्लोकान्मङ्गलार्थं पठेत् । मार्कण्डेयः—

संकल्प्य विधिवत्कुर्यात्स्नानदानव्रतादिकम् ॥ इति ।

स्मृत्यन्तरे—

संकल्प्य विधिवत्कुर्यात्स्नानदानव्रतार्चनम् ।
जपं होमं च यागं च विवाहादि च मङ्गलम् ॥ इति ।

विष्णुरपि—

संकल्प्य च यथा कुर्यात्स्नानदानव्रतादिकम् ।
अन्यथा पुण्यकर्माणि निष्फलानि भवन्ति हि ॥ इति ।

*यथा यथावदित्यर्थः । पुण्येत्युक्तेर्भोजनादौ* दृष्टार्थे न संकल्पः ।
कालहेमाद्रौ—

स्मरेत्सर्वत्र कर्मादौ चान्द्रसंवत्सरं सदा ॥ इति ।

देवलः—

मासपक्षतिथीनां च निमित्तानां च सर्वशः ।
उल्लेखनमकुर्वाणो न तस्य फलभाग्भवेत् ॥ इति ।

चशब्दाद्वारादेर्ग्रहणम् । तथा च गर्गः—

तिथिनक्षत्रवारादि साधनं पुण्यपापयोः ।
वर्षमासादिकानां च निमित्तानां च सर्वशः ॥
उल्लेखनमकुर्वाणो न तस्य फलभाग्भवेत् ॥ इति ।

निमित्तपदं वर्षमासादिविशेषणमिति केचित्तन्न । संक्रमादिनिमित्तानुल्लेखापत्तेः । अन्ये तु निमित्तत्वं वर्षमासादिविशेषणमनिमित्तवर्षमासाद्यनुल्लेखार्थम् । चकाराद्ग्रहणादिग्रहणम् । निमित्तपदेन निमित्तत्वावच्छिन्नग्रह इत्याहुः । तदपि न । चद्वयेन विशेषणत्वाप्रतीतेः । सर्वश इत्यनेन निमित्तत्वावच्छिन्नग्रहाच्च । एवं च पृथग्वर्षमासादिग्रहो निमित्तार्थं वा वर्षमासादिशब्दोल्लेखनार्थं वा । व्यतीपाताद्यनेकनिमित्तक एकस्याप्यनुल्लेखे तन्निमित्तकस्नानादि पुनः कार्यमिति हेमाद्रिः । अत्र केचिद्ग्रहणादिनिमित्तस्य वर्षमासपक्षतिथ्यादिकालविशेषमात्रस्य प्रयागादिदेशविशेषमात्रस्य चोल्लेखः कार्यो न तु व्यापकानामयनमध्यदेशादीनामित्याहुः । अन्ये तु यथा प्रयागादिषु तीर्थेषु पुण्येष्वायतनेषु चेति मात्स्ये प्रयागादिविशेषस्याङ्गत्वबोधकं तथैवाऽऽर्यावर्तः पुण्यभूमिर्मध्यं विन्ध्यहिमालयोरिति भविष्योत्तरवचनमार्यावर्तादिसामान्यस्यापि । ततश्चाङ्गत्वाविशेषादार्यावर्ताद्युल्लेखोऽप्यावश्यकः । अन्यथा प्रयागाद्युल्लेखोऽपि न स्यादित्याहुः । कालस्य तदर्थत्वमुल्लेखेनैव । उक्तं च कालहेमाद्रौ—

उद्देशेन हि तादर्थ्यं कालस्य तु विविच्यते ॥ इति ।

तिथिवारनक्षत्राद्युल्लेखविषये केचिन्नवीना आहुः—यावन्ति कर्माधिकरणीभूतानि तिथिवारनक्षत्रादीनि तावतां सर्वेषामेवोल्लेखो नत्वारम्भमात्राधिकरणीभूतानां तावतामनन्वयापत्तेरिति । अनियतदिवसादिसाध्येषु कर्मसु तु सामान्याकारेणैवोल्लेखो नतु तत्तद्रूपेण । असंभवात् । इत्येवंप्रकारेणैव निर्वाहः । प्रायोगिकास्त्वारम्भमात्राधिकरणीभूतानामेव तिथिवारनक्षत्रादीनामुल्लेखं कुर्वन्ति । जातूकर्ण्यः—

उक्त्वा तत्तत्स्वर्गफलं कर्म संकल्पयेद्बुधः ॥ इति ।

दर्शपूर्णमासादियाजमानसूक्तेऽपि—समस्ते मन्त्रार्थं श्रूयमाणं यजमानः प्राप्यते तथा नित्येषु यज्ञाङ्गेषु यानि तु पाकयतिः श्रावयति

दधाऽऽधारस्तोभवेतायां नीर्दस्तायां चार्थवादा इतरे तथाऽन्येषु यज्ञाङ्गेषु पुरीषवतीं करोति प्रजयैवैनं पशुभिः पुरीषवन्तं करोति यद्यूपं मिनोति सुवर्गस्य लोकस्य प्रज्ञात्या इषे त्वोर्जे त्वेति शाखामाच्छिनत्तीषमेवोर्जं यजमाने दधातीति। समस्ते नियतेऽनियते च साङ्गे क्रतौ क्रतुशब्दप्रसारेणार्त्विग्विधिभिर्विहितर्त्विक्कर्तृके कर्मणि । तस्मादग्निहोत्रस्य यज्ञक्रतोरित्यारभ्य तस्मात्पशुबन्धस्य यज्ञक्रतोरित्येवमन्तेनाग्निहोत्रदर्शपूर्णमासचातुर्मास्यपशुबन्धक्रतुरूपाणामपि क्रतुशब्देन गौणेनाप्युपात्तानामिह ग्रहणम् । ज्योतिष्टोमस्य तु मुख्यत्वेनोपात्तस्य । यागविशेष एव सपशुके सोमाख्ये क्रतुशब्दो याज्ञिकप्रसिद्ध्या रूढः। वेदे च वाजपेये। तस्माद्वाजपेये सर्वे यज्ञक्रतवोऽवरुध्यन्त इत्यादौ । ततोऽन्यत्र पञ्चमहायज्ञेषु यज्ञसत्रशब्द इव गौणः । प्रकृते मुख्यमात्रग्रहणे हविर्यज्ञयाजमानकर्मविधानं विरुध्येत । तस्माद्गौणमुख्यानां ग्रहणम् । यज्ञं व्याख्यास्याम इत्यत्र विधिलक्षणानि कर्माणि कर्मभिर्निःश्रेयसमित्यादौ च प्रयुक्तौ यज्ञशब्दकर्मशब्दावपहाय क्रतुशब्दं प्रयुञ्जानेनाऽऽचार्येणर्त्विक्साध्यान्येव कर्माणि क्रतुशब्देन गृहीतानीति गम्यते । अर्थं प्रयेद भूयादित्यभ्यर्थते तदर्थं फलमिति यावत् । तं क्रतौ साध्यं विधिश्रुत्येष्टसाधनयोग्यपरया नियतेषु निःश्रेयसं लिङ्गरूढकतया विश्वजिदादौ स्वर्गं रात्रिसत्रादौ प्रतिष्ठादिकं ग्रामादिपदवद्वाक्यसहकृतया च वायव्यं श्वेतमालभेत भूतिकाम इत्यादौ भूत्यादिकमर्थत्वेनाऽऽवेदितं यजमानः कामयते । न च वर्तमानापदेशादनुवादः कामस्येति वाच्यम् । निष्प्रयोजनत्वादानर्थक्यमेव स्यात् । तस्मात्कामयेतेति विधौ प्रयोगोऽप्राप्तत्वात् । न च फलकामनायां विधिरस्ति कामनेच्छा तु वस्तुसौन्दर्यादिज्ञानादेव जायते न तु विधिना । विधिर्हि न फले प्रवर्तकः । अत एव—

फलांशे भावनायास्तु प्रत्ययो न विधायकः ।

इत्युक्तम् । तस्मात्फलसाधने विधिरित्येव वाच्यम् । तत्र वाचिको यः कामाभिनयोऽप्राप्तः स एव कामयतिना विहितः । तं यजमान एवेत्ययं नियमोऽपि दुष्यते । यद्यपि नानावेदगतं फलं तथाऽपि तत्त्विग्भिः संकल्पनीयं समाख्याया बाधात् । अत एव यो यक्ष्य इत्युपदेक्ष्यत्यत्राऽऽत्मनेपदं श्रूयते । उक्तत्वेत्यनेन संकल्पस्य वाचिकत्वमुक्तं तदेव प्रयानं यजमानकर्म श्रुत्येवोक्तं तेन यज्ञे प्रवर्त्स्यमानत्वेन न यजमानो न चारब्धयज्ञो यजमानः स्यात्किंतु यक्ष्यमाणोऽतोऽनेन यज्ञेन

यक्ष्य इति कृतवाचिकसंकल्पः । तत्र श्रूयमाणं फलमपि कामनाविषयत्वेनानुवदेदमुककाम इति तद्वाक्यशेषत्वेन । अन्यथा तत्फलस्यानन्वये संकल्पवाक्यमसमर्थं स्यात् । यागेन भावयिष्य इत्युक्ते किमित्याकाङ्क्षा जायते तत्पूरणायामुककाम इति वक्तव्यमित्यर्थः । अत एवान्यफलकर्मणि ऋत्विक्कर्तृत्वविधानार्थं यजतीति परस्मैपदनिर्देशः । समस्ते साङ्गेऽपि क्रतौ साध्यत्वेनेष्टं भावयेदित्युक्तं तच्च यज्ञारम्भे प्रधानफलमङ्गारम्भे चाङ्गफलमित्युक्तं भवति । तुशब्देनोत्सर्गबाधो न सर्वेष्वङ्गेष्वर्थवादैः फलकल्पना नाप्यङ्गेषु फलश्रुतिरर्थवाद एवेति किंतु नित्येषु फलनिरपेक्षया विधिश्रुत्या फलवत्प्रधानाङ्गेषु तथा नियतेषु फलभावेऽपि नियमेनानुष्ठेयेषु यज्ञाङ्गेषु यज्ञफलवत्तया फलवत्सु यान्यर्थ्यमानानि पुरुषेण नित्याङ्गसाध्यानि कामयतिधातुः श्रावयत्यभिधयैव बोधयति तान्येवाङ्गफलानि नान्यानि तान्येव यजमान एव कामयत इति । उदाहरणमाह—यथाऽऽघारयोरूर्ध्वतायां नीचैस्तायां चेत्येतेनोर्ध्वमाघारयेत्स्वर्गकामस्य न्यञ्चं वृष्टिकामस्येति । यथा यजमान एव कामयते तथा यान्कामयेत यजमानः सं भावयत्येनानिति व्याहृतिविधाने स्थानविशेषलक्षणो गुणो यजमानफलार्थं विधीयमानो यजमानेनैव कामयितव्यः संकल्पेनेत्यर्थः । एतत्सूत्रे नियमविधानेन फलितां परिसंख्यां दर्शयति—अर्थवादा इतर इति । आघारस्येत्यनुवर्तते । आघारगतगुणविध्यर्थवादा इतर इत्यर्थः । यथा संततमाघारयतीत्यत्र प्राणानामन्नाद्यस्य संतत्या इत्येवमाद्योऽर्थवादा आघारयोस्तथाऽन्येष्वपि नियतेषु यज्ञाङ्गेषु प्रकारान्तरसिद्धा अर्थवादा एवेत्याह—तथाऽन्येषु यज्ञाङ्गेषु पुरीषवतीं करोति प्रजयैवैनं पशुभिः पुरीषवन्तं करोतीत्यादिना यजमाने दधातीतीत्यन्तेन । इतीति नानाप्रकाराणामर्थवादानां ग्रहणार्थम् । अन्यच्च याजमानसूत्रे—द्रव्यसंकल्पनं यजमानस्य दक्षिणादानं ब्रह्मचर्यं जपाश्चेति । यज्ञाङ्गभूतं द्रव्यं सिद्धं जात्यादिना पश्चादङ्गत्वेन तत्तद्देवताविहितमपि नर्त्विग्भिः संकल्प्यं तत् । न हि तत्र तत्र देवे संपादनं विधीयतेऽपि तु सिद्धस्याङ्गताऽतो द्रव्यप्रकल्पनं पूर्वमर्थसिद्धं तच्च स्वार्थसिद्ध्यर्थं यजमान एव कुर्यात् । नहि तत्र ऋत्विजो दक्षिणालोभेन प्रवृत्ताः स्वयं व्ययं कर्तुं प्रभवन्ति । अत आज्यव्रीहितण्डुलपशुगोजाश्वादीनां संपादनं यजमानः स्वद्रव्यव्ययेन साक्षाद्वाऽन्येन वा संपादयेत् । अत्र यजमानग्रहणं

संकल्पे प्रवर्तमानस्य द्रव्यप्रकल्पनं मा भूत् किंतु संकल्पात्पूर्वमेव वक्ष्यमाणस्येति । यजमानपदं द्रव्यप्रकल्पनपदेन न संबद्धमिति पुनरग्निभिरेव संबन्धो यथा स्यादिति सप्रयोजनम् । दक्षिणादानादित्रयेण संबध्यत उत्तरत्रानुवर्तते च । दक्षिणादानं स्वत्वत्यागरूपं नास्वामिनः संभवति । सामर्थ्यमपि श्रुत्या बाध्यतेऽनड्वान्होत्रा देय इत्यादिना । अष्टाङ्गमैथुनत्यागो ब्रह्मचर्यम् । तद्यजमानसंस्कार एव । समाख्यायाः सामर्थ्येन बाधात् । ऋत्विजां हि ब्रह्मचर्याभावेऽपि कर्तृत्वसंभवात् । तस्माद्दीक्षासंस्कारवत्स्वामिनः संस्कार इति भवत्यदृष्टार्थः संस्कारो यजमानस्यैव । अत एव लिङ्गेन समाख्याबाधे सति योऽस्याग्नीनाधास्यमानो भवति स एतां रात्रिं ब्रह्मचर्यं चरतीत्यध्वर्योर्ब्रह्मचर्यविधानम् । आश्वलायनस्तु ऋत्विजामपि ब्रह्मचर्यमाह—न मांसमश्नीयुर्न स्त्रीमुपेयुरा क्रतोरपवर्गादिति । अपवर्गः समाप्तिः । अष्टाङ्गमैथुनं दक्षेण प्रदर्शितम्—

स्मरणं कीर्तनं केलिः प्रेक्षणं गुह्यभाषणम् ।
संकल्पोऽध्यवसायश्च क्रियानिर्वृत्तिरेव च ॥
एतन्मैथुनमष्टाङ्गं प्रवदन्ति मनीषिणः ।
विपरीतं ब्रह्मचर्यमेतदेवाष्टलक्षणम् ॥ इति ।

अभिलाषपूर्वकं स्मरणकीर्तनप्रेक्षणानि निषिद्धानि । केलिः परिहासादिबाह्यचेष्टा । गुह्यभाषणं संभोगार्थं रहोमन्त्रणम् । संकल्पो मानसं कर्म । अध्यवसायः संभोगनिश्चयः । क्रियानिर्वृत्तिः क्रियानिष्पत्तिः । यत्र कुत्रापि वेदे पठितानां मन्त्राणां जपः पत्न्या अपि । वक्ष्यति च धर्मेषु न हि भर्तृविप्रवासे स्त्रिया नैमित्तिके दाने स्तेयमुपदिशन्तीति तस्या अपि स्वाम्यमस्त्येवेति प्रवसति यजमाने दक्षिणादानं पत्न्याऽपि कार्यम् । वरो देयः । छिद्राणि दद्यादित्यादिना विहितं स्कन्नादिनिमित्तं दानमपि दक्षिणाशब्देन ग्रहं प्रदेयमात्रग्रहणात् । अन्यच्च सूत्रे—प्रत्यगाशिषो मन्त्रान्कर्मकरणाञ्जपति यथोपदिश्यमानानुपतिष्ठतेऽनुमन्त्रयतेऽभिमन्त्रयतेऽभिमृशति जपतीति चेति । दर्शितव्याख्यानमेतत्सूत्रम् । अन्यच्च सूत्रे—यावदुक्तं कर्माणि करोतीति । यजमान एवोपस्थानादिजपानाद्यङ्गभूतानि कर्माण्यपि यावदुक्तमनतिक्रम्य करोति प्रत्यगाशीर्मन्त्रैरुत्सर्गेण जपस्तैः कर्माणि यावद्विहितान्येव करोति । अस्माभिर्यावत्कर्तव्यं यजमानस्योच्यते तावदेव तेन कार्यं न यजमानकाण्डविहितं

सर्वमिति । अन्यच्च सूत्रे—यावदुक्तं पत्न्याः कर्माणि ब्रह्मचर्यं जपार्थेति । दंपत्योरविशेषेण प्राप्तानि याजमानकर्माणि पत्न्या नियम्यन्ते । कुतो यदि याजमानं कर्म सर्वं तस्या अपि स्यात्तदा पत्न्यवेक्षत इत्यनर्थकं स्यात् । अतो ज्ञायते यावदुक्तमेव तया कार्यमिति । अत्र यावदुक्तमेव कर्माणीति नियमो न तु यावदुक्तं कर्माण्येवेति । न ब्रह्मचर्यजपपरिसंख्येति वक्तुमुक्तं ब्रह्मचर्यं जपार्थेति । ब्रह्मचर्यं तद्यजमानब्रह्मचर्येणार्थात्तस्या अपि सिद्धमेव तथाऽपि मनोविकारमपि निरुन्ध्यादिति वक्तुं पुनर्वचनम् । पत्न्याः प्रत्यगाशिषां मन्त्राणां याजमाने न विनियोग इति तेषां लिङ्गेन जपार्थोऽयमारम्भः । जपशब्देनोपस्थानादिकमपि । स्वस्याः प्रत्यगाशिषो नियच्छन्त इति । स्त्रीणामप्यधिकार उक्तो धर्मसूत्रे—जायापत्योर्न विभागो विद्यते पाणिग्रहणाद्धि सहत्वं कर्मसु तथा पुण्यक्रियासु द्रव्यपरिग्रहेषु चेति । कात्यायनोऽपि—ब्राह्मणोऽग्नीनादधीत स्वर्गकामो यजेतेति विशिष्टलिङ्गश्रवणात्स्त्रिया अनधिकारे प्राप्त आह—स्त्री चाविशेषाद्दर्शनाच्चेति । स्त्री चाधिक्रियते । कुत एतत् । अविशेषात् । यस्माच्छ्रूयमाणमपि लिङ्गं न विशेषप्रत्यायकं भवति । अतो न पुंसामेवाधिकार इति । उद्दिश्यमानविशेषणं ह्येतत्स्वर्गकामो यजेतेति विधिसंस्पर्शाभावात् । अविवक्षितं लिङ्गं संख्या च । यत्र पुनर्विधिसंस्पर्शोऽस्ति तत्र लिङ्गं संख्या चेत्येतद्द्वयं विवक्षितमेव । यथा पशुमालभेतेत्यत्र तद्विशेषणं पुंस्त्वमेकत्वं चोभयं विधीयते विशिष्टपश्वालम्भोऽन्यथा न भवति । तस्मात्स्त्रिया अप्यधिकारः । दर्शनाच्च दृश्यते चायमर्थो यथा स्त्रिया अप्यधिकार इति । मेखलया यजमानं दीक्षयति योक्त्रेण पत्नीमिति योक्त्रविधिपरे वाक्ये पत्न्या अप्यधिकारं दर्शयति । सा च पुंसा सहाधिक्रियते न पृथक् । क्रियाफलं च सकलमेकैकस्य भवति न विभागेन स्वर्गकामो यजेतेत्यनेन यथा यजमानोऽभिधीयत एवं पत्न्यपीति । यथा यागेन यजमानः फलं साधयति तथा पत्न्यपीति । वाक्यान्तरेण सह क्रियाऽनयोः । तथा च श्रवणम्—

नास्ति स्त्रीणां पृथग्यज्ञो न व्रतं नाप्युपोषणम् ।
शुश्रूषयति भर्तारं तेन स्वर्गे महीयते ॥ इति ।

तस्मादुपनीताधीतानां त्रैवर्णिकानां तज्जातिस्त्रीणां च ब्राह्मणविहितेष्वाधानाग्निहोत्रदर्शपूर्णमासमसोमादिकर्मस्वधिकार इति सिद्धम् । जैमि-

निरपि—लिङ्गविशेषनिर्देशात्पुंयुक्तमैतिशायन इति । स्वर्गकाम इत्यत्र पुंस्त्वस्य प्रकृत्यर्थत्वाद्विवक्षितत्वमिति स्त्रिया नाधिकारः ।

भार्या पुत्रश्च दासश्च त्रय एवाधनाः स्मृताः ।

इति स्मरणाच्चेति प्राप्ते प्रकृत्यर्थत्वेऽप्युद्देशविशेषणत्वादविवक्षितमेव पुंस्त्वं क्लीबाद्यर्थत्वात्तु संख्यातुल्यत्वमेव । न चाधनत्वं पित्रादिदत्तसंभवात् । धर्मे चार्थे चेत्यादिवचनाच्च । पत्नीशब्दस्य यज्ञसंयोगे निष्पत्तेः । भार्या पुत्रश्चेति वचनं स्वस्वातन्त्र्यपरम् । तस्मात्स्त्रिया अप्यधिकार इति सिद्धान्तः । सूत्रार्थस्तु स्वर्गकाम इति लिङ्गविशेषनिर्देशात्पुमधिकारकर्मैतिशायन आचार्यो मन्यते । स्वमते तु संख्यावदविवक्षितमिति स्त्रिया अप्यधिकार इति । अन्यच्च जैमिनिः—स्ववतोस्तु वचनादैककर्म्यं स्यादिति । स्त्री पृथगेव यजेत न तु पत्या सह । यजेतेत्येकत्वस्य कर्तरि विवक्षितत्वादिति प्राप्ते यजमानप्रयोगे पत्न्याज्यावेक्षणादेः पत्नीप्रयोगे च यजमानावेक्षणादेर्लोपप्रसङ्गात् । ऋत्विङ्न्यायेन पत्न्युपादाने स्वामिवचनपत्नीयजमानशब्दानुपपत्तेः संसृष्टद्रव्ययोर्विभागनिषेधाच्च न पृथक्पृथक्त्वं किंतु सहैव दंपत्योरेककर्तृत्वं तदैक्याच्च यजेतेत्येकवचनमग्नीषोमौ देवतेतिवदिति सिद्धान्तः । सूत्रार्थस्तु स्ववतोः स्त्रीपुंसयोर्द्रव्यवतोराज्यावेक्षणान्वारम्भादिवचनादैककर्म्यं सहप्रयोगः स्यादिति । आधानादिवत्सोमात्पूर्वं कर्मोपयुक्तान्मन्त्रान्भार्याऽप्यधीते पितुः पत्युर्वर्त्विग्भ्यो वा सकाशात् । इदं चार्थत एव सिद्धम् । अथ संकल्पवाक्ये मतभेदेन प्रकारः । नित्ये कौमारिलमते तावदधिकारवाक्यचोदितफलाभावेऽपि मन्त्रलिङ्गार्थवादादिबहुवाक्यपर्यालोचनयोपात्तदुरितक्षय एव फलत्वेन परिकल्पित इति तदनुरोधादुपात्तदुरितक्षयार्थं ज्योतिष्टोमेन यक्ष्य इति नित्ये ज्योतिष्टोमे संकल्पः । एतदुभयमतेऽपि नैमित्तिकेऽपि यत्र जातेष्ट्यादौ फलश्रवणं तत्र निमित्तफलसंवलिताधिकारात्पुत्रजन्मनिमित्तं पुत्रगतपूतत्वादिकामो जातेष्ट्या यक्ष्य इत्यादि संकल्पः । यत्र तूपरागे स्नायादित्यादौ निमित्तमात्रश्रवणं तत्रोपरागनिमित्तं स्नानं करिष्य इत्यादिसंकल्पः । काम्ये त्वधिकारवाक्यप्रतिपादितफलोद्देशेन वृष्टिकामः कारीर्या यक्ष्य इत्यादिसंकल्प इति संक्षेपः । विस्तरस्तु मतद्वये सर्वशक्त्यधिकरणे तिर्यगधिकरणे च द्रष्टव्यः । शारीरकभाष्ये तु जन्माद्यस्य यत इति सूत्रे यतो वेत्यादिविषयवाक्यव्याख्याने ब्रह्मणः सकाशादेव प्र-

जातमुत्पन्नं यथा मृदः सकाशादुत्पन्नो घटः स्वोपादानं मृदमत्यक्त्वा जीवति प्रलीयमानोऽपि मृद्येव प्रलीयत एवं ब्रह्मणः सकाशाज्जातं जगदपि ब्रह्मात्यक्त्वा जीवति प्रलीयमानं च ब्रह्मण्येव प्रलीयत इत्युक्त्वोत्तरशास्त्रसंदर्भेण ब्रह्मणि समन्वयादिकं प्रतिपाद्य ब्रह्मार्पणबुद्ध्यैव कर्माणि कर्तव्यानीत्युक्तम् । तदत्र श्रीपरमेश्वरप्रीत्यर्थं ज्योतिष्टोमेन यक्ष्य इत्यादिस्वाभीष्टसदाशिवगजाननारायणाद्युपास्यवाच्छिन्नपरमेश्वरप्रीत्युद्देशेन संकल्पः कार्यः । यद्यपि संकल्पः कर्म मानसमित्युक्तं तथाऽपि श्रौतकर्मसु वाचिकोऽपि । यो यक्ष्य इत्युक्त्वा न यजते त्रैधातवीयेन यजेतेति श्रुतावुक्त्वेत्युक्तेः । अत्र जलहस्तत्वाद्याचारात् । परिशिष्टे—

यत्राऽऽम्नातं स्वशाखायां पारक्यमविरोधि यत् ।
विद्वद्भिस्तदनुष्ठेयमग्निहोत्रादिकर्मवत् ॥ इति ।

शाखान्तरोपसंहारे यथोपदेशं कुरुत इति वैश्वदेवसूत्रमपि प्रमाणम् । वैश्वदेव एव यथोपदेशकरणनियमादन्यत्रैवोपसंहारो न वैश्वदेवे । स च पाक्षिक एव । स च सूत्राविरोधेन । यत्र शाखान्तरीयपक्षस्य कण्ठोक्त्या निषेध एवशब्दश्रवणं वा तत्र तु नैवोपसंहारः । पारक्यमविरोधि यदित्यनन्तरोदाहृतपरिशिष्टवचनात् । न च शाखान्तरोक्तप्रधानाङ्गानां स्वशाखात आधिक्ये तस्याप्युपसंहारः पक्षे स्यादिति वाच्यम् ।

बह्वल्पं वा स्वगृह्योक्तं यस्य यावत्प्रचोदितम् ।
तस्य तावति शास्त्रार्थे कृते सर्वं कृतं भवेत् ॥

इति वचनेन तन्निरासात् । गृह्यग्रहणस्य श्रौतकर्मोपलक्षणार्थत्वात् । न चैवं कस्याप्युपसंहारो माऽस्त्विति वाच्यम् । यथोपदेशं कुरुत इत्यनेन शाखान्तरीयोपसंहारस्य वैश्वदेवातिरिक्तस्थले प्रवृत्तेरुक्तत्वात् । तत्रेयं व्यवस्था । यत्र स्वशाखे सामान्यत उक्तं तद्विषये शाखान्तरे स्वसूत्राविरुद्धं प्रकृतोपयोगि किंचिदधिकमुक्तं चेत्तावन्मात्रं ग्राह्यमेव । यथा सामान्यतो दर्भैरग्नीन्परिस्तृणातीत्युक्ते दर्भसंख्याविशेषस्वीकारः । स्वशाखापेक्षया शाखान्तरे विशेषो विकृतौ यः सोऽपि स्वीकार्य एव । यथा दीक्षणीयेष्ट्यादौ प्रधानस्वरविशेषः । अयं चापरो विशेषः । स्वशाखोक्तेषु शाखान्तरोक्तोपसंहारपक्षे तदुक्तेषु च पक्षेषु मध्ये यो द्विशाखोक्त-

वाक्यतापन्न आंद्यात्रशास्त्रैकवाक्यतापन्नो वा तत्तद्विषये भवति स एव ग्राह्य इति सर्वं रमणीयम् । बृहन्नारदीये—

विष्ण्वर्पितानि कर्माणि सकलानि भवन्ति हि ।
अनर्पितानि कर्माणि भस्मानि न्यस्तहव्यवत् ॥
नित्यं नैमित्तिकं काम्यं यच्चान्यन्मोक्षसाधनम् ।
अर्पितं विष्णवे सर्वं सात्त्विकं सफलं भवेत् ॥ इति ।

विष्णुस्मरणात्सर्वं पूर्णं भवति । तथा च स्मृतिः—

प्रमादात्कुर्वतां कर्म प्रच्यवेताध्वरेषु यत् ।
स्मरणादेव तद्विष्णोः संपूर्णं स्यादिति श्रुतिः ॥ इति ।

अनाज्ञातादिमन्त्रत्रयजपवैष्णवृग्जपव्याहृतिजपाः सर्वसंधानार्थं वक्तव्याः । तथा च स्मृत्यन्तरे—

अनाज्ञातादित्रितयं वैष्णवीमृचमेव च ।
समस्तव्याहृतीश्चैव जपेद्यज्ञस्य पूर्तये ॥ इति ।

सर्वयाज्ञिकोपयोगायायमुपोद्घात उक्तः । अयं दर्शपूर्णमासाद्यर्थोऽपि भवति । न तु केवलं सोमार्थ एवेति द्रष्टव्यमिति दिक् ।

इति श्रीमदग्निहोत्रोपाह्वश्रीगणेशदीक्षिततनूजगोपीनाथदीक्षितविरचिष्यमाणसूत्रव्याख्यानोपयोगिसर्वोपभूतोपोद्घातः समाप्तः ।

